काव्यमाला. ७१.

श्रीहेमचन्द्रविरचितं

# काव्यानुशासनम् ।

सटीकम्

मूल्यं सपादं रूप्यकद्वयम् ।



KĀVYAMĀLĀ. 70.

THE

# KĀVYĀNUŚĀSANA

OF

## HEMACHANDRA

**With his own gloss.**

EDITED BY

MAHĀMAHOPĀDYĀYA PAṆḌIT S'IVADATTA

HEAD PAṆḌIT AND SUPERINTENDENT, SANSKRIT DEPARTMENT,
ORIENTAL COLLEGE, LAHORE,

AND

KĀS'ĪNĀTH PĀṆDURANG PARAB.

REVISED BY

WĀSUDEV LAXMAṆ S'ĀSTRĪ PAṆS'ĪKAR.

Second Edition.

PUBLISHED BY

PĀNDURANG JĀWAJĪ,

PROPRIETOR OF THE 'NIRNAYA-SAGAR' PRESS,

BOMBAY.

1934.

*Price 2¼ Rupees.*



काव्यमाला ७०.

श्रीहेमचन्द्रविरचितं

# काव्यानुशासनम् ।

## सटीकम् ।

महामहोपाध्यायपण्डितशिवदत्तशर्मणा, मुम्बापुरवासिपरबोपाह्व-
पाण्डुरङ्गात्मजकाशीनाथशर्मणा, पणशीकरेत्युपाह्व-
लक्ष्मणात्मजवासुदेवशर्मणा च संशोधितम् ।

द्वितीयावृत्तिः ।

तच्च
मुम्बय्यां
पाण्डुरङ्ग जावजी
इत्येतैः स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये मुद्रयित्वा प्रकाशितम् ।

शाकः १८५५, सन १९३४.

मूल्यं सपादं रूप्यकद्वयम् ।



# हेमचन्द्रः ।

अयं श्वेताम्बरजैनाचार्यश्री**हेमचन्द्रः** कदा कतमं भूमिमण्डलं मण्डयामासेति जिज्ञासायामनेकग्रन्थपर्यालोचने प्रवृत्त Dr. P. Peterson महाशयानां Fifth Report पुस्तके—

'तत्पट्टपूर्वाद्रिसहस्ररश्मिः **सोमप्रभाचार्य** इति प्रसिद्धः ।
श्रीहेमसूरेश्च **कुमारपालदेवस्य** चेदं न्यगदच्चरित्रम् ॥'

इति **सोमप्रभाचार्य**विरचित**हेमकुमारचरित्र**काव्यतः,

'स्तुमस्त्रिसंध्यं प्रभु**हेमसूरे**रनन्यतुल्यामुपदेशशक्तिम् ।
अतीन्द्रियज्ञानविवर्जितोऽपि यः क्षोणिभर्तुर्व्यधित प्रबोधम् ॥
सत्त्वानुकम्पा न महीभुजां स्यादित्येष क्लृप्तो वितथः प्रवादः ।
जिनेन्द्रधर्मं प्रतिपद्य येन श्लाघ्यः स केषां न **कुमारपालः** ॥
इति **सोमप्रभ**कथिते **कुमारनृप-हेमचन्द्र**संवादे ।
जिनधर्मप्रतिबोधे प्रस्तावः पञ्चमः प्रोक्तः ॥'

इति **सोमप्रभ**विरचित**कुमारपालप्रतिबोध**[1]काव्यतः,

'शिष्यो जम्बुमहामुनेः **प्रभव** इत्यासीदमुष्यापि च
श्रीशय्यंभव इत्यमुष्य च **यशोभद्रा**भिधानो मुनिः ।
**संभूतो मुनिभद्रबाहु**रिवं[2]...द्वौ तस्य शिष्योत्तमौ
**संभूत**स्य च पादपद्ममधुलिट्श्री**स्थूलभद्रा**ह्वयः ॥
वंशक्रमागतचतुर्दशपूर्वरत्नकोशस्य तस्य दशपूर्वधरो महर्षिः ।
नाम्ना **महागिरि**रिति स्थिरतागिरीन्द्रो ज्येष्ठान्तिषत्समजनिष्ट विशिष्टलब्धिः ॥
शिष्योऽन्यो दशपूर्वभृन्मुनिवृषो नाम्ना **सुहस्ती**त्यरुद्
यत्पादाम्बुजसेवनात्समुदिते राज्ये प्रबोधर्धिकाः ।
चक्रे **संप्रति** पार्थिवः प्रतिपुरग्रामाकरं भारते-
ऽस्मिन्नर्धे जिनचैत्यमण्डितमिलापृष्ठं समन्तादपि ॥
अजनि **सुस्थित-सुप्रतिबुद्ध**[3] इत्यभिधयार्य**सुहस्ति**महामुनेः ।
शमधनो दशपूर्वधरान्तिषद्भवमहातरुभञ्जनकुञ्जरः ॥
महर्षिसंसेवितपादसंनिधेः प्रचारभागालवणोदसागरम् ।

---

१. अस्य जिनधर्मप्रतिबोधकाव्यस्य निर्माणसमयस्तु—'शशिजलधिसूर्यवर्षे शुचिमासे रविदिने सिताष्टम्याम् । जिनधर्मप्रतिबोधः क्लृप्तोऽयं गुर्जरेन्द्रपुरे ॥' इति वदता ग्रन्थकर्त्रैव १२४१ (A. D. 1184) विक्रमसंवत्सरात्मक उक्तः. २. 'इति च' इति भवेत्. ३. सुस्थितः सुप्रतिबद्धः, इति मुनिद्वयम्.

महान्गणः **कोटिक** इत्यभूत्ततो गङ्गाप्रवाहो हिमवद्गिरेरिव ॥
तस्मिन्गणे कतिपयेष्वपि यातवत्सु साधूत्तमेषु चरमो दशपूर्वधारी ।
उद्दामतुम्बवनपत्तनवज्रशाखावज्रं महामुनिरजायत **वज्रसूरिः** ॥

दुर्भिक्षे समुपस्थिते प्रलयवह्नीमत्वभाज्यन्यदा
भीतं न्यस्य महर्षिसंघमभितो विद्यावदातः पटे ।
योऽभ्युद्धृत्य कराम्बुजेन नभसा पुर्यामनैषीन्महा-
पुर्यां मङ्क्षु सुभिक्षधामनि तपोधाम्नामसीम्नां निधिः ॥

तस्माद्वज्राभिधा शाखाभूत्**कोटिक**गणद्रुमे ।
उच्चनागरिकामुख्यशाखात्रितयगोचरा ॥
तस्यां च **वज्रशाखायां** निलीनमुनिषट्पदः ।
पुष्पगुच्छायतो **गच्छश्चन्द्र** इत्याख्ययाभवत् ॥

धर्मध्यानसुधासुधांशुरमलः संघार्थरत्नाकरो
भव्याम्भोरुहभास्करः स्मरकरिप्रोन्माथकण्ठीरवः ।
गच्छे तत्र बभूव संयमधनः कारुण्यराशिर्**यशो-
भद्रः** सूरिरपूरि येन भुवनं शुद्धैर्यशोभिर्निजैः ॥

श्रीमन्नेमिजिनेन्द्रपावितशिरस्यद्रौ स संलेखनां
कृत्वादा प्रतिपन्नवाननशनं प्रान्ते शुभध्यानभाक् ।
तिष्ठञ्छान्तमनास्त्रयोदशदिनान्याश्चर्यमुत्पादय-
न्नुच्चैः पूर्वमहर्षिसंयमकथाः सत्यापयामासिवान् ॥

श्रीमान्**प्रद्युम्नसूरिः** समजनि जनितानेकभव्यप्रबोध-
स्तच्छिष्यो विश्वविश्वप्रथितगुणगणः प्रावृडम्भोदवद्यः ।
प्रीणाति स्माखिलक्ष्मां प्रवचनजलधेरुद्धृतैरर्थनीरै-
रातत्य स्थानकानि श्रुतिविषयसुधासारसद्व्यञ्चि विष्वक् ॥

सर्वग्रन्थरहस्यरत्नमुकुरः कल्याणवल्लीतरुः
कारुण्यामृतसागरः प्रवचनव्योमाङ्गणाहस्करः ।
चारित्रादिकरत्नरोहणगिरिः क्ष्मां पावयन्धर्मराट्
सेनानीर्**गुणसेनसूरि**रभवच्छिष्यस्तदीयस्ततः ॥

शिष्यस्तस्य च तीर्थमेकमवनेः पावित्र्यकृज्जङ्गमः
स्याद्वादत्रिदशापगाहिमगिरिर्विश्वप्रबोधार्यमा ।
कृत्वा स्थानकवृत्तिशान्तिचरिते प्राप्तः प्रसिद्धिं परां
सूरिर्भूरितपःप्रभाववसतिः श्री**देवचन्द्रो**ऽभवत् ॥

आचार्यो हेमचन्द्रोऽभूत्तत्पादाम्भोजषट्पदः ।
तत्प्रसादादधिगतज्ञानसंपन्महोदयः ॥

जिष्णुश्चेदिदशार्णमालवमहाराष्ट्रापरान्तं कुरू-
न्सिन्धूनन्यतमांश्च दुर्गविषयान्दोर्वीर्यशक्त्या हरिः ।
चौलुक्यः परमार्हतो विनयवाञ्श्री**मूलराजा**न्वयी
तं नत्वेति **कुमारपाल**पृथिवीपालोऽब्रवीदेकदा ॥
पापर्द्धिद्यूतमद्यप्रभृति किमपि यन्नारकायुर्निमित्तं
तत्सर्वं निर्निमित्तोपकृतिकृतधियां प्राप्य युष्माकमाज्ञाम् ।
स्वामिन्नुर्व्यां निषिद्धं धनमसुतमृतस्याथ मुक्तं तथार्ह-
च्चैत्यैरुत्तंसिता भूरभवमिति समः **संप्रतेः** संप्रतीह ॥
अस्मत्पूर्वज**सिद्धराज**नृपतेर्भक्तिस्पृशो याञ्चया
साङ्गं व्याकरणं सवृत्ति सुगमं चक्रुर्भवन्तः पुरा ।
मद्धेतोरथ योगशास्त्रममलं लोकाय च द्व्याश्रय-
च्छन्दोलंकृतिनामसंग्रहमुखान्यन्यानि शास्त्राण्यपि ॥
लोकोपकारकरणे स्वयमेव यूयं सज्जाः स्थ यद्यपि तथाप्यहमर्थयेऽदः ।
मादृग्जनस्य परिबोधकृते [शलाका] पुंसां प्रकाशयत वृत्तमिदं त्रिषष्टेः ॥
तस्योपरोधादिति **हेमचन्द्राचार्यः शलाकापुरुषे**तिवृत्तम् ।
धर्मोपदेशैकफलप्रधानं न्यवीविशच्चारु गिरां प्रपञ्चे ॥
जम्बूद्वीपारविन्दे कनकगिरिरसावश्नुते कर्णिकात्वं
यावद्यावच्च धत्ते जलनिधिरवनेरन्तरीपत्वमुच्चैः ।
यावद्व्योमाध्वपान्थौ तरणिशशधरौ भ्राम्यतस्तावदेत-
त्काव्यं नाम्ना शलाकापुरुषचरितमित्यस्तु जैत्रं धरित्र्याम् ॥'

इत्याचार्य**हेमचन्द्र**विरचित**शलाकापुरुषचरितप्रशस्ति**तश्च **चौलुक्य-कुमारपाल**राज्ये **हेमचन्द्रा**चार्याणां सत्ताया अवगतेः,

'नृपस्य जीवाभयदानडिण्डिमैर्महीतले नृत्यति कीर्तिनर्तकी ।
श्री**हेमचन्द्र**प्रभुपादपद्मं वन्दे भवाब्धेस्तरणैकपोतम् ।
ललाटपट्टान्तरकान्तराढ्याक्षरावली येन मम व्यलोपि ।
बोधयित्वा महाराजं देवलोकं जगाम यः ।
पश्चात्**कुमारपालो**ऽयं शोकं गत्वा मुमूर्च्छ सः ॥
तदनु धैर्यमवलम्ब्य धर्मध्यानं करोति ।'

इति **हेमकुमारचरित**काव्ये **हेमचन्द्राचार्याणां** देवलोकगमनस्योक्तेश्च **कुमारपाल**राज्यसमय एवाचार्य**हेमचन्द्र**समयः, **कुमारपाल**राजधान्येव भूमिमण्डलमित्यबाधमवगतम्. विशेषकथा तु प्रबन्धकोश-प्रबन्धचिन्तामणिभ्या-मवगन्तव्या.

कुमारपालराज्यसमयस्तु—

ओं नमः शिवाय ।

ब्रह्माद्वैतधिया मुमुक्षुभिरभिध्यातस्य बद्धाक्षरै-
रिच्छाशक्तिमभिष्टवीमि जगतां पत्युः श्रुतीनां निधेः ।
या व्यापारितसंहृतेः स्वसमये ब्रह्माण्डपिण्डैर्नवैः
क्रीडन्ती मणिकन्दुकैरिव सदा स्वच्छन्दमाह्लादते ॥
गीर्वाणैर्वीतगर्वं दनुजपरिभवात्प्रार्थितस्त्रायकार्थं
वेधाः संध्यां नमस्यन्नपि निजचुलुके पुण्यगङ्गाम्बुपूर्णे ।
सद्यो वीरं **चुलुक्या**ह्वयमसृजदिमं येन कीर्तिप्रवाहैः
पूतं त्रैलोक्यमेतन्नियतमनुहरत्येव हेतोः फलं श्रीः ॥
वंशः कोऽपि ततो बभूव विविधाश्चर्यैकलीलास्पदं
यस्माद्भूमिभृतोऽपि वीतगणिता(णना): प्रादुर्भवन्त्यन्वहम् ।
छायां यः प्रथितप्रतापमहतीं दध्रे विपन्नोऽपि स-
न्यो जन्यावधि सर्वदापि जगतो विश्वस्य दत्ते फलम् ॥
वंशस्यास्य वशः प्रकाशनविधौ निर्मूल्यमुक्तामणिः
क्षोणीसालकिरीटकल्पितपदः श्री**मूलराजो**ऽभवत्[1] ।
यो मूलं कलिदावदग्धनिखिलन्यायद्रुमोत्पादने
यो राजेव करैः प्रकामशिशिरैः प्रीतिं निनाय प्रजाः ॥
यश्चापोत्कटराजराज्यकमलां स्वच्छन्दबन्दीकृतां
विद्वद्बान्धवविप्रबन्दिभृतकव्यूहोपभोग्यां व्यधात् ।
यत्खड्गाश्रयिणीं तदा श्रियमलं युद्धस्फुरद्विक्रम-
क्रीताः सर्वदिगन्तरक्षितिभुजां लक्ष्म्याश्चिरं भेजिरे ॥
सूनुस्तस्य बभूव भूपतिलक**श्चामुण्डराजा**[2]ह्वयो
यद्गन्धद्विपदानगन्धपवनाघ्राणेन दूरादपि ।
विभ्रश्यन्मदगन्धभग्नकरिभिः श्री**सिन्धुराज**स्तथा
नष्टः क्षोणिपतेर्यथास्य यशसां गन्धोऽपि निर्णाशितः ॥
तस्मा**द्दुर्लभराज** इत्यभिधया क्ष्मापालचूडामणि-
र्जज्ञे साहसकर्मनिर्मितचमत्कारः क्ष्मामण्डले ।
यत्कोपानलजृम्भितं पिशुनयत्येतत्प्रयाणश्रुति-
क्षुभ्यन्मालवभूपचक्रविकसन्मालिन्यधूमोद्गमः ॥

---

१. मूलराजराज्यम्—वि० सं० ९९३–१०५३. २. चामुण्डराजराज्यम्—वि० सं० १०५३–१०६६.

श्रीमद्दुर्लभराजनामनृपतिभ्रातास्य राज्यं दधे[1]
शृङ्गारेऽपि निषण्णधीः परवधूवर्गस्य यो दुर्लभः।
यस्य क्रोधपरायणस्य किमपि भ्रूवल्लरी भङ्गुरा
सद्यो दर्शयति स्म लाटवसुधाभङ्गस्वरूपं फलम्॥
भीमोऽपि द्विषतां सदा प्रणयिनां भोग्यत्वमासेदिवा-
न्क्षोणीभारमिदं(मं) बभार नृपतिः श्रीभीमदेवो[2] नृपः।
धारापञ्चकसाधनैकचतुरैस्तद्वाजिभिः साधिता
क्षिप्रं मालवचक्रवर्तिनगरी धारेति को विस्मयः॥
तस्माद्भूमिपतिर्बभूव वसुधाकर्णावतंसः स्फुर-
त्कीर्तिप्रीणितविश्वकर्णविवरः श्रीकर्णदेवाह्वयः[3]।
येन ज्याप्रथितस्वनं च्युतशरं धर्मं पुरस्कुर्वता
न्यायज्ञेन न केवलं रिपुगणः कालोऽपि विद्धः कलिः॥
दृप्यन्मालवभूपबन्धनविधित्रस्ताखिलक्ष्मापति-
र्भक्त्याकृष्टवितीर्णदर्शनशिवो मूर्तः प्रभावोदयः।
सद्यः सिद्धरसानृणीकृतजगद्गीतोपमा(तावदा)नस्थिति-
र्जज्ञे श्रीजयसिंहदेवनृपतिः[4] सिद्धादिराजस्ततः॥
वश्या वेश्म रसातलं च विलसद्भोगि..........
.........भोक्तुम......क्षत्राणि रक्षांसि च।
यः क्षोणीधरयागिनीं च सुमहाभोगां सिषेवे चिरं
हेलासिद्धरसाः सदा क्षितिभुजः............रे॥
संख्यातीतवितीर्णदाननिवहः संपन्नपुण्योच्चयः
क्रीडाक्रान्तदिगन्तराल.....................।
..........................................
..........................................॥
............कुलभूप...... बलाम्ब......
क्रीडाक्रोड इवोद्दधार वसुधां देवाधिदेवाज्ञया।
देवः सोऽथ कुमारपालनृपतिः[5] श्रीराज्यचूडामणि-
र्यः स्वर्गादवतीर्णवान्हरिरिति ज्ञातः प्रभावाञ्जनैः॥

---

१. दुर्लभराजराज्यम्—वि० सं० १०६६-१०७८. २. भीमदेवराज्यम्—वि० सं० १०७८-११२०. ३. कर्णदेवराज्यम्—वि० सं० ११२०-११५०. ४. सिद्धराजापरपर्यायजयसिंहराज्यम्—वि० सं० ११५०-११९९. ५. कुमारपाल-राज्यम्—वि० सं० ११९९-१२३०

अर्णोराजनराधिराजहृदये क्षिप्त्वैक(व)बाणव्रजं
श्च्योतल्लोहिततर्पणादमदयच्चण्डीं भुजस्थायिनीम् ।
द्वारालम्बितमालवेश्वरशिरःपद्मेन यश्चाहर-
ल्लीलापङ्कजसंग्रहव्यसनिनीं चौलुक्यराजान्वयः ॥
शुद्धाचारनवावतारसरणिः सद्धर्मकर्मक्रम-
प्रादुर्भूतविशारदो नयपथप्रस्थानसार्थाधिपः ।
यः संप्रत्यवतारयन्कृतयुगं योगं कलेर्लङ्घय-
न्मन्ये संहरति स्म भूमिवलयं कालव्यवस्थामपि ॥
प्रत्यू······खण्डिताङ्गुलिदलैः पर्युल्लसत्पल्लवो
नष्टोदीच्यनराधिपोज्झितसितच्छत्रैः प्रसूनोज्ज्वलः ।
छिन्नः प्राच्यनरेन्द्रमौलिकमलैः प्रौष्प(प्रोद्य)त्फलद्योतित-
श्छायां दूरमवर्धयन्निजकुले यस्य प्रतापद्रुमः ॥
आचारः किल तस्य रक्षणविधेर्विघ्नेशनिर्ना(र्णा)शित-
प्रत्यूहस्य फलावलोकिशकुनज्ञानस्य सं······वः ।
देवीमण्डलखण्डिताखिलरिपोर्युद्धं विनोदोत्सवः
श्रीसोमेश्वरदत्तराज्यविभवस्याडम्बरं वाहिनी ॥
राज्ञानेन च भुज्यमानसुभगा विश्वंभरा विस्फुर-
द्रत्नद्योतितवारिराशिरशना शीताद्रिविन्ध्यस्तनी ।
एषाभूषयदस्थिकुण्डलमिव श्रुत्याश्रयं···ष्टता
बिभ्राणा नगराह्वयं द्विजमहास्थानं सुवर्णोदयम् ॥
आब्रह्मादिऋषिप्रवर्तितमहायज्ञक्रमोत्तम्भितै-
र्यूपैर्दत्तकरावलम्बनतया पादव्यपेक्षाच्युतः ।
धर्मोऽत्रैव चतुर्युगेऽपि कलितानन्दः परिस्पन्दते
तेनानन्दपुरेति यस्य विबुधैर्नामान्तरं निर्मितम् ॥
अश्रान्तद्विजवर्गवेदतुमुलैर्बाधिर्यमारोपितः
शश्वद्धोमहुताशधूमपटलैरान्ध्यव्यथां लम्भितः ।
नानादेवनिकेतनध्वजशिखाघातैश्च खञ्जीकृतो
यस्मिन्नद्य कलिः स्वकालविहितोत्साहोऽपि नोत्सर्पति ॥

---

१. अयमर्णोराजश्च वीरधवलमहाराजपितामह इति कीर्तिकौमुदीकाव्यस्य नरेन्द्रवंशवर्णनात्मके द्वितीयसर्गे व्याख्यात एव भवेत्.

सर्पद्विप्रवधूजनस्य विविधालंकाररत्नांशुभिः
स्मेराः संततगीतमङ्गलरवैर्वाचालतां प्रापिताः ।
अस्ता(श्रा)न्तोत्सवलक्ष्यमाणविभवोत्कर्षप्रकाशस्थितौ
मार्गा एव वदन्ति यत्र नृपतेः सौराज्यसंपद्गुणम् ॥
अस्मिन्नागरवंशजद्विजजनस्त्राणं करोत्यध्वरे
रक्षां शान्तिकपौष्टिकैर्वितनुते भूपस्य राष्ट्रस्य च ।
मा भूत्तस्य तथापि तीव्रतपसो बाधेति भक्त्या नृपो
वप्रं विप्रपुराभिरक्षणकृते निर्मापयामास सः ॥
अस्मिन्वप्रगुणेन तोयनिलयाः प्रीणन्ति लोकं जलैः
कामं क्षेत्रभुवोऽपि वप्रकलितास्तन्वन्ति धान्यश्रियम् ।
एवं चेतसि संप्रधार्य सकलब्रह्मोपकारेच्छया
चक्रे वप्रविभूषितं पुरमिदं चौलुक्यचूडामणिः ॥
पादाक्रान्तरसातलो गिरिरिव श्लाघ्यो महाभोगतः
शृङ्गारीव तरङ्गिणीपतिरिव स्फारोदयद्वारभूः ।
उत्सर्पत्कपिशीर्षको जय इव क्रव्यादनाथद्विषां
नारीवर्ग इवेष्टकान्तरुचिरः सालोऽयमालोक्यते ॥
भोगाभोगमनोहरः फणशतैरुत्तुङ्गतां धारय-
न्यातः कुण्डलितां च यज्ञपुरुषस्याज्ञावशेनागतः ।
रत्नस्वर्णमहानिधिं पुरमिव त्रातुं स शेषः स्थितः
प्राकारः सुधया सितोपलशिराः संलक्ष्यते वृत्तवान् ॥
कामं कामसमृद्धिपूरकरमारामाभिरामाः सदा
स्वच्छन्दस्वनतत्परैर्द्विजकुलैरत्यन्तवाचालिताः ।
उत्सर्पद्गुणशालिवप्रवलयप्रीतैः प्रसन्ना जनै-
रन्तान्तश्च बहिश्च संप्रति भुवः शोभाद्भुतं बिभ्रति ॥
लक्ष्मीकुलं क्षोणिभुजो दधानः प्रौढोदयाधिष्ठितविग्रहोऽयम् ।
विभ्राजते नागरकाम्यवृष्टिर्वप्रश्च चौलुक्यनराधिपश्च ॥
यावत्पृथ्वी पृथुविरचिताशेषभूभृन्निवेशा
यावत्कीर्तिः सगरनृपतेर्विद्यते सागरोऽयम् ।
तावन्नन्याद्द्विजवरमहास्थानरक्षानिदानं
श्रीचौलुक्यक्षितिपतियशःकीर्तनं वप्र एषः ॥
एकाहनिष्पन्नमहाप्रबन्धः श्री**सिद्धराज**प्रतिपन्नबन्धुः ।
**श्रीपाल**नामा कविचक्रवर्ती प्रशस्तिमेतामकरोत्प्रशस्ताम् ॥

संवत् १२०८ वर्षे आश्विन शुदि २ गुरौ लिखितं नागरब्राह्मणपण्डितबालणेन ॥'

इति **काव्यमाला**पुस्तकान्तर्गतप्राचीनलेखमालायां G. Bühler Ph. D., L. L. D., C. I. E. महाशयप्रेषित ४५ तमलेखतः विक्रमसंवत् १२०८ (A.D. 1151) रूपः स्फुटमेव प्रतीयते. एवं च द्वादशी ख्रिस्तशतिका हेमचन्द्रसत्ताधारभूतावगम्यते.

अनेनाचार्यश्री**हेमचन्द्रे**णेयन्तो ग्रन्था निर्मिता इति निश्चितं नैव, परंतु तन्निर्मितग्रन्थेषु—अनेकार्थकोषः, अनेकार्थशेषः, अभिधानचिन्तामणिः (नाममालाव्याख्या), अलंकारचूडामणिः (काव्यानुशासनव्याख्या), उणादिसूत्रवृत्तिः, काव्यानुशासनम्, छन्दोनुशासनम्, छन्दोनुशासनवृत्तिः, देशीनाममाला सवृत्तिः, [द्व्याश्रयकाव्यं सवृत्ति,] धातुपाठः सवृत्तिः, धातुपारायणं सवृत्ति, धातुमाला, नाममाला, नाममालाशेषः, निघण्टुशेषः, [प्रमाणमीमांसा सवृत्तिः,] बलाबलसूत्रबृहद्वृत्तिः, बालभाषाव्याकरणसूत्रवृत्तिः, [योगशास्त्रम्,] विभ्रमसूत्रम्, लिङ्गानुशासनं सवृत्ति, शब्दानुशासनं सवृत्ति, शेषसंग्रहः, शेषसंग्रहसारोद्धारः, एते ग्रन्थाः Catalogus Catalogorum ग्रन्थे Dr. Theodor Aufrecht महाशयैः प्रकाशिताः.

एवमनेकलक्षात्मकग्रन्थकर्तृश्वेताम्बरजैनाचार्यश्री**हेमचन्द्र**कृतं काव्यानुशासनं स्वोपज्ञमस्माभिर्मुद्रयितुं दत्तं तदेतस्य ग्रन्थस्य मुद्रणाय शोधनसमये येषां सुहृदयहृदयानां पुस्तकानि प्राप्तानि, तेषां नामानि धन्यवादपुरःसरं प्रकाश्यन्ते—

| | | |
|---|---|---|
| १ काव्यानुशासनम् | — | पुण्यपत्तनपुस्तकालयतः. |
| १ काव्यानुशासनविवेकः | — | पं० ज्येष्ठारामसुकुन्दशर्मणाम्. |
| १ | — | अस्मद्गृहस्थम्. |

तदेवमनेकपुस्तकाधारेण शोधितमुद्रिते सव्याख्ये काव्यानुशासनेऽस्मद्दोषादक्षरयोजकदोषाद्वा यत्र कुत्रचनाशुद्धिः स्थिता जाता वा तत्र सुहृदयाः सौहार्देन शोधयिष्यन्ति । यतः—

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥

इति प्रार्थयतः

**पण्डित-शिवदत्त-काशीनाथौ ।**

# काव्यानुशासनविषयानुक्रमणिका मूलग्रन्थश्च ।


विषयः । मूलग्रन्थः । पृष्ठसंख्या ।

मङ्गलाचरणम्— १

अकृत्रिमस्वादुपदां परमार्थाभिधायिनीम् ।
सर्वभाषापरिणतां जैनीं वाचमुपास्महे ॥ १ ॥

प्रस्तावना— २

शब्दानुशासनेऽस्माभिः साध्व्यो वाचो विवेचिताः ।
तासामिदानीं काव्यत्वं यथावदनुशिष्यते ॥ २ ॥

प्रयोजनम्— ३

काव्यमानन्दाय यशसे कान्तातुल्यतयोपदेशाय च ।

काव्यकारणम्— ५

प्रतिभास्य हेतुः ।

प्रतिभाभेदौ— ५

सावरणक्षयोपशममात्रात्सहजा ।
मन्त्रादेरौपाधिकी ।

प्रतिभासंस्कारः— ६

व्युत्पत्त्यभ्यासाभ्यां संस्कार्या ।

व्युत्पत्तिः— ६

लोकशास्त्रकाव्येषु निपुणता व्युत्पत्तिः ।

अभ्यासः— ९

काव्यविच्छिक्षया पुनःपुनः प्रवृत्तिरभ्यासः ।

| विषयाः । | मूलग्रन्थः । | पृष्ठसंख्या । |
| --- | --- | --- |
| शिक्षा— | सतोऽप्यनिबन्धोऽसतोऽपि निबन्धो नियमश्छायाद्युपजीवनादयश्च शिक्षाः । | ९ |
| काव्यस्वरूपम्— | अदोषौ सगुणौ सालंकारौ शब्दार्थौ काव्यम् । | १९ |
| गुणदोषलक्षणम्— | रसस्योत्कर्षापकर्षहेतू गुणदोषौ भक्त्या शब्दार्थयोः । | १९ |
| अलंकारलक्षणम्— | अङ्गाश्रिता अलंकाराः । | २० |
| रसोपकारप्रकारः— | तत्परत्वे काले ग्रहत्यागयोर्नातिनिर्वाहे निर्वाहेऽप्यङ्गत्वे रसोपकारिणः । | २० |
| शब्दार्थस्वरूपम्— | मुख्यगौणलक्ष्यव्यङ्ग्यार्थभेदान्मुख्यगौणलक्षकव्यञ्जकाः शब्दाः । | २६ |
| मुख्यार्थलक्षणम्— | साक्षात्संकेतविषयो मुख्यः । | २७ |
| गौणार्थलक्षणम्— | मुख्यार्थबाधे निमित्ते प्रयोजने च भेदाभेदाभ्यामारोपितो गौणः । | २८ |
| लक्ष्यार्थलक्षणम्— | मुख्यार्थसंबद्धस्तत्त्वेन लक्ष्यमाणो लक्ष्यः । | २९ |

विषयाः । मूलग्रन्थः । पृष्ठसंख्या ।

व्यङ्ग्यार्थलक्षणम्— ३०
मुख्याद्व्यतिरिक्तः प्रतीयमानो व्यङ्ग्यो ध्वनिः ।

व्यङ्ग्यार्थभेदाः— ४६
व्यङ्ग्यः शब्दार्थशक्तिमूलः ।

शब्दशक्तिमूलव्यङ्ग्यार्थः— ४६
नानार्थस्य मुख्यस्य शब्दस्य संसर्गादिभिरमुख्यस्य च मुख्यार्थबाधादिभिर्नियमिते व्यापारे वस्त्वलंकारयोर्वस्तुनश्च व्यञ्जकत्वे शब्दशक्तिमूलः पदवाक्ययोः ।

अर्थशक्तिमूलव्यङ्ग्यार्थः— ५४
वस्त्वलंकारयोस्तद्व्यञ्जकत्वेऽर्थशक्तिमूलः प्रबन्धेऽपि ।

इति प्रथमोऽध्यायः ।

---

रसलक्षणम्— ६७
विभावानुभावव्यभिचारिभिरभिव्यक्तः स्थायी भावो रसः ।

रसभेदाः— ८१
शृङ्गारहास्यकरुणा रौद्रवीरभयानका बीभत्साद्भुतशान्ता नव रसाः ।

शृङ्गाररसः— ८२
स्त्रीपुंसमाल्यादिविभावा जुगुप्सालस्यौग्र्यवर्जव्यभिचारिका रतिः संभोगविप्रलम्भात्मा शृङ्गारः ।

हास्यरसः— ८९
विकृतवेषादिविभावो नासास्पन्दनाद्यनुभावो निद्रादिव्यभिचारी हासो हास्यः ।

विषयः । मूलग्रन्थः । पृष्ठसंख्या ।

करुणरसः— ९१

इष्टनाशादिविभावो दैवोपालम्भाद्यनुभावो दुःखमयव्यभिचारी शोकः करुणः ।

रौद्ररसः— ९१

दारापहारादिविभावो नयनरागाद्यनुभाव औग्र्यादिव्यभिचारी क्रोधो रौद्रः ।

वीररसः— ९३

नयादिविभावः स्थैर्याद्यनुभावो धृत्यादिव्यभिचार्युत्साहो धर्मदानयुद्धभेदो वीरः ।

भयानकः— ९३

विकृतस्वरश्रवणादिविभावं करकम्पाद्यनुभावं शङ्कादिव्यभिचारि भयं भयानकः ।

बीभत्सरसः— ९५

अहृद्यदर्शनादिविभावाङ्गसंकोचाद्यनुभावापस्मारादिव्यभिचारिणी जुगुप्सा बीभत्सः ।

अद्भुतरसः— ९५

दिव्यदर्शनादिविभावो नयनविस्ताराद्यनुभावो हर्षादिव्यभिचारी विस्मयोऽद्भुतः ।

शान्तरसः— ९६

वैराग्यादिविभावो यमनियमाध्यात्मशास्त्रचिन्तनाद्यनुभावो धृत्यादिव्यभिचारी शमः शान्तः ।

| विषयः। | मूलग्रन्थः। | पृष्ठसंख्या। |
| --- | --- | --- |
| स्थायिभावाः— | रतिहासशोकक्रोधोत्साहभयजुगुप्साविस्मयशमाः स्थायिनो भावाः। | १०० |
| व्यभिचारिभावाः— | धृतिस्मृतिमतिव्रीडाजाड्यविषादमदव्याधिनिद्रासुप्तौत्सुक्यावहित्थशङ्काचापलालस्यहर्षगर्वौग्र्यप्रबोधग्लानिदैन्यश्रमोन्मादमोहचिन्तामर्षत्रासापस्मारनिर्वेदावेगवितर्कासूयामृतयः स्थित्युदयप्रशमसंधिशबलत्वधर्माणस्त्रयस्त्रिंशद्व्यभिचारिणः। | १०२ |
| सात्त्विकभावाः— | स्तम्भस्वेदरोमाञ्चस्वरभेद(स्वर)कम्पवैवर्ण्याश्रुप्रलया अष्टौ सात्त्विकाः। | ११८ |
| रसाभासः— | निरिन्द्रियेषु तिर्यगादिषु चारोपाद्रसभावाभासौ। | १२० |

इति द्वितीयोऽध्यायः।

---

| विषयः। | मूलग्रन्थः। | पृष्ठसंख्या। |
| --- | --- | --- |
| काव्यदोषः— | रसादेः स्वशब्दोक्तिः क्वचित्संचारिवर्जं दोषः। | १३१ |
| रसदोषाः— | विभावानुभावक्लेशव्यक्तिः पुनःपुनर्दीप्त्याकाण्डप्रथाच्छेदाङ्गातिविस्तराङ्ग्यननुसंधानानङ्गाभिधानप्रकृतिव्यत्ययाश्च। | १४२ |
| पददोषाः— | निरर्थकासाधुत्वे पदस्य। | १६३ |

विषयः । मूलग्रन्थः । पृष्ठसंख्या ।

वाक्यदोषाः— १६४

विसंधिन्यूनाधिकोक्तास्थानस्थपदपतत्प्रकर्षसमाप्तपुनरात्ताविसर्गहतवृत्तसंकीर्णगर्भितभग्नप्रक्रमानन्वितत्वानि वाक्यस्य ।

पदवाक्यदोषाः— १८८

अप्रयुक्ताश्लीलासमर्थानुचितार्थश्रुतिकट्टक्लिष्टाविमृष्टविधेयांशविरुद्धबुद्धिकृत्त्वान्युभयोः ।

अर्थदोषाः— २२०

कष्टापुष्टव्याहतग्राम्याश्लीलसाकाङ्क्षसंदिग्धाक्रमपुनरुक्तभिन्नसहचरविरुद्धव्यङ्ग्यप्रसिद्धिविद्याविरुद्धत्यक्तपुनरात्तपरिवृत्तनियमानियमविशेषसामान्यविध्यनुवादत्वान्यर्थस्य ।

इति तृतीयोऽध्यायः ।

---

गुणाः— २३२

माधुर्यौजःप्रसादास्त्रयो गुणाः ।

माधुर्यगुणः— २४१

द्रुतिहेतुर्माधुर्यं शृङ्गारे ।

माधुर्यव्यञ्जकाः— २४१

तत्र निजान्त्याक्रान्ता अटवर्गा वर्गा ह्रस्वान्तरितौ रणावसमासो मृदुरचना च ।

ओजोगुणः— २४२

दीप्तिहेतुरोजो वीरबीभत्सरौद्रेषु क्रमेणाधिकम् ।

| विषयः । | मूलग्रन्थः । | पृष्ठसंख्या । |
| --- | --- | --- |

ओजोव्यञ्जकाः— २४२

आद्यतृतीयाक्रान्तौ द्वितीयतुर्यौ युक्तो रेफस्तुल्यश्च टवर्गशषा वृत्तिर्दैर्घ्यमुद्धतो गुम्फश्चात्र ।

प्रसादगुणः— २४३

विकासहेतुः प्रसादः सर्वत्र ।

प्रसादव्यञ्जकाः— २४३

इह श्रुतिमात्रेणार्थप्रत्यायका सर्ववृत्तिगुम्फाः ।

गुणान्यथात्वम्— २४४

वक्तृवाच्यप्रबन्धौचित्याद्वर्णादीनामन्यथात्वमपि ।

इति चतुर्थोऽध्यायः ।

---

शब्दालंकाराः ।

अनुप्रासः— २४७

व्यञ्जनस्यावृत्तिरनुप्रासः ।

लाटानुप्रासः— २४८

तात्पर्यमात्रभेदिनो नाम्नः पदस्य वा लाटानाम् ।

यमकम्— २४९

सत्यर्थेऽन्यार्थानां वर्णानां श्रुतिक्रमैक्ये यमकम् ।

यमकस्थानम्— २५१

तत्पादे भागे वा ।

चित्रकाव्यम्— २५७

स्वरव्यञ्जनस्थानगत्याकारनियमच्युतगूढादि चित्रम्

| विषयः । | मूलग्रन्थः । | पृष्ठसंख्या । |
| --- | --- | --- |
| श्लेषः— | अर्थभेदभिन्नानां भङ्गाभङ्गाभ्यां युगपदुक्तिः श्लेषः । | २७२ |
| वक्रोक्तिः— | उक्तस्यान्येनान्यथाश्लेषादुक्तिर्वक्रोक्तिः । | २८० |
| पुनरुक्ताभासः— | भिन्नाकृतेः शब्दस्यैकार्थतेव पुनरुक्ताभासः । | २८६ |

इति पञ्चमोऽध्यायः ।

---

अर्थालंकाराः ।

| | | |
| --- | --- | --- |
| उपमा— | हृद्यं साधर्म्यमुपमा । | २८७ |
| उपमाकारणानि— | सोपमानोपमेयधर्मोपमावाचकानामुपादाने पूर्णा वाक्ये वृत्तौ च । | २८९ |
| उत्प्रेक्षा— | असद्धर्मसंभावनमिवादिद्योत्योत्प्रेक्षा । | २९७ |
| रूपकम्— | सादृश्ये भेदेनारोपो रूपकमेकानेकविषयम् । | २९८ |
| निदर्शनम्— | इष्टार्थसिद्ध्यै दृष्टान्तो निदर्शनम् । | ३०२ |
| दीपकम्— | प्रकृताप्रकृतानां धर्मैक्यं दीपकम् । | ३०४ |

विषयः । मूलग्रन्थः । पृष्ठसंख्या ।

अन्योक्तिः— ३०७

सामान्यविशेषे कार्ये कारणे प्रस्तुते तदन्यस्य तुल्ये तुल्यस्य चोक्तिरन्योक्तिः ।

पर्यायोक्तम्— ३१६

व्यङ्ग्यस्योक्तिः पर्यायोक्तम् ।

अतिशयोक्तिः— ३१७

विशेषविवक्षया भेदाभेदयोगायोगव्यत्ययोऽतिशयोक्तिः ।

आक्षेपः— ३२१

विवक्षितस्य निषेध इवोपमानस्याक्षेपश्चाक्षेपः ।

विरोधः— ३२२

अर्थानां विरोधाभासो विरोधः ।

सहोक्तिः— ३२७

सहार्थबलाद्धर्मस्यान्वयः सहोक्तिः ।

समासोक्तिः— ३२८

श्लिष्टविशेषणैरुपमानधीः समासोक्तिः ।

जातिः— ३२९

स्वभावाख्यानं जातिः ।

व्याजस्तुतिः— ३३१

स्तुतिनिन्दयोरन्यतरपरता व्याजस्तुतिः ।

श्लेषः— ३३१

वाक्यार्थस्यानेकार्थता श्लेषः ।

विषयः। मूलग्रन्थः। पृष्ठसंख्या।

व्यतिरेकः— ३३२

उत्कर्षापकर्षहेत्वोः साम्यस्य चोक्तावनुक्तौ चोपमेयस्याधिक्यं व्यतिरेकः।

अर्थान्तरन्यासः— ३३४

विशेषस्य सामान्येन साधर्म्यवैधर्म्याभ्यां समर्थनमर्थान्तरन्यासः।

ससंदेहः— ३३४

स्तुत्यै संशयोक्तिः ससंदेहः।

अपह्नुतिः— ३३७

प्रकृताप्रकृताभ्यां प्रकृतापलापोऽपह्नुतिः।

परावृत्तिः— ३३८

पर्यायविनिमयौ परावृत्तिः।

अनुमानम्— ३३९

हेतोः साध्यावगमोऽनुमानम्।

स्मृतिः— ३४०

सदृशदर्शनात्स्मरणं स्मृतिः।

भ्रान्तिः— ३४१

विपर्ययो भ्रान्तिः।

विषमम्— ३४१

क्रियाफलाभावोऽनर्थश्च विषमम्

समम्— ३४१

योग्यतया योगः समम्।

विषयः । मूलग्रन्थः । पृष्ठसंख्या ।

समुच्चयः— ३४२

हेतौ कार्ये चैकत्र हेतुकार्यान्तरोक्तिर्युगपद्गुणक्रियाश्च समुच्चयः ।

परिसंख्या— ३४४

पृष्टेऽपृष्टे वान्यापोहपरोक्तिः परिसंख्या ।

कारणमाला— ३४६

यथोत्तरं पूर्वस्य हेतुत्वे कारणमाला ।

संकरः— ३४७

स्वातन्त्र्याङ्गत्वसंशयैकपद्यैरेषामेकत्र स्थितिः संकरः ।

इति षष्ठोऽध्यायः ।

---

नायकादिलक्षणानि ।

नायकः— ३५५

समग्रगुणः कथाव्यापी नायकः ।

नायकगुणाः— ३५५

शोभाविलासमधुरललितमाधुर्यस्थैर्यगाम्भीर्यौदार्यतेजांस्यष्टौ सत्वजास्तद्गुणाः ।

नायकभेदाः— ३५९

धीरोदात्तललितशान्तोद्धतभेदात्स चतुर्धा ।

नायिकालक्षणम्— ३६१

तद्गुणा स्वपरसामान्या नायिका त्रेधा ।

स्त्रीणां स्वाभाविकालंकाराः— ३७०

सत्त्वजा विंशतिः स्त्रीणामलंकाराः ।

इति सप्तमोऽध्यायः ।

---

| विषयः। | मूलग्रन्थः। | पृष्ठसंख्या। |
| --- | --- | --- |
| प्रबन्धात्मकाः काव्यभेदाः | काव्यं प्रेक्ष्यं श्रव्यं च। | ३७९ |
| प्रेक्ष्यं विभजते— | प्रेक्ष्यं पाठ्यं गेयं च। | ३७९ |
| पाठ्यं भिनत्ति— | पाठ्यं नाटकप्रकरणनाटिकासमवकारेहामृगडिमव्यायोगोत्सृष्टिकाङ्कप्रहसनभाणवीथीसट्टकादि। | ३७९ |
| गेयं विभजते— | गेयं डोम्बिकाभाणप्रस्थानशिङ्गभाणिकाप्रेरणरामाक्रीडहल्लीसकरासकगोष्ठीश्रीगदितरागकाव्यादि। | ३९१ |
| प्रेक्ष्यमुक्त्वा श्रव्यमाह— | श्रव्यं महाकाव्यमाख्यायिका कथा चम्पूरनिबद्धं च। | ३९५ |
| ग्रन्थसमाप्तिः— | | ४०८ |

इत्यष्टमोऽध्यायः।

# काव्यमाला ।

## आचार्यहेमचन्द्रविरचितं
## काव्यानुशासनम् ।

स्वोपज्ञालंकारचूडामणिसंज्ञकवृत्तिसमेतम् ।

प्रथमोऽध्यायः ।

प्रणम्य परमात्मानं निजं काव्यानुशासनम् ।
आचार्यहेमचन्द्रेण विद्वत्प्रीत्यै प्रतन्यते ॥

ग्रन्थारम्भे शिष्टसमयपरिपालनाय शास्त्रकारः समुचितेष्टदेवतां प्रणिधत्ते—

**अकृत्रिमस्वादुपदां परमार्थाभिधायिनीम् ।**
**सर्वभाषापरिणतां जैनीं वाचमुपास्महे ॥ १ ॥**

रागादिजेतारो जिनास्तेषामियं जैनी जिनोपज्ञा । अनेन कारणशुद्ध्योपादेयतामाह । उच्यते इति वाक्, वर्णपदवाक्यादिभावेन भाषाद्रव्यपरिणतिस्तामुपास्महे । उपासनं योगप्रणिधानम् । अकृत्रिमस्वादून्यनाहार्यमाधुर्याणि पदानि नामिकादीनि यस्यां सा तथोक्ता । स्वच्छ-

---

विवरीतुं क्वचिद्दृब्धं नवं संदर्भितुं क्वचित् ।
काव्यानुशासनस्यायं विवेकः प्रवितन्यते ॥

---

१. वृत्तिसमेतस्यैव मूलग्रन्थस्य नाम काव्यानुशासनमितीति प्रतीयते. काव्यानुशासनपदमेव वा स्वव्याख्यावाचकम्.

स्वादुप्रभृतयो हि गुणमात्रवचना अपि दृश्यन्ते । अथ वा अकृत्रिमाण्यसंस्कृतान्यत एव स्वादूनि मन्दधियामपि पेशलानि पदानि यस्यामिति विग्रहः । उक्तं हि—'बालस्त्रीमूढमूर्खाणां नृणां चारित्रकाङ्क्षिणाम् । अनुग्रहार्थं तत्त्वज्ञैः सिद्धान्तः प्राकृतः कृतः ॥' तदेतद्गीतादिसाधारणमिति विशिनष्टि—परमार्थो निःश्रेयसं तदभिधानशीलां परमार्थाभिधायिनीम् । द्रव्याद्यनुयोगानामपि पारम्पर्येण निःश्रेयसप्रयोजनत्वात् । तथा सर्वेषां सुरनरतिरश्चां विचित्रासु भाषासु परिणतां तन्मयतां गतां सर्वभाषापरिणताम् । एकरूपापि हि भगवतोऽर्धमागधीभाषा वारिदविमुक्तवारिवदाश्रयानुरूपतया परिणमति । यदाह—'देवा दैवीं नरा नारीं शबराश्चापि शाबरीम् । तिर्यञ्चोऽपि हि तैरश्चीं मेनिरे भगवद्गिरम् ॥' न ह्येवंविधभुवनाद्भुतमतिशयमन्तरेण युगपदनेकसत्त्वोपकारः शक्यः कर्तुम् ॥

अथ प्रेक्षावत्प्रवृत्त्यङ्गं प्रयोजनं वक्तुं तत्प्रस्तावनामाह—

**शब्दानुशासनेऽस्माभिः साध्व्यो वाचो विवेचिताः ।**
**तासामिदानीं काव्यत्वं यथावदनुशिष्यते ॥ २ ॥**

शब्दानुशासने 'सिद्धहेमचन्द्राभिधाने' । विवेचिता असाध्वीभ्यो वाग्भ्यः पृथक्कृताः । इदानीं शब्दानुशासनादनन्तरं तासां वाचां काव्यत्वं काव्यीभावो यथावत्तात्त्विकेन रूपेणानुशिष्यते । वाचां हि

---

**द्रव्याद्यनुयोगानामपीति** । इहानुयोगश्चतुर्धा । आचरणकरणधर्मकथागणितद्रव्यभेदात् । तत्राद्यस्य सम्यग्ज्ञानदर्शनपवित्रिते नवकर्मानुपादानातीतकर्मनिर्जरारूपे संयमतपसी प्रतिपाद्ये इति सर्वकर्मविमोक्षलक्षणमोक्षपरत्वात्परमार्थाभिधायित्वं प्रतीतमेव । शेषाणां तु पारम्पर्येण द्रव्यस्य चोपायत्वेन प्रधानतया विवक्षितत्वात्पश्चानुपूर्व्यादावुपदेशः । तथा हि । नयप्रमाणबलेन दुर्णयतिरस्का-

साधुत्वे निश्चिते सुकरः काव्योपदेशः । अनेन शब्दानुशासन-काव्यानुशासनयोरेककर्तृकत्वं चाह । अत एव हि प्रायोगिकमन्यैरिव नारप्स्यते । शब्दानुशासनेनैव चरितार्थत्वात् ।

शास्त्रप्रयोजनमुक्त्वा अभिधेयप्रयोजनमाह—

**काव्यमानन्दाय यशसे कान्तातुल्यतयोपदेशाय च ।**

लोकोत्तरं कविकर्म काव्यम् । यदाह—

'प्रज्ञा नवनवोल्लेखशालिनी प्रतिभा मता ।
तदनुप्राणना जीवद्वर्णनानिपुणः कविः ।
तस्य कर्म स्मृतं काव्यम् ॥' इति ।

सद्यो रसास्वादजन्मा निरस्तवेद्यान्तरा ब्रह्मास्वादसदृशी प्रीतिरानन्दः । इदं सर्वप्रयोजनोपनिषद्भूतं कविसहृदययोः काव्यप्रयोजनम् ।

---

रात्स्याद्वादाधीनं सकलभावानामर्थक्रियाकारित्वलक्षणं सत्त्वं प्ररूप्यते । चेतनाचेतनरूपसकलद्रव्याणां योनयश्चेति वस्तुतत्त्वनिरूपणेन द्रव्यस्य गणितबलेन सुरादीनां सर्वमानायूंषि चन्द्राद्युपरागादयश्च निश्चीयन्ते इत्यायुरादिज्ञानेन गणितस्य वैराग्योपजननमिति वृत्तं प्रश्रूयते । इत्यवदातकथनेन वैराग्योत्पत्तिहेतुत्वाद्धर्मकथायाः परमपुरुषार्थाभिधायकत्वं परम्परयास्तीति ॥ **सर्वप्रयोजनोपनिषद्भूतमिति** । यशोव्युत्पत्तिफलत्वेऽपि पर्यन्ते सर्वत्रानन्दस्यैव साध्यत्वात् । तथा हि । कवेस्तावत्कीर्त्यापि प्रीतिरेव संपाद्या । यदाह—'कीर्तिं स्वर्गफलामाहुः' इत्यादि । श्रोतॄणां व्युत्पत्तिर्यद्यप्यस्ति, तथापि तत्र प्रीतिरेव प्रधानम् । अन्यथा प्रभुसंमितेभ्यो वेदादिभ्यो मित्रसंमितेभ्यश्चेतिहासादिभ्यः कोऽस्य काव्यरूपस्य व्युत्पत्तिहेतोर्जायासंमितत्वलक्षणो विशेष इति । चतुर्वर्गव्युत्पत्तिरपि चानन्द एव पार्यन्ति(न्ति)कं मुख्यफलमिति ॥ **कविसहृदययोरिति** । यः काव्यं कुरुते स **कविः** । यस्य तु काव्यानुशीलनाभ्यासवशाद्विशदीभूते मनोमुकुरे वर्णनीयतन्मयीभवनायोग्यतासहृदयसंवादभाक् स **सहृदयः** । काव्यकर्तृत्वलक्षणपूर्वावस्थापेक्षया कविशब्दनिर्देशः । यतः—कवेरपि भावकावस्थायामेव रसास्वादः संपद्यते पृथगेव हि कवित्वाद्भावकत्वम् । यदाह—'सरस्वत्यास्तत्त्वं कविसहृदयाख्यं विज-

यशस्तु कवेरेव । यत इयति संसारे चिरातीता अप्यद्य यावत्कालिदासादयः सहृदयैः स्तूयन्ते कवयः । प्रभुतुल्येभ्यः शब्दप्रधानेभ्यो वेदागमादिशास्त्रेभ्यो मित्रसंमितेभ्योऽर्थप्रधानेभ्यः पुराणप्रकरणादिभ्यश्च शब्दार्थयोर्गुणभावे च रसप्राधान्ये च विलक्षणं काव्यं कान्तेव सरसतापादनेन संमुखीकृत्य 'रामादिवद्वर्तितव्यं न रावणादिवत्' इत्युपदिशतीति सहृदयानां प्रयोजनम् । तथा चोक्तं हृदयदर्पणे—

'शब्दप्राधान्यमाश्रित्य तत्र शास्त्रं पृथग्विदुः ।
अर्थे तत्त्वेन युक्ते तु वदन्त्याख्यानमेतयोः ।
द्वयोर्गुणत्वे व्यापारप्राधान्ये काव्यगीर्भवेत् ॥' इति ।

---

यते' इति ॥ **यशस्त्विति** । यदाह—'अमरसदनादिभ्यो भूता न कीर्तिरनश्वरी भवति यदसौ संवृद्धापि प्रणश्यति तत्क्षये । तदलममलं कर्तुं काव्यं यतेत समाहितो जगति सकले व्यासादीनां विलोक्य परं यशः ॥' **कवेरेवेति** । न तु सहृदयस्य ॥ **प्रभुतुल्येभ्य इति** । कर्तव्यमिदमित्याज्ञामात्रपरमार्थेभ्यः ॥ **मित्रसंमितेभ्य इति** । अस्येदं वृत्तममुष्मात्कर्मण इत्येवं युक्तियुक्तकर्मफलसंबन्धप्रकटनकारिभ्यः ॥ **उपदिशतीति** । अप्रयासेन शिक्षयति । व्युत्पत्तिं करोतीति यावत् । अयमभिप्रायः—ये शास्त्रेतिहासेभ्योऽलब्धव्युत्पत्तयोऽथ चावश्यव्युत्पाद्याः प्रजार्थसंपादनयोग्यताक्रान्ता राजपुत्रप्रायास्तेषां जायासंमितत्वेन परमप्रीतिकारिणः काव्यात् [स]हृदयानुप्रवेशमुखेन चतुर्वर्गोपायव्युत्पत्तिराधेया । हृदयानुप्रवेशश्च रसास्वादमय एवासवरसश्चतुर्वर्गोपायव्युत्पत्तिनान्तरीयकविभावादिसंयोगप्रसादोऽपनत इत्येवं रसोचितविभावाद्युपनिबन्धे रसास्वादवैवस्य(श्य)मेव स्वरसभाविन्यां व्युत्पत्तौ प्रयोजकमिति प्रीतिरेव व्युत्पत्तेः प्रयोजिकेत्यर्थः । ननु—'चरां बाल्येऽडिस्तां(?) तरुणिमनि यूनः परिणतावपीप्सामो वृद्धान्परिणयविधिस्तु स्थितिरियम् । त्वयारब्धं जन्म क्षपयितुममार्गेण किमिदं न नो गोत्रेषु त्रिः कचिदपि सतीलाञ्छनमभूत् ॥' इत्यादिकाव्यमसदुपदेशकं दृश्यते । व्युत्प-

धनमनैकान्तिकं व्यवहारकौशलं शास्त्रेभ्योऽप्यनर्थनिवारणं प्रकारान्तरेणापीति न काव्यप्रयोजनतयास्माभिरुक्तम् ॥

प्रयोजनमुक्त्वा काव्यस्य कारणमाह—

**प्रतिभास्य हेतुः ।**

प्रतिभा नवनवोल्लेखशालिनी प्रज्ञा । अस्य काव्यस्य । इदं प्रधानं कारणम् । व्युत्पत्त्यभ्यासौ तु प्रतिभाया एव संस्कारकाविति वक्ष्यते ॥

सा च सहजौपाधिकी चेति द्विधा । तत्र सहजामाह—

**सावरणक्षयोपशममात्रात्सहजा ॥**

सवितुरिव प्रकाशस्वभावस्यात्मनोऽभ्रपटलमिव ज्ञानावरणीयाद्यावरणं तस्योदितस्य क्षयेऽनुदितस्योपशमे च यः प्रकाशाविर्भावः सा सहजा प्रतिभा । मात्रग्रहणं मन्त्रादिकारणनिषेधार्थम् । सहजप्रतिभाबलाद्धि गुणभृतः सद्यो द्वादशाङ्गीमासूत्रयन्ति स्म ॥

द्वितीयामाह—

**मन्त्रादेरौपाधिकी ।**

---

त्तिरपि च तस्मात्तादृग्विषया संभाव्यते । ततश्च तदनुपदेश्यमित्यायातम् । सत्यम् । अस्त्ययमुपदेशः । किं तु निषेध्यत्वेन, न विधेयत्वेन । य एवंविधा विधयः परस्त्रीषु पुंसां संभवन्ति तानवबुध्य परिहरेदिति कवीनां भावः ॥ एवमानन्दयशश्चतुर्वर्गोपायव्युत्पत्तीनां काव्यप्रयोजनतामसाधारणीं प्रतिपाद्य यत् कैश्चित् 'श्रीहर्षादेर्धावकादीनामिव धनं राजादिगतोचिताचारपरिज्ञानमित्यादेर्मयूरादीनामिवानर्थनिवारणं च' प्रयोजनत्रयमुपन्यस्तम्, तत्प्रतिक्षिपति—**धनमनैकान्तिकमिति** । न हि काव्याद्धनं भवत्येवेत्यनैकान्तिकमित्यर्थः । तथा चाह—'उपशमफलाद्विद्याबीजात्फलं धनमिच्छतो भवति विफलो यद्यायासस्तदत्र किमद्भुतम् । न नियतफलाः कर्तुर्भावाः फलान्तरमीशते जनयति खलु व्रीहेर्बीजं न जातु यवाङ्कुरम् ॥' इति ॥ **शास्त्रेभ्य इति** । चाणक्यादिप्रणीतेभ्यः ॥ **प्रकारान्तरेणा-**

मन्त्रदेवतानुग्रहादिप्रभवौपाधिकी प्रतिभा । इयमप्यावरणक्षयोपशमनिमित्तैव । दृष्टोपाधिनिबन्धनत्वात्तु औपाधिकीत्युच्यते ॥

सा चेयं द्विधापि प्रतिभा—

**व्युत्पत्त्यभ्यासाभ्यां संस्कार्या ।**

व्युत्पत्त्यभ्यासौ वक्ष्यमाणौ ताभ्यां संस्करणीया । अत एव न तौ काव्यस्य साक्षात्कारणं प्रतिभोपकारिणौ तु भवतः । दृश्येते हि प्रतिभाहीनस्य विफलौ व्युत्पत्त्यभ्यासौ ॥

व्युत्पत्तिं व्यनक्ति—

**लोकशास्त्रकाव्येषु निपुणता व्युत्पत्तिः ।**

लोके स्थावरजङ्गमात्मके लोकवृत्ते च शास्त्रेषु शब्दच्छन्दोनुशासनाभिधानकोशश्रुतिस्मृतिपुराणेतिहासागमतर्कनाट्यार्थकामयोगादिग्रन्थेषु

---

**पीति** । मन्त्रानुष्ठानादिना ॥ **लोके इति** । इह लोकशब्देन स्थावरजङ्गमात्मको लोकः । तद्व्यवहारश्चाभिधीयत इत्यर्थः । स च देशकालादिभेदादनेकप्रकारः प्रकृतिव्यत्ययाख्ये रसदोषे प्रपञ्चयिष्यते ॥ **शब्देत्यादि** । **शब्दानुशासनं** व्याकरणं ततो हि शब्दशुद्धिः । तन्नैपुण्यं यथा—'द्विगुरपि सद्वन्द्वोऽहं गृहे च मे सततमव्ययीभावः । तत्पुरुष कर्म धारय येनाहं स्यां बहुव्रीहिः ॥' **छन्दोनुशासनं** छन्दोविचितिः । काव्याभ्यासाद्वृत्तपरिज्ञानेऽपि हि मात्रावृत्तादौ तत एव निश्चयः । तन्नैपुण्यं यथा—'उद्धिही च संसृतौ स्याद्भुवरज्ञोगुरुनो(?) भवेद्यदि क्षितौ श्रीजिनेन्द्रशासनम्' ॥ **अभिधानकोशो** नाममाला । ततो हि पदार्थनिश्चयः । अपूर्वाभिधानलाभार्थत्वं प्रयुक्तमभिधानकोशस्याप्रयुक्तस्याप्रयोज्यत्वात् । यदि तर्हि प्रयुक्तं प्रयुज्यते किमिति पदस्य संदिग्धार्थत्वमाशङ्कितम्, तत्र सामान्येनार्थगतिः संभवति । यथा नीवीशब्देन जघनवस्त्रग्रन्थिरुच्यते इति कस्यचिन्निश्चयः स्त्रियाः पुरुषस्य वेति संशयः । 'नीविराग्रन्थनं नार्या जघनस्थस्य वाससः' इति नाममालाप्रतीकमपदिश्यते इति ॥ अपौरुषेयवचनं **श्रुतिः** । यथा—'उर्वशी हाप्सराः पुरूरवसमैडं चकमे ।' तन्नैपुण्यं यथा—'चन्द्राद्बुधः समभवद्भगवान्नरेन्द्रमाद्यं पुरूरवसमैलमसावतस्त (सूत) । तं चाप्सराः

स्मरवती चक्रमे किमन्यदत्रोर्वशी स्मितवशीकृतशक्रचेताः ॥' श्रुत्यर्थस्मरणात्स्मृतिः । यथा—'बह्वर्थेष्वभियुक्तेन सर्वत्र व्यपलापिना । संभावितैकदेशेन देयं यदभियुज्यते ॥' तन्नैपुण्यं यथा—'हंस प्रयच्छ मे कान्तां गतिस्तस्याश्च या हृता । संभावितैकदेशेन देयं यदभियुज्यते ॥' वेदाख्यानोपनिबन्धनप्रायं **पुराणम्** । यथा—'हिरण्यकशिपुर्दैत्यो यां यां स्मित्वाप्युदैक्षत । भयभ्रान्तैः सुरैश्चक्रे त्रिसंध्यं त्रिर्दिशे नमः ॥' तन्नैपुण्यं यथा—'स संचरिष्णुर्भुवनत्रयेऽपि यां यदृच्छयाशिश्रियदाश्रयः श्रियाम् । अकारि तस्यै मुकुटोपलस्खलत्करैस्त्रिसंध्यं त्रिदशैर्दिशे नमः ॥' पुराणप्रतिभेद **एवेतिहासः** । यथा—'न स संकुचितः पन्था येन वाली हतो गतः । समये तिष्ठ सुग्रीव मा वालिपथमन्वगाः ॥' तन्नैपुण्यं यथा—'मदं नवैश्वर्यलवेन लम्भितं विसृज्य पूर्वैः समयो विमृश्यताम् । जगज्जिघत्सातुरकण्ठपद्धतिर्न बालिनैवाहिततृप्तिरेककः ॥' आप्तवचन**मागमः** । तत्र शैवागमनैपुण्यं यथा—'घोरघोरतरातीतब्रह्मविद्याकलातिगः । परापदपदव्यापी पायाद्वः परमेश्वरः ॥' बौद्धागमनैपुण्यं यथा—'कलिकलुषकृतानि यानि लोके मयि निपतन्तु विमुच्यतां स लोकः । मम हि सुचरितेन सर्वसत्त्वाः परमसुखेन सुखावनिं प्रयान्तु ॥' एवमागमान्तरेष्वपि ॥ **तर्कः** षड्प्रकारः । तत्रार्हतो यथा—शरीरपरिमाण आत्मा । अन्यथा शरीराफल्यमात्माफल्यं वा । तन्नैपुण्यं यथा—'शरीरमात्रमात्मानं ये विदन्ति जयन्ति ते । तच्चुम्बनेऽपि यज्जातः सर्वाङ्गपुलकोऽस्य मे ॥' बौद्धीयो यथा—विवक्षापूर्वा हि शब्दास्तामेव विवक्षां सूचयेयुः । तन्नैपुण्यं यथा—'भवतु विदितं शब्दा वक्तुर्विवक्षितसूचकाः स्मरवति यतः कान्ते कान्तां बलात्परिचुम्बति । न न न न म मा मा मा स्प्राक्षीर्निषेधपरं वचो भवति शिथिले मानग्रन्थौ तदेव विधायकम् ॥' लौकायतिको यथा—भूतेभ्यश्चैतन्यं मदशक्तिवत् । तन्नैपुण्यं यथा—'बहुविधमिह साक्षिचिन्तकाः प्रवदन्त्यन्यमितः कलेवरात् । अपि मदतिहिते[1] च चिन्तकाः प्रलयं यान्ति सहैव चिन्तया ॥' सांख्यीयो यथा—'नासतो विद्यते भावो नाभावो विद्यते सतः । उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥' तन्नैपुण्यं यथा—'य एते यज्वानः प्रथितमहसो येऽप्यवनिपा मृगाक्ष्यो याश्चैताः कृतमपरसंसारकथया । अमी ये दृश्यन्ते फलकुसुमनम्राश्च तरवो जगत्येवंरूपा विलसति मृदेषा भगवती ॥' न्यायवैशेषिकीयो

१. 'निहिते' इति भवेत्.

यथा—स किंसामग्रीक ईश्वरः कर्तेति पूर्वपक्षे निरतिशयैश्वर्यस्य कर्तृत्वमिति सिद्धान्तः । तन्नैपुण्यं यथा—'किमीहः किंकायः स खलु किमुपायस्त्रिभुवनं किमाधारो धाता सृजति किमुपादानमिति च । अतर्क्यैश्वर्ये त्वय्यनवसरदुःस्थो हतधियः कुतर्कोऽयं कांश्चिन्मुखरयति मोहाय जगतः ॥' **नाट्यशास्त्र**नैपुण्यं यथा—'आतन्वत्सरसां स्वरूपरचनामानन्दिबिन्दुद्वयं भावग्राहिशुभप्रवेशकगुणं गम्भीरगर्भस्थिति । उच्चैर्वृत्तिसपुष्करव्यतिकरं संसारविष्कम्भकं भियाद्वो भरतस्य भाषितमिव ध्वान्तं पयो यामुनम् ॥' **अर्थशास्त्र**नैपुण्यं यथा मुद्राराक्षसनाटके । **कामशास्त्र**नैपुण्यं यथा—'अधरे बिन्दुः कण्ठे मणिमाला कुचयुगे शशप्लुतकम् । तव सूचयन्ति सुन्दरि कुसुमायुधशास्त्रपण्डितं रमणम् ॥' **योगशास्त्र**नैपुण्यं यथा—'पृथुशास्त्रकथाकन्थारोमन्थेन वृथात्र किम् । अन्वेष्टव्यं प्रयत्नेन तत्त्वज्ञैर्ज्योतिरान्तरम् ॥' आदिग्रहणादायुर्वेदशास्त्रनैपुण्यं यथा—'अङ्गे चन्दनपङ्कपङ्कजबिसच्छेदावलीनां मुहुस्तापः शाप इवैष शोषणपटुः [१]कंस्यः संषीकस्य नः । श्वासासंवृतसारहाररुचयः संभिन्नपीनांशुकाजातः प्रागनिदानवेदनमहारम्भः स तस्या ज्वरः ॥' ज्योतिःशास्त्रनैपुण्यं यथा—'[२]धामासौकयतां कलाः कलयतां छायां [३]समादिन्वतां क्लेशः केवलमङ्गुलीर्गणयतां मौहूर्तिकानामयम् । धन्या सा रजनी तदेव सुदिनं पुण्यः स एव क्षणो यत्राज्ञाचरणप्रियानयनयोः सीमानमेति प्रिया ॥' गजलक्षणनैपुण्यं यथा—'कर्णाभ्यर्णविकीर्णचामरमरुद्विस्तीर्णनिःश्वासवाञ्शङ्कच्छत्रविराजिराज्यविभवद्वेषी निलीनेक्षणः । स्मृत्वा राघवकुञ्जरः प्रियतमामेकाकिनीं कानने संत्यक्तां चिरमुक्तभोगकवलं क्लेशोष्मणा शुष्यति ॥' तुरगशास्त्रनैपुण्यं यथा—'आवर्तशोभः पृथुसत्त्वराशिः फेनावदातः पवनोरुवेगः । गम्भीरघोषोऽद्रिविमर्दखेदादश्वाकृतिं कर्तुमिवोद्यताब्धिः ॥' रत्नपरीक्षानैपुण्यं यथा—'द्वौ वज्रवर्णौ जगतीपतीनां सद्भिः प्रदिष्टौ न तु सार्वजन्यौ । यः स्याज्जपाविद्रुमभङ्गशोणो यो वा हरिद्रारससंनिकाशः ॥' धातुवादनैपुण्यं यथा—'नखदलितहरिद्राग्रन्थिगौरे शरीरे स्फुरति विरहजन्मा कोऽप्ययं पाण्डुभावः । बलवति सति यस्मिन्सार्धमावर्त्य हस्ता रजतमिव मृगाक्ष्याः कल्पितान्यङ्गकानि ॥' द्यूतनैपुण्यं यथा—'यत्रानेकः क्वचिदपि गृहे तत्र तिष्ठत्यथैको यत्राप्येकस्तदनु बहवस्तत्र नैकोऽपि चास्ते । इत्थं नेयौ रजनिदिवसौ तोलयन्द्वाविवाक्षौ कालः काल्या सह

१. 'शशी कस्य' इति भवेत्. २. 'धामालोकयता' इति भवेत्. ३. 'समादित्सतां' इति भवेत्.

काव्येषु महाकविप्रणीतेषु निपुणत्वं तत्त्ववेदित्वं व्युत्पत्तिः लोकादिनिपुणता । संस्कृतप्रतिभा हि तदनतिक्रमेण काव्यमुपनिबध्नाति ॥

अभ्यासं व्याचष्टे—

**काव्यविच्छिक्षया पुनः पुनः प्रवृत्तिरभ्यासः ।**

काव्यं कर्तुं जानन्ति विचारयन्ति वा ये ते काव्यविदः कविसहृदयाः । वेत्तेर्विन्तेश्चावृत्त्या रूपम् । तेषां शिक्षया वक्ष्यमाणलक्षणया काव्य एव पौनःपुन्येन प्रवृत्तिरभ्यासः । अभ्याससंस्कृता हि प्रतिभा काव्यामृतकामधेनुर्भवति । यदाहुः—'अभ्यासो हि कर्मसु कौशलमावहति । नहि सकृन्निपतितमात्रेणोदबिन्दुरपि ग्रावणि निम्नतामादधतीति शिक्षयेत्युक्तम्' इति ॥

शिक्षां लक्षयति—

**सतोऽप्यनिबन्धोऽसतोऽपि निबन्धो नियमश्छायाद्युपजीवनादयश्च शिक्षाः ।**

सतोऽपि जातिद्रव्यगुणक्रियादेरनिबन्धनम्, असतोऽपि जात्यादेरेव

---

बहुकलः क्रीडति प्राणिशारैः ॥' इन्द्रजालनैपुण्यं यथा—'एष ब्रह्मा सरोजे रजनिकरकलाशेखरः शंकरोऽयं दोर्भिर्दैत्यान्तकोऽसौ सधनुरसिगदाचक्रचिह्नैश्चतुर्भिः । एषोऽप्यैरावणस्थस्त्रिदशपतिरमी देवि देवास्तथान्ये नृत्यन्ति व्योम्नि चैताश्चलचरणरणन्नूपुरा दिव्यनार्यः ॥' चित्रनैपुण्यं यथा—'अतथ्यान्यपि तथ्यानि दर्शयन्ति विचक्षणाः । समनिम्नोन्नतानीव चित्रकर्मविदो जनाः ॥' धनुर्वेदनैपुण्यं यथा—'आर्याशास्त्रघनौघलाघववती संधानसंबन्धिनी स्थाणुस्थानकसौष्ठवप्रणयिनी चित्रक्रियालंकृतिः । निःस्पन्देन मयातिविस्मयमयी सत्यं स्थितप्रत्यया संहारे खरदूषणत्रिशिरसामेषैव दृष्टा स्थितिः ॥' एवमन्यदपि ॥ **लोकादिनिपुणता । संस्कृतप्रतिभा हीति** । यदाह—'न स शब्दो न तद्वाच्यं न स न्यायो न सा कला । जायते यन्न काव्याङ्गमहाभारो गुरुः कवेः ॥' इति ॥

निबन्धनम्, नियमोऽतिप्रसक्तस्य जात्यादेरेवैकत्रावधारणम्, छायायाः प्रतिबिम्बकल्पतया आलेख्यप्रख्यतया तुल्यदेहितुल्यतया परपुरप्रवेश-

---

**छायाया इति।** छायाया अर्थादर्थस्य। तदुपजीवनं क्वचित्प्रतिबिम्बतुल्यतया[1]। यथा—'ते पाण्डवाः पशुपतेरलिनीलभासः कण्ठप्रदेशघटिताः फणिनः स्फुरन्तः। चन्द्रामृतांशुकणसेकसुखप्ररूढैर्यैरङ्कुरैरिव विराजति कालकूटः॥' यथा च—'जयन्ति नीलकण्ठस्य नीलाः कण्ठे महाहयः। गलद्गङ्गाम्बुसंसिक्तकालकूटाङ्कुरा इव॥' यदाह—'अर्थः स एव सर्वो वाक्यान्तरविरचनापरं यत्र। तदपरमार्थविभेदं काव्यं प्रतिबिम्बकल्पं स्यात्॥' क्वचिदालेख्यप्रख्यतया। तत्रैवार्थे यथा—'जयन्ति धवलव्यालाः शंभोर्जूटावलम्बिनः। गलद्गङ्गाम्बुसंसिक्तचन्द्रकन्दाङ्कुरा इव॥' यदाह—'कियतापि वस्तुसंस्कारकर्मणा वस्तु भिन्नवद्भाति। तत्कथितमर्थचतुरैरालेख्यप्रख्यमिति काव्यम्॥' क्वचित्तुल्यदेहितुल्यतया। यथा—'अवीनादौ कृत्वा भवति तुरगो यावदवधिः पशुर्धन्यस्तावत्प्रतिवसति यो जीवति सुखम्। अमीषां निर्माणं किमपि तदभूद्द्धकरिणां वनं वा क्षोणीभृद्भवनमथ वा येन शरणम्॥' अत्रार्थे—'प्रतिगृहमुपलायामेक एव प्रकारो मुहुरुपकरणत्वादर्थिताः पूजिताश्च। स्फुरति ह नु मणीनां किं तु तद्धाम येन क्षितिपतिभवने वा स्वाकरे वा निवासः॥' यदाह—'विषयस्य यत्र भेदेऽप्यभेदबुद्धिर्नितान्तसादृश्यात्। तत्तुल्यदेहितुल्यं काव्यं बध्नन्ति सुधियोऽपि॥' क्वचित्परपुरप्रवेशप्रतिमतया। यथा—'यस्यारातिनितम्बिनीभिरभितो वीक्ष्याम्बरं प्रावृषि स्फूर्जद्गर्जितनिर्जिताम्बुधिरिव स्फाराभ्रवृन्दाकुलम्। उत्सृष्टप्रसभाभिषेणनभयस्पष्टप्रमोदाश्रुभिः किंचित्कुञ्चितलोचनाभिरसकृद्घ्राताः कदम्बानिलाः॥' अत्रार्थे—'आच्छिद्य प्रियतः कदम्बकुसुमं यस्यारिदारैर्नवं यत्राभङ्गविधायिनो जलमुचां कालस्य चिह्नं महत्। हे मातः परिचुम्बितं नयनयोर्न्यस्तं हृदि स्थापितं सीमन्ते निहितं कथंचन ततः कर्णावतंसीकृतम्॥' यदाह—'मूलैक्यं यत्र भवेत्परिकरबन्धस्तु दूरतोऽनेकः। तत्परपुरप्रवेशप्रतिमं काव्यं सुकविभाव्यम्॥' यथोत्तरं चामीषां चतुर्णामपि प्राधान्यम्। पदोपजीवनं यथा—'दूराकृष्टशिलीमुखव्यतिकरान्नो किं किरातानिमानाराध्यावृतपीनलोहितमुखान्किं वा पलाशानपि। पान्थाः केसरिणं न पश्यत पुरोऽप्येनं वसन्तं वने मूढा रक्षत जीवितानि शरणं यात **प्रियां** देवताम्॥' यथा च—'मा गाः पान्थ **प्रियां**

---

[1] 'कल्पतया' इति मूलपुस्तके उपलभ्यते.

प्रतिमतया चोपजीवनम्, आदिशब्दात्पदपादादीनां च काव्यान्तराद्य-

---

मुक्त्वा दूराकृष्टशिलीमुखम् । स्थितं पन्थानमावृत्य किं किरातं न पश्यसि ॥' पादोपजीवनं यथा—'गन्तव्यं यदि नाम निश्चितमहो गन्तासि केयं त(त्व)रा द्वित्राण्येव पदानि तिष्ठतु भवान्पश्यामि यावन्मुखम् । संसारे घटिकाप्रवाहविग-[ल]द्धारासमे जीविते **को जानाति पुनस्त्वया सह मम स्याद्वा न वा संगमः** ॥' यथा च—'हंहो स्निग्धसखे विवेक बहुभिः प्राप्तोऽसि पुण्यैर्मया गन्तव्यं कतिचिद्दिनानि भवता नास्मत्सकाशात्क्वचित् । त्वत्सङ्गेन करोमि जन्म-मरणोच्छेदं गृहीतत्वरः **को जानाति पुनस्त्वया सह मम स्याद्वा न वा संगमः** ॥' पादद्वयोपजीवनं यथा—'**तत्तावदेव शशिनः स्फुरितं महीयो** यावन्न तिग्मरुचिमण्डलमभ्युदेति । अभ्युद्गते तुहिनधामनिधौ तु तस्मिन्निन्दोः **सिताभ्रशकलस्य च को विशेषः** ॥' यथा च—'**तत्तावदेव शशिनः स्फुरितं महीयो** यावन्न किंचिदपि गौरितरं हसन्ति । ताभिः पुनर्वि-हसिताननपङ्कजाभिरिन्दोः **सिताभ्रशकलस्य च को विशेषः** ॥' पादत्रयोपजीवनं यथा—'**अरण्ये निर्जने रात्रावन्तर्वेश्मनि साहसे । न्यासापह्नवने चैव** दिव्या संभवति क्रिया ॥' यथा चोत्तरार्धे—'**तन्वङ्गी यदि लभ्येत** दिव्या संभवति क्रिया ॥' पादचतुष्टयोपजीवने तु परिपूर्णं चौर्यमेवेति न तन्निर्दिश्यते ॥ **आदि**ग्रहणात्पदैकदेशोपजीवनम् । यथा—'नाश्चर्यं यदनार्यास्तावस्त-प्रीतिरयं मयि । **मां**सोपयोगं कुर्वीत कथं क्षुद्रं हितो जनः ॥' यथा च—'कोपान्मा-निनि किं स्फुरत्यतितरां शोणाधरस्तेऽधरः किं वा चुम्बनकारणादयि तनोर्वायोर्वि-कारादयम् । तत्त्वं शुक्रसुगन्धिमाहितरसं स्निग्धं भजस्वादरान्मुग्धे **मांसरसं** ब्रुवन्निति तया गाढं समालिङ्गितः ॥' उक्त्युपजीवनं यथा—'ऊरुद्वन्द्वं सरसकद-लीकाण्डसब्रह्मचारि' इति । यथा च—'ऊरुद्वयं कदलकन्दलयोः सवंशश्रोणिः सि(शि)लाफलकसोदरसंनिवेशा । वक्षः स्तनद्वितयताडितकुम्भशोभं सब्रह्मचारि शशिनश्च मुखं मृगाक्ष्याः ॥' उक्तयोर्यथान्तरसंक्रान्ता न प्रत्यभिज्ञायते स्वदत्ते च(?) ॥ नन्विदमुपदेश्यमेव न भवति । यदित्थं कथयन्ति—'पुंसः कालातिपातेन चौर्यमन्यद्विशीर्यते । अपि पुत्रेषु पौत्रेषु वाक्चौर्यं न विशीर्यते ॥' इत्याशङ्क्याह—**यथौचित्यमिति** । अयमप्रसिद्धः प्रसिद्धिमानहम्, अयमप्रतिष्ठः प्रतिष्ठावानहम्, अप्रक्रान्तमिदमस्य संविधानकं प्रक्रान्तं मम, गुडूचीवचनोऽयं मृद्वीकावच-नोऽहम्, अनादृतभाषाविशेषोऽयम् आदृतभाषाविशेषोऽहम्, प्रशान्तज्ञातृकमिदं

औचित्यमुपजीवनम् । पुनरादिपदात्समस्यापूरणाद्याः शिक्षाः। तत्र

---

देशान्तरकर्तृकमिदम्, उत्सन्नबन्धनमूलमिदं म्लेच्छितकोपनिबद्धमिदम्, इत्येवमादिभिः कारणैः शब्दहरणार्थहरणे चाभिरमयत्यवन्तिसुन्दरी(?)। आहुश्च—'नास्त्यचौरः कविजनो नास्त्यचौरो वणिग्जनः। स नन्दति विना वाच्यं यो जानाति निगूहितुम्॥ उत्पादकः कविः कश्चित्कश्चित्तु परिवर्तकः। आच्छादकस्तथा चान्यस्तथा संवर्धकोऽपरः॥ शब्दार्थोक्तिषु यः पश्येदिह किंचन नूतनम्। उल्लिखेत्किंचन प्राच्यं दृश्यतां स महाकविः॥' **समस्यापूरणाद्या इति**। तत्र पादसमस्या यथा—'मृगात्सिंहः पलायते' इति, 'समुद्राद्धूलिकच्छिते' इति चैतौ चतुर्थौ पादौ। यथाक्रममन्यत्पादत्रयं यथा—'मदमन्थरमातङ्गकुम्भपाटनलम्पटः। दैवे पराङ्मुखे कष्टं **मृगात्सिंहः पलायते**॥' 'सीतासमागमोत्कण्ठाकर्णान्ताकृष्टधन्वनः। राघवस्य शराङ्गारैः **समुद्राद्धूलिकच्छिते**॥' पादद्वयसमस्या यथा—'चव्यचित्रकनागरैः', 'लङ्कायां रावणो हतः' इति द्वितीयचतुर्थौ पादौ। प्रथमतृतीयौ तु—'मुमूर्षो किं तवाद्यापि **चव्यचित्रकनागरैः**। स्मर नारायणं येन **लङ्कायां रावणो हतः**॥' 'किमपि किमिह दृष्टं स्थानमस्ति श्रुतं वा व्रजति दिनकरोऽयं यत्र नास्तं कदाचित्। भ्रमति विहगसार्थानित्थमापृच्छ्यमानो रजनिविरहभीतश्चक्रवाको वराकः॥' यथा च—'जयति सितविलोलव्यालयज्ञोपवीती घनकपिलजटान्तर्भ्रान्तगङ्गाजलौघः। अविदितमृगचिह्नामिन्दुलेखां दधानः परिणतशितिकण्ठश्यामकण्ठः पिनाकी॥' यथा च—'कुमुदवनमपश्रि श्रीमदम्भोजखण्डं त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः। उदयमहिमरश्मिर्याति शीतांशुरस्तं हतविधिललितानां ही विचित्रो विपाकः॥' इति वृत्तत्रयात्प्रथमद्वितीयचतुर्थपादत्रयसमस्यायास्तृतीयपादेन पूरणं यथा—**'किमपि किमिह दृष्टं स्थानमस्ति श्रुतं वा घनकपिलजटान्तर्भ्रान्तगङ्गाजलौघः**॥ निवसति स पिनाकी यत्र यायात्तदस्मिन् **हतविधिललितानां ही विचित्रो विपाकः**॥' **आद्य**ग्रहणाद्वाक्यार्थशून्यवृत्ताभ्यासो यथा—'आनन्दसंदोहपदारविन्दकुन्देन्दुकन्दोदितबिन्दुवृन्दम्। इन्दिन्दिरान्दोलितमन्दमन्दनिष्पन्दनन्दन्मकरन्दवृन्दम्॥' पुरातनवृत्तेषु पदपरावृत्त्याभ्यासो यथा—'वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये। जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ॥' 'वाण्यर्थाविव संपृक्तौ वाण्यर्थप्रतिपत्तये। जगतो जनकौ वन्दे शर्वाणीशशिशेखरौ॥' एवं महाकाव्यार्थचर्वणपरकृतकाव्य-

सतोऽपि सामान्यस्यानिबन्धो यथा—मालत्या वसन्ते, पुष्पफलस्य चन्दनद्रुमेषु, फलस्याशोकेषु। द्रव्यस्य यथा—कृष्णपक्षे सत्या अपि ज्योत्स्नायाः, शुक्लपक्षे त्वन्धकारस्य। गुणस्य यथा—कुन्दकुड्मलानां कामिदन्तानां च रक्तत्वस्य, कमलमुकुलप्रभृतेश्च हरितत्वस्य, प्रियङ्गुपुष्पाणां तु पीतत्वस्य। क्रियाया यथा—दिवा नीलोत्पलानां विकासस्य, निशानिमित्तस्य शेफालिकाकुसुमानां विस्रंसस्य च॥

---

पाठायाः शिक्षा अप्यूह्याः। किं च—'स्वास्थ्यं प्रतिभाभ्यासो भक्तिर्विद्वत्कथा बहुश्रुतता। स्मृतिदार्ढ्यमनिर्वेदश्च मातरोऽष्टौ कवित्वस्य॥' इति। **मालत्या वसन्त इति।** 'अनिबन्धः' इति पूर्वस्मात्प्रत्येकमभिसंबध्यते। मालत्या वसन्तेऽनिबन्धो यथा—'मालतीविमुखश्चैत्रो विकासी पुष्पसंपदाम्। आश्चर्यं जातिहीनस्य कथं सुमनसः प्रियः(याः)॥' पुष्पफलस्य चन्दनद्रुमेष्वनिबन्धो यथा—'यद्यपि चन्दनविटपी विधिना फलकुसुमवर्जितो विहितः। निजवपुषैव परेषां तथापि संतापमपनयति॥' फलस्याशोकेष्वनिबन्धो यथा—'दैवायत्ते हि फले किं क्रियतामेकमत्र तु वदामः। नाशोकस्य किसलयैर्वृक्षान्तरपल्लवास्तुल्याः॥' कृष्णपक्षे ज्योत्स्नाया अनिबन्धो यथा—'ददृशाते जनैस्तत्र यात्रायां सकुतूहलैः। बलभद्रप्रलम्बघ्नौ पक्षाविव सितासितौ॥' शुक्लपक्षेऽन्धकारस्यानिबन्धो यथा—'मासि मासि समा ज्योत्स्ना पक्षयोः कृष्णशुक्लयोः। तत्रैकः शुक्लतां यातो यशः पुण्यैरवाप्यते॥' कुन्दकुड्मलानां कामिदन्तानां च रक्तत्वस्यानिबन्धो यथा—'द्योतितान्तःप्रभैः कुन्दकुड्मलाग्रदतः स्मितैः। स्नपितेवाभवत्तस्य शुद्धवर्णा सरस्वती॥' कमलमुकुलानां हरितत्वस्यानिबन्धो यथा—'उद्दण्डोदरपुण्डरीकमुकुलभ्रान्तिस्पृशा दंष्ट्रया मग्नां लावणसैन्धवेत(म्भ)सि महीमुद्यच्छतो हेलया। तत्कालाकुलदेवदानवनुतैरुत्तालकोलाहलं शौरेरादिवराहलीलमवतादभ्रंलिहाग्रं वपुः॥' प्रियङ्गुपुष्पाणां पीतत्वस्यानिबन्धो यथा—'प्रियङ्गुश्याममम्भोधि(?)रन्ध्रीणां स्तनमण्डलम्। अलंकर्तुमिव स्वच्छाः स्तुवे मौक्तिकसंपदः॥' दिवा नीलोत्पलानां विकासस्यानिबन्धो यथा—'आलिख्य पत्रमसितागुरुणाभिरामं रामामुखे क्षणसभाजितचन्द्रबिम्बे। जातः पुनर्विकसनावसरोऽयमस्येत्युक्त्वा सखी कुवलयं श्रवणे चकार॥' निशानिमित्तस्य शेफालिकाकुसुमानां विस्रंसस्यानिबन्धो

असतोऽपि सामान्यस्य निबन्धो यथा—नदीषु पद्मनीलोत्पलानाम्, जलाशयमात्रेऽपि हंसादीनाम्, यत्र तत्र पर्वते सुवर्णरत्नादीनामिति। द्रव्यस्य यथा—तमसि मुष्टिग्राह्यत्वस्य, सूचीभेद्यत्वस्य च। ज्योत्स्नायां च कुम्भोपवाह्यत्वादेः। गुणस्य यथा—यशोहासादौ शौक्ल्यस्य, अयशः-

---

यथा—'त्वद्विप्रयोगे किरणैस्तथोग्रैर्दग्धास्मि कृत्स्नं दिवसं सवित्रा। इतीव दुःखं शशिने गदन्ती शेफालिका रोदिति पुष्पबाष्पैः॥' नदीष्वित्यादि। 'निबन्धः' इति प्रत्येकमभिसंबध्यते। तत्र नदीषु पद्मनिबन्धो यथा—'दीर्घीकुर्वन्बहु मदकलं कूजितं सारसानां प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः। यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः सिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः॥' नीलोत्पलानि यथा—'गगनगमनलीलालम्भितान्स्वेदबिन्दून्मृदुभिरनिलचारैः खेचराणां हरन्तीम्। कुवलयवनकान्त्या जाह्नवीं सोऽभ्यपश्यद्दिनपतिसुतयेव व्यक्तदन्ताङ्कपालीम्॥' एवं कुमुदाद्यपि। जलाशयमात्रे हंसादयो यथा—'आसीदस्ति भविष्यतीह च जनो धन्यो धनी धार्मिको यः श्रीकेशववत्करिष्यति पुनः श्रीमत्कुडङ्गेश्वरम्। हेलान्दोलितहंससारसकुलक्रेङ्कारसंमूर्च्छितैरित्याघोषयतीव तन्नवनदी यच्चेष्टितं वीचिभिः॥' यत्र तत्र पर्वते सुवर्णं यथा—'नागावासश्चित्रपोताभिरामः स्वर्णस्फातिव्याप्तदिक्क्षक्ष(क्चक्र)वालः। साम्यात्सख्यं जग्मिवानम्बुराशेरेष ख्यातस्तेन जीमूतभर्ता॥' रत्नानि यथा—'नीलाश्मरश्मिपटलानि महेभमुक्तसूत्कारशीकरविसञ्ज्ञि(ञ्जि)तटान्तरेषु। आलोकयन्ति सरलीकृतकण्ठनालाः सानन्दमम्बुदधियात्र मयूरनार्यः॥' तमसो मुष्टिग्राह्यत्वं यथा—'तनुलग्ना इव ककुभः क्ष्मावलयं चरणचारमात्रमिव। दिवसमिव बालकदन्नी मुष्टिग्राह्यं तमः कुरुते॥' सूचीभेद्यत्वं यथा—'पिहिते कारागारे तमसि च सूचीमुखाग्रनिर्भेद्ये। मयि च निमीलितनयने तथापि कान्ताननं व्यक्तम्॥' ज्योत्स्नायाः कुम्भोपवाह्यत्वादि यथा—'शङ्खद्रावितकेतकोदरदलस्रोतःश्रियं बिभ्रती येयं मौक्तिकदामगुम्फनविधेर्योग्यच्छविः प्रागभूत्। उत्सेव्या(क्या) कलशीभिरञ्जलिपुटैर्ग्राह्या मृणालाङ्कुरैः पातव्या च शशिन्यमुग्धविभवे सा वर्तते चन्द्रिका॥' यशसः शौक्ल्यं यथा—'क्षेमः स्तोकोऽपि नाङ्गे श्वसितमविकलं चक्षुषां सैव वृत्तिर्मध्ये क्षीराब्धि-

पापादौ कार्ष्ण्यस्य, क्रोधानुरागयो रक्तत्वस्य । क्रियाया यथा— चकोरेषु चन्द्रिकापानस्य, चक्रवाकमिथुनेषु निशि भिन्नतटाश्रयणस्य ॥

जातेर्नियमो यथा—समुद्रेष्वेव मकराः, ताम्रपर्ण्यामेव मौक्तिकानि । द्रव्यस्य यथा—मलय एव चन्दनस्थानम्, हिमवानेव भूर्जोत्पत्तिपदम् । गुणस्य यथा—सामान्योपादाने रत्नानां शोणतैव, पुष्पाणां शुक्लतैव,

---

मग्नाः स्फुटमथ च वयं कोऽयमीदृक्प्रकारः । इत्थं दिग्भित्तिरोधःक्षतविसरतया मांसलैस्त्वद्यशोभिः स्तोकावस्थानदुःस्थैस्त्रिजगति धवले विस्मयन्ते मृगाक्ष्यः ॥' हासस्य यथा—'अट्टहासच्छलेनास्याः पश्य फेनौघपाण्डुराः । जगत्क्षय इवापीताः क्षरन्ति क्षीरसागराः ॥' अयशसः कार्ष्ण्यं यथा—'प्रसरन्ति कीर्तयस्ते तव च रिपूणामकीर्तयो युगपत् । कुवलयदलसंचलिताः प्रतिदिशमिव मालतीमालाः ॥' पापस्य यथा—'उत्खातनिर्मलकृपाणमयूखलेखाश्यामायितातनुरभूद्दशकंधरस्य । सद्यःप्रकोपकृतकेशववंशनाशसंकल्पसंजनितपापमलीमसेव ॥' क्रोधस्य रक्तत्वं यथा—'आस्थानकुट्टिमतलप्रतिबिम्बितेन कोपप्रभाप्रसरपाटलविग्रहेण । भौमेन मूर्च्छितरसातलकुक्षिभाजा भूमिश्चचाल चलनोदरवर्तिनेव ॥' अनुरागस्य यथा— 'गुणानुरागमिश्रेण यशसा तव सर्पता । दिग्वधूनां मुखे जातमकस्मादर्धकुङ्कुमम् ॥' चकोरेषु चन्द्रिकापानं यथा—'एतास्तो(स्ता) मलयोपकण्ठसरितामेणाक्षि रोधोभुवश्चापाभ्यासनिकेतनं भगवतः प्रायो मनोजन्मनः । यासु श्यामनिशासु पीततमसो मुक्तामयीश्चन्द्रिकाः पीयन्ते विवृतोर्ध्वचञ्चु विचलत्कठं चकोराङ्गनाः ॥' चक्रवाकमिथुनस्य निशि भिन्नतटाश्रयणं यथा—'संक्षिपता यावमतीस्तटिनीनां तनयतापयःपूरान् । र(ल)घु चरणाह्वयवयसा(सां) किं नोपकृतं निदाघेन ॥' समुद्रेष्वेव मकरा यथा—'गोत्राग्रहारं(?) नयतो गृहत्वं स्वनाममुद्राङ्कितमम्बुराशिम् । दायादवर्गेषु परिस्फुरत्सु दंष्ट्रावलेपो मकरस्य वन्द्यः ॥' ताम्रपर्ण्यामेव मौक्तिकानि यथा— 'कामं भवन्तु सरितो भुवि सुप्रतिष्ठाः स्वादूनि सन्तु सलिलानि च शुक्तयश्च । एतां विहाय वरवर्णिनि ताम्रपर्णीं नान्य(न्या)त्र संभवति मौक्तिककामधेनुः ॥' मलय एव चन्दनस्थानं यथा—'तापापहारचतुरो नागावासः सुरप्रियः । नान्यत्र मलयादद्रेर्दृश्यते चन्दनद्रुमः ॥' हिमवानेव भूर्जोत्पत्तिपदं यथा—'न्यस्ताक्षरा धातुरसेन यत्र भूर्जत्वचः कुञ्जरबिन्दुशोणाः । व्रजन्ति विद्याधरसुन्दरीणा-

मेघानां कृष्णतैव। क्रियाया यथा—ग्रीष्मादौ संभवदपि कोकिलरुतं वसन्त एव, मयूराणां वर्षास्वेव विरुतं नृत्यं चेति॥

अथ वा नियमः समयः कवीनां यथा—कृष्णनीलयोः कृष्णहरितयोः कृष्णश्यामयोः पीतरक्तयोः शुक्लगौरयोः, चन्द्रे शशमृगयोः,

---

मनङ्गलेखक्रिययोपयोगम्॥' माणिक्याना[1]ं च शोणतैव यथा—'सांयात्रिकैरविरतोपहृतानि कूटैः श्यामासु तीरवनराजिषु संभृतानि। रत्नानि ते दधति कच्चिदिहायताक्षि मेघौघरोदितविनाधिपबिम्बशङ्काम्॥' पुष्पाणां शुक्लतैव यथा—'पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं प्रस्फुटविद्रुमस्थम्। ततोऽनुकुर्याद्विशदस्य तस्यास्ताम्रौष्ठपर्यस्तरुचः स्मितस्य॥' मेघानां कृष्णतैव यथा—'मेघश्यामेन रामेण पूतवेदिविमानराट्। मध्ये महेन्द्रनीलेन रत्नराशिरिवाबभौ॥' कोकिलरुतं वसन्त एव। यथा—'वसन्ते शीतभीतेन कोकिलेन वने रुतम्। अन्तर्जलगताः पद्माः श्रोतुकामा इवोत्थिताः॥' मयूरनृत्यगीते वर्षास्वेव यथा—'मण्डलीकृत्य बर्हाणि कण्ठैर्मधुरगीतिभिः। कलापिनः प्रनृत्यन्ति काले जीमूतमालिनि॥' कृष्णनीलयोरैक्यं यथा—'नदीं तूर्णं कर्णोऽप्यनुसृतपुलिनां दाक्षिणात्याङ्गनाभिः समुत्तीर्णो वर्णामुभयतटबला बद्धवानीरहारा। तटे सह्यस्योच्चैः खसलिलनिवहो भाति नीलः स यस्याः प्रियस्यांसे पीने लुलित इव घनः केशपाशः सुकेश्याः॥' कृष्णहरितयोरैक्यं यथा—'मरकतसदृशं च यामुनं स्फटिकशिलाविमलं च जाह्नवम्। तदुभयमुदकं पुनातु वो हरिहरयोरिव संगतं वपुः॥' कृष्णश्यामयोरैक्यं यथा—'एतत्सुन्दरि नन्दनं शचिमणिस्निग्धालवालद्रुमं मन्दाकिन्यभिषिक्तमौक्तिकशिले मेरोस्तटे नन्दति। यत्र श्यामनिशासु मुञ्चति मिलन्मन्दप्रदोषानिलामुद्दामामरयोषितामभिरतं कल्पद्रुमश्चन्द्रिकाम्॥' पीतरक्तयोरैक्यं यथा—'लेख्यया विमलविद्रुमभासा संततं तिमिरमिन्दुरुदासे। दंष्ट्रया कनकभङ्गपिशङ्ग्या मण्डलं भुव इवादिवराहः॥' शुक्लगौरयोरैक्यं यथा—'कैलासगौरं वृषमारुरुक्षोः पादार्पणानुग्रहपूतपृष्ठम्। अवेहि मां किंकरमष्टमूर्तेः कुम्भोदरं नाम निकुम्भमित्रम्॥' एवं वर्णान्तरेष्वपि। चन्द्रे शशमृगयोरैक्यं यथा—'मा भैः शशाङ्क मम सीधुनि शास्ति राहुः खे रोहिणी वसति कातर किं बिभेषि। प्रायो विदग्धवनिता नवसंगमेषु

---

१. 'रत्नानां' मूलपाठः समीचीनः, 'सामान्योपादाने' इत्युपक्रमात्.

कामकेतने मकरमत्स्ययोः, अत्रिनेत्रसमुद्रोत्पन्नयोश्चन्द्रयोः, द्वादशानामप्यादित्यानाम्, नारायणदामोदरविष्णुमाधवकूर्मादेः, कमलासंपदोः, नागसर्पयोः, क्षीरक्षारसमुद्रयोः, सागरसमुद्रयोः, दैत्यदानवासुराणां चै-

---

पुंसां मनः प्रचलयन्ति किमत्र चित्रम् ॥' यथा च—'अङ्काधिरोपितमृगश्चन्द्रमा मृगलाञ्छनः । केसरी निष्ठुरक्षिप्तमृगपुङ्गो(यूथो) मृगाधिपः ॥' कामकेतने मकरमत्स्ययोरैक्यं यथा—'चापं पुष्पमयं गृहाण मकरः केतुः समुत्थीयतां चैते लक्ष्यभिदश्च पञ्च विशिखाः पाणौ पुनः सन्तु ते । दग्धा कापि तवाकृतेः प्रतिकृतिः कामोऽसि किं गूहसे रूपं दर्शय नात्र शंकरभयं सर्वे वयं वैष्णवाः ॥' यथा च—'मा(मी)नध्वत(ज)स्त्वमसि नो(?) नव(?)पुष्पधन्वा केलिप्रकाश तव मन्मथता तथापि । इत्थं त्वया विरहितस्य मयोपलब्धाः कान्ताजनस्य जननाथ चिरं प्रलापाः ॥' यथा च—'आपातमारतविलोडितसिन्धुनाथो ह्याकारभीतपरिवर्तितमत्स्यचिह्नम् । उल्लङ्घ्य यादवमहोदधिमीमवेलं द्रोणाचलं पवनसूनुरिवोद्धरामि ॥' अत्रिनेत्रसमुद्रोत्पन्नयोश्चन्द्रयोरैक्यं यथा—'वन्द्या विश्वसृजो युगादिगुरवः स्वायंभुवाः सप्त ये तत्रात्रिर्दिवि संदधे नयनजं ज्योतिः स चन्द्रोऽभवत् । एका यस्य शिखण्डमण्डनमणिर्देवस्य शंभोः कला शेषाभ्योऽमृतमाप्नुवन्ति च सदा स्वाहास्वधाजीविनः ॥' यथा च—'यदिन्दोरन्वेति व्यसनमुदयं वारिधिरपामुपाधिस्तत्रायं जयति जनिकर्तुः प्रकृतिता । अयं कः संबन्धो यदनुहरते तस्य कुमुदं विशुद्धाः शुद्धानां ध्रुवमनभिसंधिप्रणयिनः ॥' द्वादशानामप्यादित्यानामैक्यं यथा—'यस्याधोऽधस्तथोपर्युपरि निरवधि भ्राम्यते विश्वमश्वैरावृत्तालातलीलां रचयति रयतो मण्डलं चण्डधाम्नः । सोऽव्यादुत्तप्तकार्तस्वरसरलशरस्पर्धिभिर्धामदण्डैरुद्दण्डैः प्रापयन्वः प्रचुरतरतमःस्तोममस्तं समस्तम् ॥' नारायणादेरैक्यं कमलासंपदोश्च यथा—'येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो यो गङ्गां च दधेऽन्धकक्षयकरो यो बर्हिपत्रप्रियः । यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामराः सोऽव्याद्दष्टभुजङ्गहारवलयस्त्वां सर्वदोमाधवः ॥' यथा च—'दोर्मन्दीरितमन्दरेण जलधेरुत्थापिता या स्वयं यां भूत्वा कमठः पुराणककुदन्यस्तामुदस्तम्भयन् । तां लक्ष्मीं पुरुषोत्तमः पुनरसौ लीलाञ्चितभ्रूलतानिर्देशैः समवीविशत्प्रणयिनां गेहेषु दोष्णि क्षितिम् ॥' नागसर्पयोरैक्यं यथा—'हे नागराज बहुमस्य नितम्बभागं भोगेन गाढमभिवेष्टय मन्दराद्रेः । सोढा विषह्य वृषवाहनयोगलीलापर्यङ्कबन्धनविधे-

क्यम्। तथा चक्षुरादेरनेकवर्णोपवर्णनम्, बहुकालजन्मनोऽपि शिवचन्द्रमसो बालत्वम्, कामस्य मूर्तत्वममूर्तत्वं चेत्यादि॥

---

स्तव कोऽतिभारः॥' क्षीरक्षारसमुद्रयोरैक्यं यथा—'शेतां हरिर्भवतु रत्नमनन्तमन्तर्लक्ष्मीप्रसूतिरिति नो विवदामहेऽहो। हादूरदूरसपया(?)स्तृषितस्य जन्तोः किं त्वस्ति रिक्तपयसः स मरोर्जघन्यः॥' सागरमहासमुद्रयोरैक्यं यथा—'रङ्गत्तरङ्गभ्रूभङ्गैस्तर्जयन्तीमिवापगाम्। स ददर्श पुरो गङ्गां सप्तसागरवल्लभाम्॥' **दैत्यदानवासुराणामिति**। हिरण्याक्षहिरण्यकशिपुप्रह्लादविरोचनबलिबाणादयो दैत्याः, विप्रचित्तिशंबरनमुचिपुलोमप्रभृतयो दानवाः, बलवृत्रचिक्षुर(स्त)वृषपर्वादयोऽसुराः, तेषामैक्यं यथा—'जयन्ति बाणासुरमौलिलालिता दशास्यचूडामणिचक्रचुम्बिनः। सुरासुराधीशशिखान्तशायिनो भवच्छिदस्त्र्यम्बकपादपांसवः॥' यथा च—'तं शंभुरासुरसुराशनिशल्यसारकेयूररत्नकिरणारुणबाहुदण्डम्। पीतांसलग्नदयिताकुचपत्रभङ्गं मीनध्वजं जितजगत्त्रितयं जयेत्कः॥' यथा च—'आसीद्दैत्यो हयग्रीवः सुहृद्वेश्मसु यस्य ताः। प्रथयन्ति बलं बाह्वोः सितच्छत्रस्मिताः श्रियः॥' यथा च हयग्रीवं प्रति—'दानवाधिपते भूयो भुजोऽयं किं न नीयते। सहायतां कृतान्तस्य क्षयाभिप्रायसिद्धिषु॥' यथा च—'महासुरसमाजेऽस्मिन्न च कोऽप्यस्ति सोऽसुरः। यस्य नाशनिनिष्पेषनीराजितमुरःस्थलम्॥' एवमन्येऽपि भेदा अभ्यूह्याः॥ **चक्षुरादेरनेकवर्णोपवर्णनमिति**। चक्षुषः शुक्लता यथा—'विष्टन्त्या जनसंकुलेऽपि सुदृशा सायं गृहप्राङ्गणे तद्द्वारं मयि निःसहालसतनौ वीक्षामृदु प्रेङ्खति। हीनम्राननयैव लोलसरलं निःश्वस्य तत्रान्तरे प्रेमार्द्राः शशिखण्डपाण्डिममुखे(खा) मुक्ताः कटाक्षच्छटाः॥' श्यामता यथा—'अथ पथि गमयित्वा रम्यक्लृप्तोपकार्ये कतिचिदवनिपालः शर्वरीः शर्वकल्पः। पुरमविशदयोध्यां मैथिलीदर्शनीनां कुवलयितगवाक्षां लोचनैरुद्गतानाम्॥' कृष्णता यथा—'पादन्यासक्वणितरशनासूतलीलावधूतै रत्नच्छायाखचितवलिभिश्चामरैः क्लान्तहस्ताः। वेश्यास्त्वत्तो नखपदसुखान्प्राप्य वर्षाग्रबिन्दूनामोक्षात्ते त्वय्यैव(?) मधुकरश्रेणिदीर्घान्कटाक्षान्॥' मिश्रवर्णना यथा—'तामुत्तीर्य व्रजपरिचितभ्रूलताविभ्रमाणां पक्ष्मोत्क्षेपादुपरि विलसत्कृष्णसारप्रभाणाम्। कुन्दक्षेपानुगमधुकरश्रीमुखामात्मबिम्बं पात्रीकुर्वन्दशपुरवधूनेत्रकौतूहलानाम्॥' शिवचन्द्रमसो बालत्वं यथा—'मालायमानामरसिन्धुहंसः कोटीरवल्लीकुसुमं

काव्यस्य हेतुमुक्त्वा स्वरूपमाह—

**अदोषौ सगुणौ सालंकारौ च शब्दार्थौ काव्यम् ।**

चकारो निरलंकारयोरपि शब्दार्थयोः क्वचित्काव्यत्वख्यापनार्थः । यथा—

'शून्यं वासगृहं विलोक्य शयनादुत्थाय किंचिनैच्छ-
निंद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।
विश्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥'

गुणदोषयोः सामान्येन लक्षणमाह—

**रसस्योत्कर्षापकर्षहेतू गुणदोषौ भक्त्या शब्दार्थयोः ।**

रसो वक्ष्यमाणस्वरूपस्तस्योत्कर्षहेतवो गुणाः, अपकर्षहेतवस्तु दोषाः । ते च रसस्यैव धर्मा उपचारेण तु तदुपकारिणोः शब्दार्थयोरुच्यन्ते । रसाश्रयत्वं च गुणदोषयोरन्वयव्यतिरेकानुविधानात् । तथा हि यत्रैव दोषास्तत्रैव गुणाः, रसविशेषे च दोषा न तु शब्दार्थयोः । यदि हि

---

भवस्य । दाक्षायणीदर्पणविभ्रमश्रि बालेन्दुखण्डं भवतः पुनातु ॥' कामस्य मूर्तत्वं यथा—'अयं स भुवनत्रयप्रथितसंयमः शंकरो बिभर्ति वपुषाधुना विरहकातरः कामिनीम् । अनेन किल निर्जिता वयमिति प्रियायाः करं करेण परिताडयञ्जयति जातहासः स्मरः ॥' अमूर्तत्वं यथा—'धनुर्मालामौर्वी क्वणदलिकुलं लक्ष्यमबलामनो भेद्यं शब्दप्रभृतय इमे पञ्च विशिखाः । इयज्जेतुं यस्य त्रिभुवनमनङ्गस्य विभवः स वः कामः कामान्दिशतु दयितापाङ्गवसतिः ॥' **निरलंकारयोरपीति** । अनेन काव्ये गुणानामवश्यंभावमाह—तथा हि अनलंकृतमपि गुणबहवः (बहुलं) स्वदते । यथोदाहरिष्यमाणं 'शून्यं वासगृहम्–' इत्यादि । अलंकृतमपि निर्गुणं न स्वदते । यथा—'स्तनकर्परपृष्ठस्था वार्जिनी छदमण्डकाः । वियोगाग्न्यूष्मणा पक्वाः कन्दुकिन्येव ते स्त्रिया ॥' इति । **उपचारेणेति** । यथा 'आकार एवास्य शूरः' इति शौर्यमुपचा[रादाका]राद्यभिव्यञ्जके शरीरे

तयोः स्युस्तर्हि बीभत्सादौ कष्टत्वादयो गुणा न भवेयुर्हास्यादौ चाश्लीलत्वादयः । अनित्याश्चैते दोषाः । यतो यस्याङ्गिनस्ते दोषास्तदभावे न दोषास्तद्भावे तु दोषा इत्यन्वयव्यतिरेकाभ्यां गुणदोषयो रस एवाश्रयः ॥

अलंकाराणां सामान्यलक्षणमाह—

**अङ्गाश्रिता अलंकाराः ।**

रसस्याङ्गिनो यदङ्गं शब्दार्थौ तदाश्रिता अलंकाराः । तेषां च रसस्य सतः क्वचिदुपकारिणः क्वचिदनुपकारिणः । रसाभावे तु वाच्यवाचकवैचित्र्यमात्रपर्यवसिता भवन्ति ॥

तत्र रसोपकारप्रकारानाह—

**तत्परत्वे काले ग्रहत्यागयोर्नातिनिर्वाहे निर्वाहेऽप्यङ्गत्वे रसोपकारिणः ।**

---

व्यवह्रियते । तथा शब्दार्थयोर्माधुर्यादय इत्यर्थः ॥ **अङ्गाश्रिता इति** । ये त्वङ्गिनि रसे भवन्ति ते गुणाः । एष एव गुणालंकारविवेकः ॥ एतावता—'शौर्यादिसदृशा गुणाः, केयूरादितुल्या अलंकाराः' इति विवेकमुक्त्वा 'संयोगसमवायाभ्यां शौर्यादीनामस्ति भेदः । इह तूभयेषां समवायेन स्थितिरित्यभिधाय 'तस्माद्गड्डरिकाप्रवाहेण गुणालंकारभेदः' इति भामहविवरणे यद्भट्टोद्भटोऽभ्यधात्, तन्निरस्तम् । तथा हि । कवितारः संदर्भेष्वलंकारान्व्यस्यन्ति न्यस्यन्ति च न गुणान् । न चालंकृतीनामपोद्धाराहाराभ्यां वाक्यं दुष्यति पुष्यति वा । तत्र शब्दालंकारापोद्धरणं यथा—'अलंकृतजटाचक्रं चारुचन्द्रमरीचिभिः । मृडानीदत्तदेहार्धं नमामः परमेश्वरम् ॥' यथा च—'अलंकृतजटाचक्रं तरुणेन्दुमरीचिभिः' इति । अर्थालंकारापोद्धरणं यथा—'श्यामां सितासितसरोजदृशं कराग्रैरिन्दौ विभूषयति बालमृणालकल्पैः । आरेभिरे रचयितुं प्रतिकर्म नार्यः कार्याणि नायतदृशोऽवसरे त्यजन्ति ॥' यथा च—'श्यामां सितासितसरोजदृशं कराग्रैरिन्दौ विभूषयति केलिचकोरलेह्यैः' इति । अर्थालंकाराहरणं यथा—नीलाश्मरश्मीति । यथा च—'नीलाश्मरश्मिपटलानि महेभमुक्तफूत्कारसीकरविसृज्जि मृगाक्षि सानौ' इति । गुणानामपोद्धाराहारौ तु न संभवत इति । तथा 'काव्यशोभायाः कर्तारो धर्मा गुणास्तदतिशय-

अलंकारा इति वर्तते । तत्परत्वं रसोपकारकत्वेनालंकारस्य प्रवेशः, न बाधकत्वेन, नापि ताटस्थ्येन ॥

यथा—

'चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः ।
करौ व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती ॥'

अत्र भ्रमरस्वभावोक्तिरलंकारो रसपरत्वेनोपनिबद्धो रसोपकारी ॥

बाधकत्वेन यथा—

स्रस्तः स्रग्दामशोभां त्यजति विरचितामाकुलः केशपाशः
क्षीबाया नूपुरौ च द्विगुणतरमिमौ क्रन्दतः पादलग्नौ ।

---

हेतवस्त्वलंकाराः' इति वामनेन यो विवेकः कृतः सोऽपि व्यभिचारी । तथा हि—'गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः' इत्यादौ प्रसादश्लेषसमतामाधुर्यसौकुमार्यार्थव्यक्तीनां गुणानां सद्भावेऽपि काव्यव्यवहाराप्रवृत्तेः । अपि काचिच्छ्रुता वार्ता तस्यौत्सिक्यविधायिनः । इतीव प्रष्टुमायाते तस्याः कर्णान्तमीक्षणे ॥' इत्युत्प्रेक्षालंकारमात्रादविवक्षितत्रिचतुरगुणात्काव्यव्यवहारदर्शनात् । तस्माद्यथोक्त एव गुणालंकारविवेकः श्रेयानिति । गुणाश्च त्रय एवेति गुणवर्णनाध्याये विवेचयिष्यते॥ **चलापाङ्गामिति** । शकुन्तलावलोकने जनिताभिलाषस्य दुष्यन्तस्योक्तिरियम् । किमियमस्मज्जातीया न वा, स्वतन्त्रा परतन्त्रा वा, इति तत्त्वान्वेषणपरवशा वयमसंप्राप्ततत्समागमाः प्रतिहताभिलाषाः । संप्रति मधुकर, त्वमेव पूर्वोपार्जितपुण्यसंभारो यदस्यां वल्लभवृत्तान्तमाचरसि । तथा हि । चलौ विलासवशात्तरलावपाङ्गौ पर्यन्तरूपौ यस्यास्तां दृष्टिं त्वत्स्पर्शनसंत्रासविधुरितनिजस्थितिमनवरतं कम्पवतीं तया मुग्धतया शोभातिशयशालिनीं प्रवातकम्पितनीलोत्पलधिया स्पृशतीत्यस्माकमभिलाषतः परिचुम्बनप्रवृत्तानां तरलनयनप्रान्तपरिचुम्बनसमयनयनस्पर्शविधानमुचितमत्रभवतानुष्ठितमिति । कथमिव न सुकृती भवान् । तथा लोचनकुवलयस्पर्शपराङ्मुखः स्वजातिसमुचितकमलकोशनिलयना-

व्यस्तः कम्पानुबन्धादनवरतमुरो हन्ति हारोऽयमस्याः
क्रीडन्त्याः पीडयेव स्तनभरविनमन्मध्यभङ्गानपेक्षम् ॥'

अत्र पीडयेवेत्युत्प्रेक्षालंकारोऽङ्गी संस्तदनुग्राहकश्चार्थश्लेषः करुणोचितान् विभावानुभावान् संपादयन् बाधकत्वेन भातीति न प्रकृतरसोपकारी ॥

ताटस्थ्येन यथा—

लीलावधूतपद्मा कथयन्ती पक्षपातमधिकं नः ।
मानसमुपैति केयं चित्रगता राजहंसीव ॥'

पुलहकलिखितसागरिकाप्रतिबिम्बदर्शनाभिजाताभिलाषस्य वत्सराजस्येयमुक्तिस्तटस्थस्येव कविनोपरचितेति श्लेषानुगृहीतोपमालंकारप्राधान्येन प्रस्तुतो रसो[1] गुणीकृतोऽपरिजिघटिषया ॥

अङ्गत्वेऽपि कालेऽवसरे ग्रहणं यथा—

'उद्दामोत्कलिकां विपाण्डुररुचं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः ।

---

भ्यासवशवर्णकुहरानुप्रवेशाभिलाषेण तन्निकटवर्ती मृदु प्रियकारि मधुरं स्वनसि शिञ्जितमातनोषि तत्किलास्माकं नयनप्रान्तचुम्बनाभिमुखीकृतकान्ताकर्णोपान्तनिवेशितानननानां तदवसरोचिताभिमताभिप्रायनिवेदनपरतया रहोवृत्तान्ताख्यानमुचितमनुष्ठितं भवतेति भवानेव सुकृती । तथा नयनस्पर्शकर्णोपान्तस्वननव्यापृतोऽशङ्कितोपलब्धसुगन्धिमुखनिःश्वासामोदाकृष्टस्तदधरपल्लवनिवेशासक्तमतिर्दशनभयाद्विधूनितपाणिपल्लवायास्तद्वञ्चनापूर्वकमधरोपविष्टो रतिविषये सुरतोपभोगस्याधररसास्वादसारतया सर्वस्वमधररसपानमनुभवसीत्यस्मत्कृत्यसंपादनात्त्वमेव सुकृती । किल रहोवृत्तान्ताख्यानेनाङ्गीकारितसुरतरसायाः प्रथममधररसामृतपानमस्माभिर्विधेयमिति ॥ **उद्दामोत्कलिकामिति** । वासवदत्तापरिगृहीता नवमालिकालता संप्रति न प्रफुल्ला, माधवी लता तु मत्परिगृहीता प्रफुल्लेति

---

१. 'संभोगश्रृङ्गाररूपः' इत्यर्थः.

अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन्कोऽपि विपाटलद्युति मुखं देव्याः करिष्याम्यहम् ॥'

अत्रोपमा तदनुग्राहकश्च श्लेष ईर्ष्याविप्रलम्भस्य[1] भाविनश्चर्वणाभिमुख्यं कुर्वन्नवसरे रसस्य प्रमुखीभावदशायामुपनिबद्ध[2] उपकारी ॥

न त्वेवम् । यथा—

'वाताहारतया जगद्विषधरैराश्वास्य निःशेषितं
ते ग्रस्ताः पुनरभ्रतोयकणिकातीव्रव्रतैर्बर्हिभिः ।
तेऽपि क्रूरचमूरुचर्मवसनैर्नीताः[3] क्षयं लुब्धकै-
र्दम्भस्य स्फुरितं विदन्नपि जनो जाल्मो गुणानीहते ॥'

अत्र वाताहारत्वं पश्चाद्वाच्यमप्यादावुक्तमित्यतिशयोक्तिरनवसरे गृहीता । तथा हि प्रथमत एव प्रथमपादे हेतूत्प्रेक्षया यदतिशयोक्तेरुपादानं न तत्प्रकृतस्य दम्भप्रकर्षप्रभावतिरस्कृतगुणगणानुशोचनमयस्य निर्वेदस्याङ्गतामेति । न हि वाताहारत्वादधिको दम्भ(?)स्तोयकणव्रतं नापि ततोऽधिकं दम्भनत्वं मृगाजिनवसनमिति ॥

---

तद्दर्शनाद्द्वेषवशेन विपाटलद्युति मुखमहं देव्याः करिष्यामीति वत्सराजोक्तिरियम् । उद्दामा बहुय उद्गताः कलिका यस्याः । उत्कलिकाश्च रुहरुहिकाः । क्षणात्तस्मिन्नेवावसरे प्रारब्धा लैम्भाविकासो[1] यया क्षैमा[2] मन्मथकृतोऽवमर्दः । श्वसनोद्गमैर्वसन्तमारुतोल्लासैरात्मनो......लक्षणस्यायासमायासनमान्दोलना यत्र तमातन्वतीं निःश्वासपरम्पराभिश्चात्मन आयासं हृदयस्थितं संतापमातन्वतीं प्रकटीकुर्वाणाम् । सह मदनाख्येन वृक्षविशेषेण मदनेन कामेन च ।

---

१. 'इर्ष्याविप्रलम्भरूपस्य' इत्यर्थः. २. 'प्रारम्भ' इत्यर्थः. ३. 'नीतं क्षयमिति प्रत्यन्तरे' इत्यर्थः.

---

१.–२. 'जृम्भा' स्यात्.

गृहीतस्याप्यवसरे त्यागो यथा—

'रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणै-
स्त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्ताः सखे मामपि ।
कान्तापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयोः
सर्वं तुल्यमशोक केवलमहं धात्रा सशोकः कृतः ॥'

अत्र प्रबन्धप्रवृत्तोऽपि श्लेषो व्यतिरेकविवक्षया त्यज्यमानोऽपि विप्रलम्भोपकारी ॥

न त्वेवम् । यथा—

'आज्ञा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं
भक्तिर्भूतपतौ पिनाकिनि पदं लङ्केति दिव्या पुरी ।
उत्पत्तिर्द्रुहिणान्वये च तदहो नेदृग्वरो लभ्यते
स्याच्चेदेष न रावणः क्व नु पुनः सर्वत्र सर्वे गुणाः ॥'

अत्र न रावण इत्यस्मादेव त्यागो युक्तः । तथा हि रावण इत्येतज्जगदाक्रन्दकारित्वाद्यर्थान्तरं प्रतिपादयञ्जनकस्य धर्मवीरं प्रत्यनुभावता प्रतिपाद्यते । ऐश्वर्यं पाण्डित्यं परमेशभक्तिर्देशविशेषोऽभिजन इत्येतत्सर्वं लोकमपबाधमानस्याधर्मपरस्य नार्थक्रियाकारकमिति तावतोऽर्थस्य तिरस्कारकत्वेनैव रावणचेष्टितं निर्वाहणीयम् । यत्त्वन्यदुपात्तं क्व नु पुनरिति तद्यदि ससंदेहत्वेन योज्यतेऽथाक्षेपत्वेनाथापि नेदृग्वरो लभ्यते इत्यर्थान्तरन्यासत्वेन तथापि प्रकृतस्य धर्मवीरस्य न कथंचिन्निर्वाहः ।

---

ध्रुवशब्दश्च भावीर्ष्यावकाशदानजीवितमिति ॥ **रक्तस्त्वमिति** । सीतावियोगोपनतविसंस्थुलावस्थस्य दाशरथेरियमुक्तिः । रक्तो लोहितः । अहमपि रक्तः प्रबुद्धानुरागः । तत्र च प्रबोधको विभावः पल्लवराग इति मन्तव्यम् । एवं

नात्यन्तं निर्वाहो यथा—

'कोपात्कोमललोलबाहुलतिकापाशेन बद्ध्वा दृढं
नीत्वा वासनिकेतनं दयितया सायं सखीनां पुरः ।
भूयो नैवमिति स्खलत्कलगिरा संसूच्य दुश्चेष्टितं
धन्यो हन्यत एव निह्नुतिपरः प्रेयान्रुदत्या हसन् ॥'

अत्र रूपकमारब्धमनिर्व्यूढं च रसोपकाराय ।

न त्वेवं यथा—

'खञ्चितपक्ष्मकपाटं नयनद्वारं स्वरूपताडेन ।
उद्घाट्य मे प्रविष्टा देहगृहं सा हृदयचौरी ॥'

अत्र नयनद्वारमित्येतावदेव सुन्दरं शृङ्गारानुगुणं न त्वन्यद्रूपणम् ।

निर्वाहेऽप्यङ्गत्वं यथा—

'श्यामास्वङ्गं चकितहरिणीप्रेक्षिते दृष्टिपाता-
न्गण्डच्छायां शशिनि शिखिनां बर्हभारेषु केशान् ।
उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासा-
न्हन्तैकस्थं क्वचिदपि न ते भीरु सादृश्यमस्ति ॥'

---

प्रतिपादमाद्योऽर्थो विभावत्वेन व्याख्येयः ॥ **सखीनां पुर इति** । भवत्योऽनवरतं ब्रुवते नायमेवं करोति तत्पश्यन्त्विदानीमिति भावः । स्खलन्ती कोपावेशेन कला च मधुरा गीर्यस्याः । कासौ गीरित्याह—भूयो नैवमित्येवंरूपा । एवमिति यदुक्तं तत्किमित्याह—दुश्चेष्टितं नखपदादि । संमु(सू)च्य अङ्गुल्या निर्देशेन । हन्यत एवेति । न तु सख्यादिकृतोऽनुनयोऽनुरुध्यते । यतोऽसौ हननं निमित्तीकृत्य निह्नुतिपरः प्रियतमश्च तदीयं व्यलीकं का सोढुं समर्थेति ॥ **अनिर्व्यूढं चेति** । बाहुलतिकायाः पाशत्वेन यदि रूपणं निर्वाहयेद्दयिता व्याधवधूर्वासगृहं कारागारपञ्जरादीति । तदा रसभङ्गः स्यादिति ॥ **श्यामास्विति** । सुगन्धिप्रियङ्गुलतासु पाणिम्ना(?)तनिम्ना कण्टकितत्वेन च योगात् । **शशिनीति** । पाण्डुरत्वात् । **उत्पश्यामीति** । यत्नेनोत्प्रेक्षे । जीवितसंधारणायेत्यर्थः । **हन्तेति** । कष्टमेकस्थसादृश्याभावे हि दोलायमानोऽहं सर्वत्र स्थितो न कुत्रचिदेकत्र धृतिं लभे इति भावः । **भीर्विति** । यो हि कातर-

अत्र ह्युत्प्रेक्षायास्तद्भावाध्यारोपरूपाया अनुप्राणकं सादृश्यं यथोपक्रान्तं तथा निर्वाहितमपि विप्रलम्भरसोपकाराय ॥

न त्वेवं यथा—

'न्यञ्चत्कुञ्चितमुत्सुकं हसितवत्साकूतमाकेकरं
व्यावृत्तं प्रसरत्प्रसादि मुकुलं सप्रेम कम्प्रं स्थिरम्।
उद्भ्रु भ्रान्तमपाङ्गवृत्ति विकचं मज्जत्तरङ्गोत्तरं
चक्षुः साश्रु च वर्तते रसवशादेकैकमन्यक्रियम् ॥'

अत्र रावणस्य दृग्विंशतौ वैचित्र्येण स्वभावोक्तिर्निर्वाहितापि रसस्याङ्गत्वेन न योजितेति ॥

शब्दार्थयोः स्वरूपमाह—

**मुख्यागौणलक्ष्यव्यङ्ग्यार्थभेदान्मुख्यगौणलक्षकव्यञ्जकाः शब्दाः।**

मुख्यार्थविषयो मुख्यो गौणार्थविषयो गौणो लक्ष्यार्थविषयो लक्षको व्यङ्ग्यार्थविषयो व्यञ्जकः शब्दः, विषयभेदाच्छब्दस्य भेदो न स्वाभाविक इत्यर्थः ॥

---

हृदयो भवति, नासौ सर्वमेकस्थं धारयतीत्यर्थः ॥ न योजितेति। रसवशादेकैकमन्यक्रियमिति ह्येतावन्मात्रेऽप्युक्ते तद्रसगतव्यभिचारिभेदोपनिपाताय यौगपद्याशुभावित्वसंभावनाय च। किंचिद्विभाववैचित्र्यं वक्तव्यं यथा—'सभायां तादृश्यां नरपतिशतैरक्षकितवैः समभ्याकीर्णायामृजतु परितामेकवसना। यदक्राक्षीद्दुःशासननरपशुः केशनिचयान्न कस्यासीत्तेन भ्रुकुटिविषमो बाष्पविसरः ॥' अत्र हि भ्रुकुटिः क्रोधस्यानुभावो बाष्पश्च शोकस्य शोकक्रोधयोश्च यौगपद्यमाशुभावो वा विभावबलाद्दर्शितम्। सा हि तादृशी शोकस्य विभावो दुःखानलश्च तथानुचितकारी क्रोधस्य तच्च विभागद्वयं झटिति पुरः पतितमनुभाववैचित्र्यमाधत्ते इति युक्तं विरुद्धस्तद्दीप्ततममसृणतमचित्तवृत्त्युचितानुभावयोजनम्। 'न्यञ्चत्कुञ्चितम्—'

मुख्यमर्थं लक्षयति—

**साक्षात्संकेतविषयो मुख्यः ।**

अव्यवधानेन यत्र संकेतः क्रियते स मुखमिव हस्ताद्यवयवेभ्योऽर्थान्तरेभ्यः प्रथमं प्रतीयते इति **मुख्यः**, स च जातिगुणक्रियाद्रव्यरूपस्तद्विषयः शब्दो मुख्यो वाचक इति चोच्यते । यथा—गौः, शुक्लः, चलति[1], देवदत्तः, इति । यदाह महाभाष्यकारः—'चतुष्टयी शब्दानां प्रवृत्तिः' इति । जात्यादिस्वरूपं च प्रकृतानुपयोगान्नेह विपञ्च्यते ।

---

इत्यादौ तु तत्प्रकृतानुगुण्यप्रतिजागरणं कविना सावलेपतया न कृतमिति । **चतुष्टयीति** । जातिशब्दा गुणशब्दाः क्रियाशब्दा यदृच्छाशब्दाश्च । तथा हि सर्वेषां शब्दानां स्वार्थाभिधानाय प्रवर्तमानानामुपाध्युपदर्शितविषयविवे[च]कत्वादुपाधिनिबन्धना प्रवृत्तिः । उपाधिश्च द्विविधः । वक्तृकृतसंनिवेशितो वस्तुधर्मश्च । तत्र यो वक्त्रा(क्त्रा) यदृच्छया तत्तत्संज्ञिविषयशक्तिव्यक्तिद्वारेण तस्मिंस्तस्मिन् संज्ञिनि निवेश्यते स वक्तृकृतसंनिवेशितः । यथा डित्थादीनां शब्दानामन्त्यबुद्धिनिर्ग्राह्यं संहृतक्रमं स्वरूपम् । तत्खलु तां तामभिधाशक्तिमभिव्यञ्जयता वक्त्रा यदृच्छया तस्मिंस्तस्मिन् संज्ञिन्युपाधितया संनिवेश्यते अतस्तन्निबन्धनायदृच्छाशब्दा डित्थादयः ॥ येषामपि च [ए]ङ्कारादिवर्णव्यतिरिक्तसंहृतक्रमस्वरूपाभावान्न डित्थादिशब्दस्वरूपं संहृतक्रमसंज्ञिष्वध्यस्यत इति तेषामपि वक्तृयदृच्छाभिव्यज्यमानशक्तिभेदानुसारेण काल्पनिकसमुदायरूपस्य डित्थादेः शब्दस्य तत्संज्ञाभिधानाय प्रवर्तनत्वात् यदृच्छाशब्दत्वं डित्थादीनामुपपद्यत एव ॥ वस्तुधर्मस्य च द्वैविध्यम् । सिद्धसाध्यताभेदात् । तत्र साध्योपाधिनिबन्धनाः क्रियाशब्दाः । यथा—पचतीति । सिद्धस्य तूपाधेर्द्वैविध्यम् । जातिगुणभेदात् । तत्र पदार्थप्राणप्रद उपाधिर्जातिः । न हि कश्चित्पदार्थो जातिसंबन्धमन्तरेण स्वरूपं प्रतिलभते । यदुक्तं वाक्यपदीये—'गौः स्वरूपेण न गौर्नाप्यगौर्गोत्वाभिसंबन्धात्तु गौः' इति ॥ लब्धस्वरूपस्य च वस्तुनो विशेषाधानहेतुर्गुणः । न हि शुक्लादेर्गुणस्य पटादिवस्तुस्वरूपप्रतिलम्भनिबन्धनत्वम् । जातिमहिम्नैव तस्य वस्तुनः

---

१. 'चलः' इति स्यात्.

जातिरेव संकेतविषय इत्येके। तद्वानित्यपरे। अपोह इत्यन्ये॥

गौणं लक्षयति—

**मुख्यार्थबाधे निमित्ते प्रयोजने च भेदाभेदाभ्यामारोपितो गौणः।**

गौर्वाहीको गौरेवायमित्यादौ मुख्यस्यार्थस्य सास्नादिमत्त्वादेः प्रत्यक्षादिना प्रमाणेन बाधे निमित्ते च सादृश्यसंबन्धादौ प्रयोजने ताद्रूप्यप्रतिपत्तिरूपे सत्यारोप्यारोपविषययोर्भेदेनाभेदेन च समारोपितोऽतथाभू-

---

प्रतिलब्धस्वरूपत्वात्॥ **जातिरेवेति**। तथा हि—गुणशब्दानां तावच्छुक्लादीनां पयःशङ्खबलाकाद्याश्रयसमवेता ये शुक्लादिलक्षणा गुणास्तत्समवेतसामान्यवा॑चिनः। एवं क्रियाशब्दानामपि गुडतिलतन्दुलादिद्रव्याश्रिता ये पाकादयोऽन्योन्यमन्यत्वेनावस्थिताः क्रियाविशेषास्तत्समवेतं सामान्यमेव वाच्यम्। यदृच्छाशब्दानां तु डित्थादीनां शुकसारिकामनुष्याद्युदीरितेषु डित्थादिशब्देषु समवेतं डित्थत्वादिकं सामान्यमेव यथायोगं संज्ञिष्वध्यस्तमभिधेयम्। यदि वोपचयापचययोगितया डित्थादौ संज्ञिनि प्रतिकलं भिद्यमानेऽप्यभिद्यमानो यन्महिम्ना डित्थो डित्थ इत्येवमादिरूपत्वेनाभिन्नाकारः प्रत्ययो बाधशून्यः संजायते तत्तथाभूतं डित्थादिशब्दावसेयवस्तुसमवेतमेव डित्थत्वादिसाम्यमत्रेष्टव्यम्। तच्च डित्थादिशब्दैरभिधीयते। इति गुणक्रियायदृच्छाशब्दानामपि जातिशब्दत्वाज्जातिरेवैकः शब्दार्थ इति। **तद्वानिति**। जातेरर्थक्रियायामनुपयोगाद्विफलः संकेतः। यदाह—जातिर्दोहपाकादावुपयुज्यत इति व्यक्तेश्चार्थक्रियाकारित्वेऽप्यानन्त्यव्यभिचाराभ्यां न संकेतः कर्तुं शक्यत इति जात्युपहिता व्यक्तिः शब्दार्थ इति। जातिव्यक्तितद्योगजातिमद्बुद्ध्याकारणाशब्दार्थत्वस्यानुपपद्यमानत्वाद्गवादिशब्दानामगोव्यावृत्त्यादिरूपस्तद्विशिष्टं वा बुद्धिप्रतिबिम्बकं सर्वथा बाह्यार्थस्पर्शशून्यमन्यापोहशब्दवाच्यं शब्दार्थ इति॥ **मुख्या इति**। इदमेव हि शब्दानां मुख्यानां मुख्यत्वं यत्साक्षात्संकेतविषयत्वम्। संकेते च रूढिरेव कारणम्। ततो यदि रूढिमपेक्ष्य लक्षणा प्रवर्तेत तदातिप्रसङ्गः

---

१. 'वाच्चिता' इति भवेत्.

तोऽपि तथात्वेनाध्यवसितो गुणेभ्य आयातत्वाद्गौणः, तद्विषयः शब्दो ऽपि गौणः, उपचरित इति चोच्यते। तत्र सादृश्ये निमित्ते भेदेनारोपितो यथा—'गौर्वाहीकः'। इदं वक्ष्यमाणरूपकालंकारस्य बीजम्। अभेदेन यथा—'गौरेवायम्' इति। इदमतिशयोक्तिप्रथमभेदस्य[1]॥

अत्र स्वार्थसहचारिणो गुणा जाड्यमान्द्यादयो लक्ष्यमाणा अपि गोशब्दस्य परार्थाभिधाने निमित्तत्वमुपयान्तीति केचित्॥

स्वार्थसहचारिगुणाभेदेन परार्थगता गुणा एव लक्ष्यन्ते, न तु परार्थोऽभिधीयत इत्यन्ये॥

साधारणगुणाश्रयेण परार्थ एव लक्ष्यते इत्यपरे॥

संबन्धे कार्यकारणभावे आयुर्घृतम्, आयुरेवेदम्। अत्रान्यवैलक्षण्येनाव्यभिचारेण च कार्यकारित्वादि प्रयोजनम्। तादर्थ्ये—इन्द्रार्था स्थूणा इन्द्रः। स्वस्वामिभावे—राजकीयः पुरुषो राजा। ग्रामस्वामी ग्रामः। अवयवावयविभावे—अग्रहस्त इत्यग्रमात्रेऽवयवे हस्तः। मानमेयभावे—आढको व्रीहिः। संयोगे—रक्तद्रव्यसंयोगाद्रक्तः पटः। तात्कर्म्ये—अतक्षा तक्षा। वैपरीत्ये—अभद्रमुखे भद्रमुखः॥

लक्ष्यमर्थं लक्षयति—

**मुख्यार्थसंबद्धस्तत्त्वेन लक्ष्यमाणो लक्ष्यः।**

मुख्यार्थो गङ्गादिशब्दानां स्रोतःप्रभृतिस्तेन संबद्धस्तटादिरर्थस्तत्त्वेनाभेदेन लक्ष्यमाणो लक्ष्यः। तत्त्वेन लक्ष्यमाण इति वचनाद्भेदाभेदाभ्यामारोपित इति न वर्तते, शेषं तु गौणलक्षणमनुवर्तत एव। तद्विषयः शब्दो लक्षकः। यथा—'गङ्गायां घोषः, कुन्ताः प्रविशन्ति'। अत्र गङ्गाया घोषाधिकरणत्वस्य कुन्तानां प्रवेशस्य वा संभवान्मुख्यार्थ-

---

१. 'बीजम्' इति शेषः.

बाधः, सामीप्यं साहचर्यं च निमित्तम्, गङ्गातट इति कुन्तवन्त इति च प्रयोगाद्येषां न तथा प्रतिपत्तिस्तेषां पावनत्वरौद्रत्वादीनां धर्माणां तथा प्रतिपादनं प्रयोजनम् ।

गौरनुबन्ध्य इति तु नोदाहरणीयम् । अत्र हि श्रुतिनोदितमनुबन्धनं जातौ न संभवतीति जात्यविनाभावाद्व्यक्तिराक्षिप्यते, न तु शब्देनोच्यते ।

'विशेष्यं नाभिधा गच्छेत्क्षीणशक्तिर्विशेषणे ।'

इति न्यायात् । न चात्र प्रयोजनमस्ति । अविनाभावादाक्षेपे च यदि लक्ष्यत्वमिष्यते तदा क्रियतामित्यत्र कर्तुः, कुरु इत्यत्र कर्मणः, प्रविश पिण्डीम् इत्यादौ गृहं, भक्षयेत्यादेश्च लक्ष्यत्वं स्यात् । 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यादौ न पीनत्वेन रात्रिभोजनं लक्ष्यते, अपि तु अर्थापत्त्या आक्षिप्यते इति ॥ इह च यत्र वस्त्वन्तरे वस्त्वन्तरमुपचर्यते स गौणोऽर्थः, यत्र न तथा स लक्ष्य इति विवेकः । कुशलद्विरेफद्विकादयस्तु साक्षात्संकेतविषयत्वान्मुख्या एवेति । न रूढिर्लक्ष्यस्यार्थस्य हेतुत्वेनास्माभिरुक्ता ॥

व्यङ्ग्यं लक्षयति—

**मुख्याद्व्यतिरिक्तः प्रतीयमानो व्यङ्ग्यो ध्वनिः ।**

---

स्यादिति ॥ **अस्माभिरिति** । न तु भट्टमुकुलादिभिः । तैर्हि रूढिमपि प्रयोजनतया उपन्यस्य लक्षणतया प्रवर्तिता । यदाहुः—'रूढेः प्रयोजनाद्वापि

---

१. 'अनुसरणीयो हन्तव्यो वा' टिप्पणी. २. 'अत्र परै रूढिरुक्ता सानेन प्रकारेण सूचिता' टिप्पणी.

मुख्यगौणलक्ष्यार्थव्यतिरिक्तः प्रतीतिविषयो व्यङ्ग्योऽर्थः । स च ध्वन्यते द्योत्यते इति ध्वनिरिति पूर्वाचार्यैः संज्ञितः । अयं च वस्त्वलंकाररसादिभेदात्त्रिधा । तथा ह्याद्यस्तावत्प्रभेदो मुख्यादिभ्योऽत्यन्तं भिन्नः ॥

स हि वाच्ये विधिरूपे प्रतिषेधरूपो यथा—

'भम[२] धम्मिअ वीसत्थो सो सुणओ अज्ज मारिओ तेण ।
गोलाणइकच्छकुडङ्गवासिणा दरिअसीहेण ॥'

अत्र विस्रब्धो भ्रमेति विधिवाक्ये तत्र निकुञ्जे सिंहस्तिष्ठति त्वं च शुनोऽपि बिभेषि तस्मात्त्वयासिन्न गन्तव्यमिति निषेधः प्रतीयते ॥

---

व्यवहारेऽवलोक्यते' इति ॥ **मुख्यगौणलक्ष्यार्थव्यतिरिक्त इति** । अयं भावः—यद्यतो व्यतिरेकेणावभासते तत्ततोऽन्यदिति व्यवहर्तव्यम् । नीलमिव पीताद्वाच्यादिव्यतिरिक्तश्च व्यङ्ग्योऽर्थोऽवभासत इति ॥ **प्रतीतिविषय इति** । अनेन स्वसंवेदनसिद्धतामाह । तथा च श्रीमदानन्दवर्धनः—'प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् । यत्तत्प्रसिद्धावयवातिरिक्तमाभाति लावण्यमिवाङ्गनासु ॥' **वस्त्वलंकारेति** । इह लौकिकालौकिकभेदेनार्थो द्विधा । लौकिकश्च शब्दाभिधाने योग्योऽविचित्रविचित्रात्मतया द्विधा । तत्राविचित्रो वस्तुमात्रम्, विचित्रस्त्वलंकारात्मा । यद्यपि चव्यक्षतायां(?) प्राधान्ये च विचित्रस्यालंकार्यत्वम्, तथापि ब्राह्मणश्रमणन्यायेन तस्यालंकारव्यपदेशः । अनयोश्च वस्त्वलंकारयोर्व्यङ्ग्यतायां यद्यपि न वाच्यत्वम्, तथापि तयोर्विध्यादिरूपत्वात् क्वचन तत्संभवतीति लौकिकत्वम् । अलौकिकस्तु स्वप्नेऽपि वाच्यत्वस्पर्शाक्षमो रसादिरिति ॥ **भम धम्मिएति** । काचिदविनयवधूर्गोदावरीकूललतागहने प्रच्छन्नकामुकेन सह नादेयपानीयानयनादिव्याजेन गृहान्नि-

---

१. 'आदिशब्दाद्भावतदाभासा इत्यादयो गृह्यन्ते' टिप्पणी.

२. 'भ्रम धार्मिक विस्रब्धः स शुनकोऽद्य मारितस्तेन ।
गोदानदीकच्छनिकुञ्जवासिना दृप्तसिंहेन ॥' [गाथा० २।७५]

गेल्य सदा रममाणा धार्मिकं पुष्पोच्चयनलताविलोपनादिना विघ्नभूतं संभावयन्ती विदग्धापि मुग्धेव वक्ति। यस्त्वास्मद्गृहं प्रविशतो भयमकरोच्च श्वा निर्विचारः। अस्मद्भाग्योदयेन तेन लोकप्रसिद्धेन वृत्तेन कृपापात्रमपि श्वानमपश्यता सिंहेनाप्रतिकारयोग्येन मारित उन्मथितः। न तु बुद्धिपूर्वकं हतः। चिन्त्येकवसतेरनौचित्यायोगात्। न चात्र सिंहस्ते भयकारणम्। यतो गोदावर्यां नद्यां न तु सरस्वत्यादिवत्तद्युक्ते देशे यत्कूलं तत्र। न तु ततो दूरे लतागहने दर्शनागोचरे स्थाने वसति सततकृतास्पदस्तेन निर्भयमिदानीं भिक्षाद्यर्थं[स]चरेति। एवमादौ च विषये यद्यपि रसादिरर्थो व्यङ्ग्योऽस्ति तथापि महाराजशब्दव्यपदेश्यविवाहकरणप्रवृत्तसचिवानुयायिराजवदप्रधानमेव गृह्णाति। लतागहनस्थयैवेदमभिधीयते इति व्याख्याने लाक्षणिकोऽयमर्थो भवेत्ततः प्रयोजनांशे व्यङ्ग्ये निषेधो व्यङ्ग्य इति न संबध्यमागच्छते। इह वासिनेति चाभिधेयः स्यात्। न चात्र निषेधस्य वाच्यत्वं वक्तुं शक्यम्। तथाहि। अगृहीतसंकेतस्यार्थप्रतिपत्तेरकरणाद्गृहीतसंकेत एव शब्दोऽर्थप्रतिपादकः। संकेतश्चानन्त्याद्यभिचाराच्च वाक्यार्थ इव वाक्यस्य विशेषरूपे पदार्थे पदस्य कर्तुं न पार्यत इति सामान्य एवासौ आकाङ्क्षायोग्यतासंनिधिवशात्पदार्थानां सामान्यभूतानां समन्वय इति। 'सामान्यान्यन्यथासिद्धेर्विशेषं गमयन्ति हि' इति। विशेषरूपः—'विशेष्यं नाभिधा गच्छेत्क्षीणशक्तिर्विशेषणे' इत्यपदार्थोऽपि वाक्यार्थ उल्लसति। विशेषस्यैव यत्राशब्दार्थत्वं तत्र वस्त्वन्तररूपस्य निषेधस्य वाच्यत्वमिति का कथेत्यभिहितान्वयवादे तावन्निर्विवादैव निषेधस्य व्यङ्ग्यता। येऽप्याहुः—'अनन्वितार्थं पदमप्रयोज्यम्' इति प्रयोगयोग्यं वाक्यमेव, तत्र च संकेतो गृह्यत इत्यपरपदार्थान्वित एव पदार्थः संकेतभूः॥ यद्यपि वाक्यान्तरप्रयुज्यमानान्यपि प्रत्यभिज्ञाप्रत्ययेन तान्येवैतानि पदानि निश्चीयन्ते इति पदार्थान्तरमात्रेणान्वितः पदार्थः संकेतगोचरः, तथापि सामान्यावच्छादितो विशेषरूप एवासौ प्रतिपद्यते। व्यतिषक्तानां पदार्थानां तथाभूतत्वादित्यन्विताभिधाननये 'वाक्यार्थो न पदार्थः' इति तन्मतेऽपि सामान्यविशेषरूपः पदार्थः संकेतविषय इत्यतिविशेषभूतो वाक्यार्थान्तर्गतोऽसंकेतितत्वादवाच्य एव। यत्र पदार्थः प्रतिपद्यते तत्र दूरेऽर्थान्तरभूतनिषेधचर्चा। अनन्वितोऽर्थोऽभिहितान्वये पदार्थान्तरमात्रेणान्वितस्तु अन्विताभिधाने अन्वितविशेषस्त्ववाच्य एवेत्युभयनयेऽप्यपदार्थ एव वाक्यार्थः॥ यदप्युच्यते—

१. 'दृप्तेन' भवेत्.

'नैमित्तिकार्थानुसारेण निमित्तानि कल्प्यन्ते' इति । तत्र निमित्तत्वं कारणत्वं ज्ञापकत्वं वा । शब्दस्य प्रकाशकत्वान्न कारकत्वं, ज्ञापकत्वं त्वज्ञातस्य कथम् । ज्ञानत्वं च संकेतेनैव, स चान्वितमात्रे । एवं च निमित्तस्य नियतनिमित्तत्वं यावन्न निश्चितं तावन्नैमित्तिकस्य प्रतीतिरेव कथमिति नैमित्तिकार्थानुसारेण निमित्तानि कल्प्यन्ते इत्यविचारिताभिधानम् ॥ ये त्वभिदधति—'सोऽयमिषोरिव [1]दीर्घदीर्घो व्यापारः' इति यत्परः शब्दः स शब्दार्थ इति च प्रतिषेधाय वाच्य इति । एतदतात्पर्यज्ञत्वं तात्पर्यवाचोयुक्तेर्देवानांप्रियाणाम् । तथा हि । भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यत इति कारकपदार्थाः क्रियापदार्थेनान्वीयमानाः प्रधानक्रियानिर्वर्तकस्वक्रियाभिसंबन्धात्साध्यायमानतां प्राप्नुवन्ति । ततश्चादग्धदहनन्यायेन यावदप्राप्तं तावद्विधीयते । यथा 'रक्तं पटं वय:' इत्यादावेकविधि[2]र्द्विविधिस्त्रिविधिर्वा । ततश्च यदेव विधेयं तत्रैव तात्पर्यमित्युपात्तस्यैव शब्दस्यार्थे तात्पर्यम् । न तु प्रतीतमात्रे । एवं हि 'पूर्वो धावति' इत्यादावपरार्थेऽपि क्वचित्तात्पर्यं स्यात् ॥ यत्तु—'विषं भुङ्क्ष्व, मा चास्य गृहे भुक्थाः' इत्यत्र एतद्गृहे न भोक्तव्यमित्यत्र तात्पर्यमिति स एव वाक्यार्थ इत्युच्यते । तत्र चकार एकवाक्यतासूचनार्थः । न चाख्यातवाक्ययोर्द्वयोरङ्गाङ्गिभाव इति विषभक्षणवाक्यस्य सुहृद्वाच्यत्वेनाङ्गता कल्पनीयेति विषभक्षणादपि दुष्टमेतद्गृहे भोजनमिति सर्वथा मास्य गृहे भुक्थाः इत्युपात्तशब्दार्थ एव तात्पर्यम् ॥ यदि च शब्दश्रुतेरनन्तरं यावानर्थोऽवगम्यते तावति शब्दस्याभिधैव व्यापारः,तत्कथं 'ब्राह्मण, पुत्रस्ते जातो; ब्राह्मण, कन्या ते गर्भिणी' इत्यादौ हर्षशोकादीनामपि न वाच्यत्वम् । कस्माच्च लक्षणा । किमिति च श्रुतिलिङ्गवाक्यप्रकरणस्थान[स]माख्यानां पूर्वपूर्वबलीयस्त्वमित्यन्विताभिधानवादेऽपि निषेधस्य सिद्धं व्यङ्ग्यत्वम् ॥ किं च कुरुरुचिमिति पदयोर्वैपरीत्येकाव्यान्तर्वर्तिनि कथं दुष्टत्वम् । न ह्यत्रासभ्योऽर्थः पदार्थान्तरैरन्वित इत्यनभिधेय एवेत्येवमादि अपरित्याज्यं स्यात् ॥ यदि च वाच्यवाचकत्वव्यतिरेकेण व्यङ्ग्यव्यञ्जकभावो नाभ्युपेयते तदासाधुत्वादीनां नित्यदोषत्वं [3]साधुत्वादीनामनित्यदोषत्वमिति विभागकरणमनुपपन्नं स्यात् । न चानुपपन्नं सर्वस्यैव विभक्ततया प्रतिभासात् । वाच्यवाचकभावव्यतिरेकेण, व्यङ्ग्यव्यञ्जकताश्रयेण तु व्यङ्ग्यस्य

---

१. 'दीर्घदीर्घतरो' काव्यप्रकाशे. २. 'विधेरपि' काव्यप्रकाशे. ३. 'कष्टत्वादीना' काव्यप्रकाशे.

बहुविधत्वात्क्वचिदेव कस्यचिदेवौचित्येनोपपद्यत एव विभागव्यवस्था । 'द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।' इत्यादौ पिनाक्यादिपदवैलक्षण्येन किमिति कपाल्यादिपदानां काव्यानुगुणत्वम् ॥ अपि च वाच्यार्थः सर्वान् प्रतिपत्तॄन् प्रत्येकरूप एवेति नियतोऽसौ न हि 'गतोऽस्तमर्कः' इत्यादौ वाच्योऽर्थः क्वचिदन्यथा भवति । प्रतीयमानस्तु तत्तत्प्रकरणवक्तृप्रतिपत्त्रादिविशेषसहायतया नानात्वं भजते । तथा च 'गतोऽस्तमर्कः' इत्यतः 'सपत्नं प्रत्यवस्कन्दनावसरः' इति, अभिसरणमुपक्रम्यतामिति, प्राप्तस्ते प्रेयानिति, कर्मकरणान्निवर्तामहे इति, सांध्यो विधिरुपक्रम्यतामिति, दूरं मागा इति, सुरभयो गृहं प्रवेश्यन्ताम् इति, संतापोऽधुना न भवतीति, विक्रेयवस्तूनि संह्रियन्तामिति, नागतोऽद्य प्रेयानित्यादिरनवधिर्व्यङ्ग्योऽर्थस्तत्र तत्र प्रतिभाति । वाच्यव्यङ्ग्ययोः 'निःशेष—' इत्यादौ निषेधविध्यात्मना, 'मात्सर्यमुत्सार्य विचार्य कार्यम्' इत्यादौ संशयेशान्तश्रृङ्गार्यन्यतरगतनिश्चयरूपेण, 'कथमवनिप दर्पो यन्निशातासिधारादलनगलितमूर्ध्नां विद्विषां स्वीकृता श्रीः । ननु तव निहतारेरप्यसौ किं न नीता त्रिदिवमपगताङ्गैर्वल्लभा कीर्तिरेभिः ॥' इत्यादौ निन्दास्तुतिवपुषा, 'हे हेलाजितबोधिसत्त्व वचसां किं विस्तरैस्तोयधे नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः । तृष्यत्पान्थजनोपकारघटनावैमुख्यलब्धायशोभारप्रोद्वहने करोषि कृपया साहायकं यन्मरोः ॥' इत्यादौ स्तुतिनिन्दारूपेण, स्वरूपस्य पूर्वपश्चाद्भावेन प्रतीतेः । कालस्य शब्दाश्रयत्वेन तदर्थकसङ्घटनाश्रयत्वेन चाश्रयस्य शब्दार्थशासनज्ञानेन प्रकरणादिसहायप्रतिभानैर्मल्यसहितेन तेन चावगम इति निमित्तस्य बोद्धृमात्रविदग्धव्यपदेशयोः प्रतीतमात्रचमत्कृत्योश्च करणकार्यस्य 'गतोऽस्तमर्कः' इत्यादौ प्रदर्शितनयेन संख्यायाः 'कस्स व—' इत्यादौ सखीतत्कान्तादिगतत्वेन विषयस्य च भेदेऽपि यद्येकत्वं तत्क्वचिदपि नीलानीलादौ भेदो न स्यात् । उक्तं हि—'अयमेव भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः करणभेदश्चेति वाचकानामर्थापेक्षा, व्यञ्जकानां तु न तदपेक्ष्यत्वमपीति न वाचकत्वमेव व्यञ्जकत्वम् । किं च । 'वाणीरकुडंग—' इत्यदौ प्रतीयमानमर्थमभिव्यज्य वाच्यं स्वरूप एव यत्र विश्राम्यति तत्र मध्यमकाव्यप्रभेदे तात्पर्यभूतोऽप्यर्थः स्वशब्देनाभिधेयः । प्रतीतिपथमवतरन्कस्य व्यापारस्य विषयतामवलम्बताम् ॥ ननु 'रामोऽस्मि सर्वं सहे' इति 'रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये नोचितम्' इति । 'रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं पराम्' इत्यादौ लक्षणीयोऽप्यर्थो नानात्वं भजते

विशेषव्यपदेशहेतुश्च भवति तदवगमश्च शब्दार्थायत्तः प्रकरणादिसव्यपेक्षश्चेति कोऽयं नूतनः प्रतीयमानो नाम । उच्यते—लक्षणीयस्यार्थस्य नानात्वेऽप्यनेकार्थशब्दाभिधेयवन्नियतत्वमेव, न खलु मुख्येनार्थेनानियतसंबन्धो लक्षयितुं शक्यते, व्यङ्ग्यस्तु प्रकरणादिविशेषबलेन नियतसंबन्धोऽनियतसंबन्धः संबन्धसंबन्धश्च द्योत्यते । न च 'भम धम्मिय' इत्यादौ अर्थशक्तिमूले व्यङ्ग्ये मुख्यार्थबाधस्तत्कथमत्र लक्षणायामपि व्यञ्जनमवश्यमाश्रयितव्यम् । यथा च समयसव्यपेक्षाभिधा, तथा मुख्यार्थबाधादित्रयसमयसव्यपेक्षा लक्षणा । अत एव अभिधापुच्छभूता सा इत्याहुः । न च लक्षणात्मकमेव ध्वननं तदनुगमेन तस्य दर्शनात् । न च तदनुगतमेव । अभिधालम्बनेनापि तस्य भावात् । न चोभयानुसार्येव 'अवाचकवर्णानुसारेणापि तस्य दृष्टेः । न च शब्दानुसार्येव अशब्दात्मकनेत्रत्रिभागावलोकनादिगतत्वेनापि तस्य सिद्धेः । इत्यभिधातात्पर्यलक्षणात्मकव्यापारत्रयातिवर्ती अञ्जनव्यापारोऽनपह्नवीय एवेति सिद्धमेव निषेधस्य व्यङ्ग्यत्वम् । तत्र 'अत्ता एत्थ–' इत्यादौ नियतसंबद्धः । 'कस्स व ण होइ रोसो–' इत्यादावनियतसंबद्धः । 'विवरीयरए लच्छी बम्भं दट्ठूण णाहिकमलत्थम् । हरिणो दाहिणणयणं रसाउला झत्ति ढक्केइ ॥' इत्यादौ संबद्धसंबन्धः । अत्र हि हरिपदेन दक्षिणनयनस्य सूर्यात्मता व्यज्यते । तन्निमीलनेन सूर्यस्यास्तमयस्तेन पद्मस्य संकोचः । ततो ब्रह्मणः स्थगनं तत्र सति गोप्याङ्गस्यादर्शनेऽनियन्त्रणं निधुवनविलसितम् । येऽप्याहुः—'अखण्डबुद्धिनिर्ग्राह्यं वाक्यमेव च वाचकम् । वाक्यार्थ एव वार्थः–' इति, तैरप्यविद्यापदपतितैः पदपदार्थकल्पना कर्तव्यैवेति । तत्पक्षेऽप्यवश्यमेव निषेधस्य व्यङ्ग्यत्वम् । अन्ये तु—वाच्यादसंबद्धं तावन्न प्रतीयते । यतः कुतश्चिद्यस्य कस्यचिदर्थस्य प्रतीतेः प्रसङ्गात् । एवं च संबन्धाद्व्यङ्ग्यव्यञ्जकभावोऽवश्यमप्रतिबन्धेन भवतीति त्रिरूपाद्धेतोरेव नियतधर्मिनिष्ठत्वेन प्रतीतिः । तथा च भीरुभ्रम[ण]स्य कारणं भयकारणाभावस्तद्विरुद्धं च भयकारणम् सिंहस्तदुपलब्धेर्लतागहनेऽभ्रमणमनुमीयत इति विध्यादावपि वाच्ये सिंहसद्भावादि निषेधादेरनुमापकम् । न तु व्यञ्जकमपि इति [ये] वदन्ति । तेऽपि न युक्तवादिनः । तथा हि । अप्रमाणभूतवाक्यप्रत्येयः सिंह इति संदिग्धासिद्धो हेतुः । स्वाम्यादेशेनानुरागेण लोभेनान्येन वा केन-

---

१. 'विपरीतरते लक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थम् ।
हरेर्दक्षिणनयनं रसाकुला झटिति स्थगयति ॥' [इति च्छाया]

क्वचिन्निषेधे विधिर्यथा—

'अत्ता इत्थ नु मज्जइ एत्थ अहं दिअसयं पलोएइ।
मा पहिय रत्तिअन्धय सिज्जाए महं नु मज्जिहिसि॥'[1]

अत्रावयोः शय्यायां मा निषत्स्यतीति निषेधवाक्ये—इयं श्वश्रूशय्या इयं मच्छय्येति दिवाप्युपलक्ष्य रात्रौ त्वयेहागन्तव्यमिति विधिः प्रतीयते॥

क्वचिद्विधौ विध्यन्तरं यथा—

'बहलतमा हअराई अज्ज पउत्थो पई घरं सुण्णम्।
तह जग्गिसज्जु[3] सज्जिय न जहा अम्हे मुसिज्जामो॥'[2]

अत्र यथा वयं न मुष्यामहे तथा त्वं जागृहीति विध्यभिधाने रात्रिरत्यन्धकारा, पतिः प्रोषितः, गृहं शून्यम्, अतस्त्वमभयो मत्पार्श्वमागच्छेति विध्यन्तरं प्रतीयते॥

---

चिदेवंविधेन हेतुना भीरोरपि भयकारणसद्भावेऽपि भवति भ्रमणमित्यनैकान्तिकः। शुनः कृपापात्रत्वादप्रतीकार्यत्वेन बिभेति। सिंहे तेजस्विनि तु पराक्रम इति विरुद्धश्च। तत्कथमनुमानम्। एवंविधादर्थादेवंविधोऽर्थ उपपत्त्यनपेक्ष्यत्वेन प्रकाशत इति॥ व्यक्तिवादिनस्तु तददूषणम्॥ **अत्तेति**। श्वश्रूरसहिष्णुर्न तु माता। तेन गुप्तमभिलाषः पोषणीयः। न च सर्वदा भयदेत्याह—अत्रेति। दूरे। सा च शेते, न जागर्ति। अत्र त्वन्मार्गनिकटे अहमुपभोगयोग्या सांप्रतं विघ्नकारीति कुत्सितं दिवसम्, तस्मात्संप्रति विलोकय। एहि परस्पराव-

---

१. 'श्वश्रूरत्र नु मज्जति अत्राहं दिवसकं प्रलोकय।
मा पथिक रात्र्यन्धक शय्यायामावयोर्नु मज्जिष्यसि॥' [गाथा० ७।६७]

२. बहलतमा हतरात्रिरद्य प्रोषितः पतिर्गृहं शून्यम्।
तथा जागृहि प्रतिवेशिन्न यथा वयं मुष्यामहे॥' [गाथा० ४।३५]

३. 'जग्गेज्ञु सअज्जिअण' इति गाथासप्तशत्यां (४।३५) पाठः.

क्वचिन्निषेधे निषेधान्तरं यथा—

'आसाइयं[1] अणाएण जेत्तीयं तत्तिएण बंधदिहिं ।
उरमसुवसहइर्न्हि रक्खिज्जइ गहवइछित्तम् ॥'

अत्र गृहपतिक्षेत्रे दुष्टवृषवारणापरे निषेधवाक्ये उपपतिवारणं निषेधान्तरं प्रतीयते ॥

क्वचिदविधिनिषेधे विधिर्यथा—

'मेहुएहिं[2] किं च पन्थिय जइ हरसि नियंसणं नियम्बाओ ।
साहेमि कस्स रत्ते गामो दूरे अहं एक्का ॥'

इति । अत्र विधिनिषेधयोरनभिधाने अहमेकाकिनी ग्रामो दूरे इति विविक्तोपदेशान्नितम्बवासोऽपि मे हरेति विधिः प्रतीयते ॥

क्वचिदविधिनिषेधे निषेधो यथा—

'जीविताशा बलवती धनाशा दुर्बला मम ।
गच्छ वा तिष्ठ वा पान्थ स्वावस्था तु निवेदिता ॥'

---

लोकनसुखमनुभवावः । पथिकेति । चेतितेऽपि(?) तव न दोषावहमिति न भेतव्यम् । रात्रावधिकमदनोद्रेकादन्ध शय्याविभागानभिज्ञ शय्यायां मा शयिष्ठाः, अपि तु मयि । मा आवयोः, अपि तु [1]मंस्येव । मा शयिष्ठाः, अपि तु प्रहरचतुष्टयमपि निधुवनेन क्रीड । महं इति निपातोऽत्रानेकार्थवृत्तिः । न तु ममेति । एवं हि विशेषवचनमेवाशङ्काकारि भवेदिति प्रच्छन्नाभ्युपगमो न स्यात् । **विधिरिति** । कांचित्प्रोषितपतिकां तरुणीमवलोक्य प्रबुद्धमदनाङ्कुरः संपन्नः पान्थोऽनेन निषेधद्वारेण तयाभ्युपगत इति निषेधाभावो विधिर्न तु निमन्त्रणरूपोऽप्रवृ-

---

१. '... ... ... ... ... ... ... ... ... ... ... ... ... ।
... ... ... ... ... ... ... ... ... गृहपतिक्षेत्रम् ॥' [इति च्छाया]

२. 'मूर्खोऽसि किं च पथिक यदि हरसि नियन्त्रणं नितम्बस्य ।
... ... ... ... ... ग्रामो दूरे अहमेकाकिनी ॥' [इति च्छाया]

---

१. 'मज्जिष्यस्यैव' स्यात्.

अत्र गच्छ वा तिष्ठ वेति अविधिनिषेधे 'जीविताशा बलवती धनाशा दुर्बला मम' इति वचनात् त्वया विनाहं जीवितुं न शक्नोमीत्युपक्षेपेण गमननिषेधः प्रतीयते ॥

क्वचिद्विधिनिषेधयोर्विध्यन्तरं यथा—

'णिअदइअदंसणुक्खित्त पहिय अन्नेण वच्चसु पहेण।[1]
गहवइधूया दुल्लङ्घवाउरा इह हयग्गामे ॥'

अत्रान्येन पथा व्रजेति विधिनिषेधयोरभिधाने हे स्वकान्ताभिरूपताविकत्थनपान्थाभिरूपक इह ग्रामे भवतो गृहपतिसुता द्रष्टव्यरूपेति विध्यन्तरं प्रतीयते ॥

क्वचिद्विधिनिषेधयोर्निषेधान्तरं यथा—

'उच्चिणसु पडियं कुसुमं मा धुण सेहालियं हलियसुन्हे।[2]
एस[3] अवसाणविरसो ससुरेण सुओ वलयसद्दो ॥'

अत्र पतितं कुसुममुच्चिनु मा धुनीहि शेफालिकामिति विधिनिषेधयोरभिधाने सखि, चौर्यरते प्रसक्ते वलयशब्दो न कर्तव्य इति निषेधान्तरं प्रतीयते ॥

क्वचिद्विधावनुभयं यथा—

'सिणियं[4] वच्च किसोयरि पएण यत्तेण ठविसु महिवट्ठे।
भज्जिहि सिविच्छयच्छणि विहिणा दुक्खेण निम्मचिया ॥'

---

१. 'निजदयितादर्शन······पथिकान्येन व्रज पथा।
गृहपतिसुता दुर्लङ्घ्यवागुरेह हतग्रामे ॥' [इति च्छाया]

२. 'उच्चिनु पतितानि कुसुमानि मा धुनीहि शेफालिकां हालिकस्नुषे।
एषोऽवसानविरसः श्वशुरेण श्रुतो वलयशब्दः ॥' [इति च्छाया]

३. अह दे विसमविरावो' इति ध्वन्यालोके.

४. 'शनैर्व्रज कृशोदरि परेण यत्नेन तिष्ठ महीपृष्ठे।
सेवस्व स्वेच्छयेष्टं विधिना दुःखाद्विनिर्मुक्ता ॥ [इति च्छाया]

अत्र शनैर्व्रजेति विध्यभिधाने न विधिर्नापि निषेधः, अपि तु वर्णनामात्रं प्रतीयते ॥

क्वचिन्निषेधेऽनुभयं यथा—

'दे[1] आ पसिय नियत्तसु मुहससिजोण्हाविलुत्ततमनिवहे ।
अहिसारियाणँ विग्घं करेसि अन्नाणँ वि हयासे ॥'

अत्र निवर्तस्वेति निषेधाभिधाने न निषेधो नापि विधिरपि तु मुखेन्दुकान्तिवर्णनमात्रं प्रतीयते ॥

क्वचिद्विधिनिषेधयोरनुभयं यथा—

'वे[2]च्च महं विय एक्काए हुंतु निस्सासरोइयव्वाइं ।
मा तुज्झ वि त्तिइ विणा दक्खिन्नहयस्स जायंतु ॥'

---

त्तप्रवर्तनास्वभावः । सौभाग्याभिमानखण्डनाप्रवेशात् ॥ **दे आ इति ।** काचिदभिसर्तुं प्रसृता गृहागतं प्रियतममवलोक्य स्वयं निवृत्ताप्यनिवृत्तेव तेनैवमुच्यते । दे इति निपातः प्रार्थनायाम् । आ इति तावच्छब्दार्थे । प्रार्थये प्रसीद तावन्निवर्तस्व किमेतत्कदाचिद्भवति यदहं नागच्छामि तस्माद्वृथायमुद्यमः । एतन्न जानासि यत्कृष्णपक्षे तदुचितवेषाप्यहं निजवक्त्रचन्द्रमसा शुक्लपक्षं करोमीति न केवलमात्मे[1]ना विघ्नं करोषि यावदन्यासामपि आस्ताम् । **हंसी[2]ति ।** सकलदिक्प्रकाशस्त्वया क्रियत इति परमभिलाषस्तद्गतो व्यज्यते इति ॥ **वच्चेति ।** कश्चिदनङ्गीकृतप्रार्थनो निःश्वसन् रुदन्निव कयाचिदेवमुच्यते । व्रज इह हि ते कण्टकानामुपरि स्थितिः । ममैव न तु तव तस्या वा एकस्या नान्या हि मत्समा

---

१. 'प्रार्थये तावत्प्रसीद निवर्तस्व मुखशशिज्योत्स्नाविलुप्ततमोनिवहे ।
अभिसारिकाणां विघ्नं करोष्यन्यासामपि हताशे ॥' [इति च्छाया]

२. 'व्रज ममैवैकस्या भवन्तु निःश्वासरोदितव्यानि ।
मा तवापि तया विना दाक्षिण्यहतस्य जनिषत ॥' [इति च्छाया]

---

१. 'त्मनो' स्यात्. २. 'मुहससीति' स्यात्.

अत्र ममैव निःश्वासरोदितव्यानि भवन्तु मा तवापि तां विना तानि जायन्तामिति विधिनिषेधयोरभिधाने न विधिर्नापि निषेधोऽपि तु कृतव्यलीकप्रियतमोपालम्भमात्रं प्रतीयते ॥

क्वचिदविधिनिषेधेऽनुभयं यथा—

'णहमुहपसाहिअंगो णिद्दाघुम्मंतलोयणो न तहा।
जह णिव्वणाहरोसा मलंग दूणेसि मह हिययम् ॥'

विगतमत्सराया मम न तथा नखपदादिचिह्नं भवदङ्गसङ्गिखेदावहं यथार्धनिष्पन्नसंभोगतयाधरदशनासंपत्तिरितीर्ष्याकोपगोपनमुपभोगोद्भेदेन कृतं वाच्योऽर्थः। तद्बलसमुत्थस्तु सहृदयोत्प्रेक्षितोऽत्यन्तवाल्लभ्यान्मुखचुम्बनपर एव तस्यास्त्वं यत्त्वदधरखण्डनावसरोऽस्या वराक्या न जात इति केवलं तस्या भवानतिवल्लभो यावद्भवतोऽपि सा सुतरां रोचते इति वयमिदानीं त्वत्प्रेमनिराशाः संजाता इति नायिकाभिप्रायो व्यङ्ग्यः ॥

क्वचिद्वाच्याद्विभिन्नविषयत्वेन व्यवस्थापितो यथा—

'कस्स व न होइ रोसो दट्ठू(ट्ठू)ण पियाइ सव्वणं अहरम्।
सभमरपउमग्घाइरि वारियवामे सहसु इन्हिम् ॥'

---

भवति। भवन्तु दुःसहान्यपि सन्तु। निःश्वासरोदितव्यानि न तु सुखानि। मा तवापि। दाक्षिण्यमात्रेणेह स्थितोऽसि ततस्त्वयि स्थितेऽपि मम न निवर्तन्ते निःश्वासादीनि तद्द्वयोर्मा भूत् क्लेशः। तया विना न तु मत्कोपात्। दाक्षिण्येन हृदयशून्यरञ्जनामात्रकरणेन हतस्य निर्जीवीकृतस्याजनिषतेति। **कस्स वेति।** कस्य वानीर्ष्यालोरपि। न भवति रोषो दृष्ट्वाकृत्वापि कुतश्चिदेवापूर्वतया प्रियायाः

---

१. 'नखमुखप्रसारिताङ्गो निद्रोन्मीलितलोचनो न तथा।
यथा नि·····················दूनयसि मम हृदयम् ॥' [इति च्छाया]

२. 'कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम्।
सभ्रमरपद्माघ्राणशीले वारितवामे सहस्वेदानीम् ॥' [इति च्छाया]

अत्र वाच्यं सखीविषयम्, व्यङ्ग्यं तु तत्कान्तोपपत्त्यादिविषयम् ॥ एवमलंकारभेदा रसादिभेदाश्च व्यङ्ग्या मुख्यादिभ्योऽतिरिक्ता ज्ञेयाः ।

तद्विषयो व्यञ्जकः शब्दः ॥

**मुख्याद्यास्तच्छक्तयः ।**

मुख्या गौणीलक्षणाव्यञ्जकत्वरूपाः शक्तयो व्यापाराः मुख्यादीनां शब्दानाम् । तत्र समयापेक्षवाच्यावगमनशक्तिर्मुख्याभिधा चोच्यते । मुख्यार्थबाधादिसहकार्यपेक्षार्थप्रतिभासनशक्तिर्गौणी लक्षणा च । तच्छक्त्युपजनितार्थावगमपवित्रितप्रतिपत्तृप्रतिभासहायार्थद्योतनशक्तिर्व्यञ्जकत्वम् ॥

अभिधानन्तरं च यद्यप्यन्वयप्रतिपत्तिनिमित्तं तात्पर्यशक्तिरप्यस्ति तद्विषयस्तात्पर्यलक्षणार्थोऽपि, तथापि तौ वाक्यविषयावेवेति नात्रोक्तौ ॥

**वक्रादिवैशिष्ट्यादर्थस्यापि व्यञ्जकत्वम् ।**

---

सव्रणमधरं विलोक्य । सभ्रमरपद्माघ्राणशीले शीलं हि कथंचिदपि वारयितुं न शक्यम् । वारिते वारणायां हे वामे तदनङ्गीकारिणि, सहस्वेदानीमुपालम्भपरम्परामित्यर्थः । एतत्कांचिदविनयरमणेन खण्डिताधरां विदितमिव प्रकाशयन्तीं तत्प्रत्यायनाय सखी वक्ति । सहस्वेदानीमिति वाच्यमविनयवतीविषयं व्यङ्ग्यम् । भर्तृविषयं तु तस्य मुग्धत्वेऽपराधो नास्तीति । वैदग्ध्ये तु मयेत्थं संवृत्तमतः प्रियेयमिति कृत्वा सहस्वेति व्यङ्ग्यम् । तस्यां प्रियेण गाढमुपालभ्यमानायां तद्व्यलीकशङ्कितप्रातिवेश्मिकलोकविषयं चाविनयप्रच्छादनेन प्रत्यायनं व्यङ्ग्यम् । तत्सपत्न्यां च तदुपालम्भतदविनयप्रहृष्टायां सौभाग्यातिशयख्यापनं प्रियाया इति शब्दबलादिति सपत्नीविषयं व्यङ्ग्यम् । सपत्नीमध्ये इयती खलीकृतास्मीति लाघवमात्मनि ग्रहीतुं न युक्तम् । प्रत्युतायं बहुमानो यतो रोषे कुपिता पादपतनादि लभस्व इति । सहस्व शोभस्वेदानीमिति सखीविषयं सौभाग्यख्यापनं

---

१. 'काचिदविनीता कुतश्चित्खण्डिताधरा तत्सविधसंविधाने भर्तरि तमनवलोकमानयेव कयाचिद्विदग्धासख्या तद्वाच्यतापरिहारायैवमुच्यते' इति ध्वन्यालोकलोचने.

वक्तृप्रतिपाद्यकाकुवाक्यवाच्यान्यासत्तिप्रस्तावदेशकालचेष्टादिविशेषवशादर्थस्यापि मुख्यामुख्यव्यङ्ग्यात्मनो व्यञ्जकत्वम् ॥

वक्तृविशेषाद्यथा—

'दृष्टिं हे प्रतिवेशिनि क्षणमिहाप्यस्मद्गृहे दास्यसि
प्रायो नास्य शिशोः पिताद्य विरसाः कौपीरपः पास्यति ।
एकाकिन्यपि यामि तद्वरमितः स्रोतस्तमालाकुलं
नीरन्ध्राः पुनरालिखन्तु जरठच्छेदा नलग्रन्थयः ॥'

अत्र चौर्यरतगोपनं गम्यते ।

प्रतिपाद्यविशेषाद्यथा—

'निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमा
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥'

---

व्यङ्ग्यम् । अद्येयं तव प्रच्छन्नानुरागिणी हृदयवल्लभा इत्थं रक्षिता । पुनः प्रकटदशनच्छददंशनविधिरत्र न युक्त इति तच्चौर्यकामुकविषयं संबोधनं व्यङ्ग्यम् । इत्थं मयैतदपह्नुतमिति स्ववैदग्ध्याख्यापनं तटस्थविदग्धलोकविषयं व्यङ्ग्यमिति ॥ **ताविति** । सा च स च तौ । **अत्रेति** । शक्तिमध्येऽर्थमध्ये च ॥ **दृष्टिं हे प्रतिवेशिनीति** । काचिद्युवतिः परपुरुषसंभोगानुभवेप्सया संकेतस्थानं व्रजन्ती स्वप्रवृत्तिप्रयोजनं विशिष्टसंकेतस्थानाधारं परपुरुषसंभोगात्मकं तथा संभोगचिह्नानि नखरदनक्षतानि गात्रसंलग्नतया शङ्क्यमानाविर्भावानि यथाक्रमं भर्तृपिपासाक्षमनादेयसरसपानीयानयनेन चिरच्छिन्ननलग्रन्थिपुरुषजर्जरप्रान्तजनिष्यमाणेन च गात्रगतविकारविशेषोद्गमेनापह्नुत्याभिधत्ते । तस्याश्चासाध्वीत्वेऽवगते व्यङ्ग्यप्रतीतिरिति ॥ **निःशेषेति** । च्युतं चन्दनं न तु क्षालितम् । संसृष्टो न तु किंचिन्मृष्टः । दूरमनञ्जने निकटे तु साञ्जने । पुलकिता तन्वीति-

अत्र दूत्यास्तत्कामुकोपभोगो व्यज्यते ॥

काकुर्ध्वनिविकारस्तद्विशेषाद्यथा—

'तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः ।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥'

अत्र मयि न योग्यः खेदः कुरुषु तु योग्य इति काका प्रकाश्यते ॥

वाक्यविशेषाद्यथा—

'प्राप्तश्रीरेष कस्मात्पुनरपि मयि तं मन्थखेदं विदध्या-
न्निद्रामप्यस्य पूर्वामनलसमनसो नैव संभावयामि ।
सेतुं बध्नाति भूयः किमिति च सकलद्वीपनाथानुयात-
स्त्वय्यायाते वितर्कानिति दधत इवाभाति कम्पः पयोधेः ॥'

अत्र नारायणरूपता गम्यते ॥

वाच्यविशेषाद्यथा—

'उद्देशोऽयं सरसकदलीश्रेणिशोभातिशायी
कुञ्जोत्कर्षाङ्कुरितरमणीविभ्रमो नर्मदायाः ।
किं चैतस्मिन्सुरतसुहृदस्तन्वि ते वान्ति वाता
येषामग्रे सरति कलिताकाण्डकोपो मनोभूः ॥'

अत्र रतार्थं प्रविशेति व्यज्यते ॥

---

चोभयं विधेयमिति ॥ **नारायणरूपतेति** । ससंदेहोत्प्रेक्षायाः संकरेणेत्यर्थः । न च संदेहोत्प्रेक्षानुपपत्तिबलाद्रूपकस्याक्षेपो येन वाच्यालंकारोपस्का-

अन्यासत्तेर्यथा—

'[1]णोल्लेइ अणोल्लमणा अत्ता मं घरभरम्मि सयलम्मि ।
खणमित्तं जइ संझाइ होइ न व होइ वीसामो ॥'

अत्र संध्या संकेतकाल इति तटस्थं प्रति कयापि द्योत्यते ॥

प्रस्तावाद्यथा—

'[2]सुब्बइ समागमिस्सइ तुज्झ पिओ अज्ज पहरमित्तेण ।
एमेय किंति चिट्ठसि ता सहि सज्जेसु करणिज्जम् ॥'

अत्रोपपतिं प्रत्यभिसर्तुं न युक्तमिति ध्वन्यते ॥

देशविशेषाद्यथा—

'अन्यत्र यूयं कुसुमावचायं कुरुध्वमत्रास्मि करोमि सख्यः ।
नाहं हि दूरं भ्रमितुं समर्था प्रसीदतायं रचितोऽञ्जलिर्वः ॥'

अत्र 'विविक्तोऽयं देशः, प्रच्छन्नकामुकस्त्वया विसर्ज्यः' इति विश्वस्तां प्रति कयाचिन्निवेद्यते ।

कालविशेषाद्यथा—

'[3]गुरुयणपरवस प्पिय किं भणामि तुह मंदभाइणी अहयम् ।
अज्ज पवासं वच्चसि वच्च सयं जेव्व सुणसि करणिज्जम् ॥'

---

रकत्वं व्यङ्ग्यस्य भवेत् । यो [1]योऽसंप्राप्तलक्ष्मीको निर्व्याजजिगीषाक्रान्तःस स मां

---

१. 'नुदत्यनार्द्रमनाः श्वश्रूर्मां गृहभरे सकले ।
क्षणमात्रं यदि संध्यायां भवति न वा भवति विश्रामः ॥' [इति च्छाया]

२. 'श्रूयते समागमिष्यति तव प्रियोऽद्य प्रहरमात्रेण ।
एवमेव किमिति तिष्ठसि तत्सखि सज्जय करणीयम् ॥' [ इति च्छाया ]

३. 'गुरुजनपरवश प्रिय किं भणामि तव मन्दभागिन्यहम् ।
अद्य प्रवासं व्रजसि व्रज स्वयमेव श्रोष्यसि करणीयम् ॥ [इति च्छाया]

---

१. 'यो यः संप्राप्त' ध्वन्यालोकलोचने.

अद्य मधुसमये यदि व्रजसि तदहं तावन्न भवामि, तव तु न जानामि गतिमिति व्यज्यते ॥

चेष्टाया यथा—

'द्वारोपान्तनिरन्तरे मयि तया सौन्दर्यसारश्रिया
प्रोल्लास्योरुयुगं परस्परसमासक्तं समापादितम् ।
आनीतं पुरतः शिरोंशुकमधः क्षिप्ते चले लोचने
वाचस्तच्च निवारितं प्रसरणं संकोचिते दोर्लते ॥'

अत्र चेष्टायाः प्रच्छन्नकान्तविषय आकूतविशेषो ध्वन्यते ॥

एवं वक्रादीनां द्विकादियोगेऽपि व्यञ्जकत्वमवसेयम् । तत्र—वक्तृबोध्ययोगे यथा—'अत्ताइत्थ' इत्यादि । अत्र वक्तृबोध्यपर्यालोचनयाशेषेति विधिरूपव्यङ्ग्यार्थप्रतीतिः ॥

एवं द्विकयोगान्तरे त्रिकादियोगान्तरे च स्वयमप्यूह्यम् । एषु मुख्यार्थस्य व्यञ्जकत्वमुदाहृतम् ॥

अमुख्यस्य यथा—

'साहेंती सहि सुहयं खणे खणे दूमियासि मज्झ कए ।
सब्भावनेहकरणिज्जसरिसियं दाव विरइयं तुमए ॥'[1]

अत्र मत्प्रियं रमयन्त्या त्वया शत्रुत्वमाचरितमिति लक्ष्यम् । तेन च कामुकविषयं सापराधत्वप्रकाशनं व्यङ्ग्यम् ॥

---

मश्नीयादित्याद्यर्थसंभावनात् । न च पुनरपीति पूर्वामिति भूय इति च शब्दैरयमाकृष्टोऽर्थः । पुनरर्थस्य भूयोऽर्थस्य च कर्तृभेदेऽपि समुद्रैक्यमात्रेणाप्युपपत्तेः । यथा पृथ्वी पूर्वं कार्तवीर्येण जिता पुनर्जामदग्न्येनेति । पूर्वा च निद्रा राजपुत्राद्यवस्था-

---

१. 'साधयन्ति सखि सुभगं क्षणे क्षणे दूनासि मत्कृते ।
सद्भावस्नेहकरणीयसदृशं तावद्विरचितं त्वया ॥' [इति च्छाया]

व्यङ्ग्यस्य यथा—

'[२]वाणियय हत्थिदंता कुत्तो अम्हाण वग्घकित्तीओ ।
जावि लुलियालयमुही घरम्मि परिसुक्कए सुण्हा ॥'

अत्र विलुलितालकमुखीत्वेनानवरतक्रीडासक्तिस्तथा च सततसंभोगक्षामता ध्वन्यते ॥

व्यङ्ग्यस्य भेदानाह—

**व्यङ्ग्यः शब्दार्थशक्तिमूलः ।**

शब्दशक्तिमूलोऽर्थशक्तिमूलश्चेति व्यङ्ग्यो द्विधा । उभयशक्तिमूलस्तु शब्दशक्तिमूलान्नातिरिच्यते, शब्दस्यैव प्राधान्येन व्यञ्जकत्वात् ॥

तत्र शब्दशक्तिमूलमाह—

**नानार्थस्य मुख्यस्य शब्दस्य संसर्गादिभिरमुख्यस्य च मुख्यार्थबाधादिभिर्नियमिते व्यापारे वस्त्वलंकारयोर्वस्तुनश्च व्यञ्जकत्वे शब्दशक्तिमूलः पदवाक्ययोः ।**

अनेकार्थस्य मुख्यस्य शब्दस्याभिधालक्षणे व्यापारे संसर्गादिभिर्नियन्त्रितेऽमुख्यस्य च गौणलाक्षणिकरूपस्य शब्दस्य मुख्यार्थबाधनिमित्तप्रयोजनैर्गौणीलक्षणारूपे व्यापारे नियन्त्रिते मुख्यस्य शब्दस्य वस्त्वलंकारव्यञ्जकत्वेऽमुख्यस्य च वस्तुव्यञ्जकत्वे सति शब्दशक्तिमूलो व्यङ्ग्यः ॥

स च प्रत्येकं द्विधा । पदे वाक्ये च ॥

संसर्गादयश्चेमे भर्तृहरिणा प्रोक्ताः—

'संसर्गो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः ॥

---

२. वाणिजक हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तयश्च ।
यावल्लुलितालकमुखी गृहे परिसर्पते स्नुषा ॥' [इति च्छाया]

सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥'

यथा—

'वनमिदमभयमिदानीं यत्रास्ते लक्ष्मणान्वितो रामः' इति । 'विना सीतां रामः प्रविशति महामोहसरणिम्' इति । संसर्गाद्विप्रयोगाच्च दाशरथौ ।

'बुधो भौमश्च तस्योच्चैरनुकूलत्वमागतौ' इति साहचर्याद्ग्रहविशेषे ।

'रामार्जुनव्यतिकरः सांप्रतं वर्तते तयोः' इति विरोधाद्भार्गवकार्तवीर्ययोः ।

'सैन्धवमानय, मृगयां चरिष्यामि' इत्यर्थात्प्रयोजनादश्वे ।

'अस्मद्भाग्यविपर्ययाद्यदि परं देवो न जानाति तम्' इति प्रकरणाद्युष्मदर्थे । प्रकरणमशब्दमर्थस्तु शब्दवानित्यनयोर्भेदः ।

'कोदण्डं यस्य गाण्डीवं स्पर्धते कस्तमर्जुनम्' इति लिङ्गाच्चिह्नात्पार्थे ।

'किं साक्षादुपदेशयष्टिरथ वा देवस्य शृङ्गारिणः' इति शब्दान्तरसंनिधानात्कामे ।

'क्वणति मधुना मत्तश्चेतोहरं प्रियकोकिलः' इति सामर्थ्याद्वसन्ते ।

'तन्व्या यत्सुरतान्ततान्तनयनं वक्त्रं रतव्यत्यये तत्त्वां पातु चिराय' इत्यौचित्यात्प्रसादसांमुख्यपालने ।

'अहो महेश्वरस्यास्य कापि कान्तिः' इति राजधानीरूपाद्देशाद्राजनि ।

'चित्रभानुर्विभात्यह्नि' इति कालविशेषाद्रवौ ।

'मित्रं हन्तितरां तमःपरिकरं धन्ये दृशौ मादृशाम्' इति व्यक्तिविशेषात्सुहृदि च प्रतीतिः ।

स्वरात्त्वर्थविशेषप्रतिपत्तिः काव्यमार्गेऽनुपयोगिनीति नोदाह्रियते । 'मथ्नामि कौरवशतं समरे न कोपात्' इति काकुरूपात्स्वराद्भवत्यर्थविशेषप्रतिपत्तिः ।

आदिग्रहणादभिनयोपदेशनिर्देशसंज्ञेङ्गिताकारा गृह्यन्ते ।

अभिनयो यथा—

'एद्दहमित्तत्थणिया[1] एद्दहमित्तेहिँ अत्थिवत्तेहिँ ।
एयावत्थं पत्ता एत्तियमित्तेहिँ दिअहेहिँ ॥'

अपदेशो यथा—

'इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम् ।
विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम् ॥'

निर्देशो यथा—'भर्तृदारिके, दिष्ट्या वर्धामहे यदत्रैव कोऽपि कस्यापि तिष्ठतीति मामङ्गुलीविलासेनाख्यातवत्यः ।'

संज्ञा यथा—

'अप्यवस्तुनि कथाप्रवृत्तये प्रश्नतत्परमनङ्गशासनम् ।
वीक्षितेन परिगृह्य पार्वती मूर्धकम्पभयमुत्तरं ददौ ॥'

इङ्गितं यथा—

'कदा नौ संगमो भावीत्याकीर्णे वक्तुमक्षमम् ।
अवेत्य कान्तमबला लीलापद्मं न्यमीलयत् ॥'

आकारो यथा—

'निवेदितं निःश्वसितेन सोष्मणा मनस्तु मे संशयमेव गाहते ।
न विद्यते प्रार्थयितव्य एव ते भविष्यति प्रार्थितदुर्लभः कथम् ॥'

---

१. 'एद्दहमेत्तावत्था' इति काव्यप्रकाशे.
'एतावन्मात्रस्तनिका एतावन्मात्राभ्यामक्षिपत्राभ्याम् ।
एतावदवस्थां प्राप्ता एतावन्मात्रैर्दिवसैः ॥'

तदेवं संसर्गादिभिर्नियमितायामभिधायां यार्थान्तरप्रतीतिः सा व्यञ्जनव्यापारादेव । अमुख्येऽपि शब्दे मुख्यार्थबाधादिनियमिते प्रयोजनप्रतिपत्तिर्व्यञ्जनव्यापारादेव । तथा हि तत्र संकेताभावान्नाभिधा नापि गौणी लक्षणा वा मुख्यार्थबाधादिलक्षणाभावात् । न हि लक्ष्यं मुख्यम्, नापि तस्य बाधः, न च किंचिन्निमित्तमस्ति, नापि तत्र शब्दः स्खलद्गतिः । न च किंचित्प्रयोजनमस्ति । अथ प्रयोजनेऽपि लक्ष्ये प्रयोजनान्तरमाकाङ्क्ष्यते तर्हि तत्रापि प्रयोजनान्तराकाङ्क्षायामनवस्था स्यात् । तथा च लाभमिच्छतो मूलक्षतिः । न च प्रयोजनसहितमेव लक्ष्यं लक्षणाया विषय इति वक्तुं शक्यम् । विषयप्रयोजनयोरत्यन्तभेदात् । प्रत्यक्षादेरपि प्रमाणस्य विषयो घटादिः प्रयोजनं त्वर्थाधिगतिः प्राकट्यं संवित्तिर्वा । तदेवं प्रयोजनविशिष्टस्य लक्ष्यस्य गौणीलक्षणयोरविषयत्वात्प्रयोजने व्यञ्जनमेव व्यापारः ॥

तत्र मुख्यशब्दशक्तिव्यङ्ग्यं वस्तु पदे यथा—

'मुक्तिभुक्तिकृदेकान्तसमादेशनतत्परः ।
कस्य नानन्दनिस्यन्दं विदधाति सदागमः ॥'

काचित्संकेतदायिनमेवं मुख्यया वृत्त्या शंसतीति सदागमपदेन प्रकाश्यते । अत्रार्थयोर्वैसदृश्यान्नोपमा ॥

---

यामपीति सिद्धं रूपकध्वनिरेवायम्[1] । स च वाक्यपर्यालोचनयावसीयत इति ॥
**अर्थाधिगतिरिति** । नैयायिकादीनां प्राकट्यं भट्टमते, संवित्तिः प्राभाकरे ॥

---

१. 'मिति' लोचने.

वाक्ये यथा—

'¹पन्थिय न एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे ।
उन्नयपओहरं पिक्खिऊण जइ वससि ता वससु ॥'

अत्र प्रहरचतुष्टयमप्युपभोगेन नेह निद्रां कर्तुं लभ्यते । सर्वे ह्यत्राविदग्धाः । तदुन्नतपयोधरां मामुपभोक्तुं यदि वससि तदास्स्वेति व्यज्यते । वाच्यबाधेन व्यङ्ग्यस्य स्थितत्वात् । तयोर्नोपमानोपमेयभाव इति नालंकारो व्यङ्ग्यः ॥

यथा च—

'शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वम् ।
यत्र प्रसीदसि पुनः स भात्युदारोऽनुदारश्च ॥'

अत्र विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुतः इति व्यत्ययेन ध्वन्यते ॥ मुख्यशब्दशक्तिव्यङ्ग्योऽलंकारः पदे यथा—

'रुधिरविसरप्रसाधितकरवालकरालरुचिरभुजपरिघः ।
झटिति भ्रुकुटिविटङ्कितललाटपट्टो विभाति नृप भीमः ॥'

अत्र भीषणीयस्य भीमसेन उपमानम् ।

वाक्ये यथा—

'उन्नतः प्रोल्लसद्धारः कालागुरुमलीमसः ।
पयोधरभरस्तस्याः कं न चक्रेऽभिलाषिणम् ॥'

---

**मुक्तीति** । मुक्तिरभेदव्यापारादपि । भुक्तिः कान्तोपभोगोऽपि । एकान्तः संकेतस्थानमपीति । सतः सुन्दरस्यागमनम्, शोभन आगमश्च ॥ **उन्नतपयोधरमिति** । उन्नतं मेघं प्रेक्ष्येत्यर्थः ॥ अशनिर्वज्रमपि । अनुदारोऽनुगतदारोऽपि ॥

---

१. 'पथिक नात्र स्रस्तरमस्ति मनाक्प्रस्तरस्थले ग्रामे ।
उन्नतपयोधरं प्रेक्ष्य यदि वससि तद्वस ॥' [इति च्छाया ।]

अत्र वाक्यस्यासंबद्धार्थत्वं मा प्रसाङ्क्षीदित्यप्राकरणिकप्राकरणिकयोरुपमानोपमेयभावः कल्पनीय इत्यत्रोपमालंकारो व्यङ्ग्यः ॥

यथा वा—

'अतन्द्र[1]चन्द्राभरणा समुद्दीपितमन्मथा ।
तारकातरला श्यामा सानन्दं न करोति कम् ॥'

अत्र शब्दशक्त्या रात्रियोषितोरुपमा व्यङ्ग्या । यद्यपि समुद्दीपितेति सानन्दमिति चार्थो व्यञ्जकस्तथापि न शब्दशक्तिं विनार्थशक्तिरुन्मीलति इति शब्दशक्तिरेव व्यञ्जिका ॥

यथा वा—'मातङ्गगामिन्यः शीलवत्यश्च, गौर्यो विभवरताश्च, श्यामाः पद्मरागिण्यश्च, धवलद्विजशुचिवदना मदिरामोदश्वसनाश्च प्रमदाः ।' अत्र विरोधालंकारो व्यङ्ग्यः ॥

यथा वा—

'खं येऽभ्युज्ज्वलयन्ति लूनतमसो ये वा नखोद्भासिनो
ये पुष्णन्ति सरोरुहश्रियमधिक्षिप्ताब्जभासश्च ये ।
ये मूर्धस्ववभासिनः क्षितिभृतां ये चामराणां शिरां-
स्याक्रामन्त्युभयेऽपि ते दिनपतेः पादाः श्रिये सन्तु वः ॥'

अत्र व्यतिरेकः ॥ एवमलंकारान्तरेऽप्युदाहार्यम् ॥

---

प्रोल्लसन् हारो यस्य, प्रोल्लसन्त्यश्च धारा यस्य । तस्याः कामिन्याः, प्रावृषश्च ॥ **अ[1]चन्द्रेति** । चन्द्रः कर्पूरमपि । समुत्सहर्षा । तारकाभ्यां कनीनिकाभ्यामपि । श्यामा रात्रिः, कान्ता च ॥ मातङ्गो हस्ती चण्डालश्च । गौर्यो गौराङ्ग्योऽपि । विभवेरता विगतं भवे रतं यासां ताश्च । पद्मरागा मणिविशेषाः, पद्मवच्च रागो विद्यते यासाम् । द्विजा दन्ताः, विप्राश्च ॥ नखैः करजैः, न गगने च । क्षितिभृतो राजानोऽपि । उभये रश्मिचरणरूपाः ॥ **एवमिति** । यथा—'[2]सरसं मउअसहावं

---

१. 'अतन्द्रेति' स्यात्. २. अस्य संस्कृतच्छाया न बुद्धा.

गौणशब्दशक्तिव्यङ्ग्यं वस्तु पदे यथा—

'रविसंक्रान्तसौभाग्यस्तुषाराविलमण्डलः ।
निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥'

अत्रोपसंहृतदृष्टिवृत्तिरन्धशब्दो बाधितमुख्यार्थः पदार्थप्रकाशनाशक्तत्वं नष्टदृष्टिगतं निमित्तीकृत्यादर्शे वर्तमानोऽसाधारणविच्छायित्वानुपयोगित्वादिधर्मजातमसंख्यं प्रयोजनं व्यनक्ति ॥

वाक्ये यथा—

'या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥'

अत्र निशायां जागरितव्यमन्यत्र रात्रिवदासितव्यमिति न कश्चिदुपदेश्यं प्रत्युपदेशः सिध्यतीति बाधितस्वार्थमेतद्वाक्यं संयमिनो लोकोत्तरतालक्षणेन निमित्तेन तत्त्वदृष्टाववधानं मिथ्यादृष्टौ तु पराङ्मुखत्वं ध्वनतीति ॥

---

विमलगुणाणं मित्तसंगमोल्लसिअम् । कमलं तद्वच्छायं कुणंतदोसायरनमोदे ॥' एतत्केनचिच्चन्द्रमेवोद्दिश्योच्यते । कमलप्रख्यस्य महापुरुषस्य श्रियं नाशितवन्तं कंचन श्रीजुषं प्रति चाप्रस्तुतप्रशंसा व्यङ्ग्येति । **निःश्वासान्ध इति** । हेमन्तवर्णने पञ्चवट्यां रामस्योक्तिरियम् ॥ **या निशेति** । सर्वेषां ब्रह्मादिस्थावरान्तानां चतुर्दशानामपि भूतानां या निशाख्या मोहजननी तत्त्वदृष्टिः तस्यां संयमी जागर्ति कथं प्राप्येति । न तु विषयवर्जनमात्रादेव संयमीति यावत् । यदि वा सर्वभूतनिशायां मोहन्यां मिथ्यादृष्टौ जागर्ति कथमियं हेयेति । यस्यां तु मिथ्यादृष्टौ सर्वभूतानि जाग्रति अतिशयेन सुप्रबुद्धरूपाणि सा तस्य रात्रिरप्रबोधविषयः । तस्यां हि चेष्टायां नासौ प्रबुद्धः । एवमेव च लोकोत्तराचारव्यवस्थितः पश्यति च मन्यते च तस्यैवान्तर्बहिष्करणवृत्तिश्चरितार्था । अन्यस्तु न पश्यति न मन्यते इति तत्त्वदृष्टि-

लक्षकशब्दशक्तिव्यङ्ग्यं वस्तु पदे यथा—

'स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः ।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव ॥'

अत्र प्रकरणात्तृतीयत्रिकनिर्देशाच्च रामे प्रतिपन्ने रामपदमनुपयुज्य-

---

परेण भाव्यमिति तात्पर्यम् ॥ **स्निग्धेति** । स्निग्धया जलसंबन्धसरसया श्यामलया द्रविडवनितोचितासितवर्णया कान्त्या चाकचिक्येन लिप्तमाच्छुरितं वियन्नभो यैः । वेल्लन्त्यो जृम्भमाणास्तथा चलन्त्यः परभागवशात् प्रहर्षवशाच्च बलाकाः सितपक्षिविशेषा येषु सत्सु ते एवंविधा मेघाः । एवं नभस्तावद्दुरालोकं वर्तते । दिशोऽपि दुःसहाः । यतः सूक्ष्मजलोद्गारिणो वाता इति मन्दमन्दत्वमेषामनियतदिगागमनं च बहुवचनेन सूचितम् । तर्हि गुहासु क्वचित्प्रविश्यास्यताम्, अत आह—पयोदानां ये सुहृदस्तेषु च सत्सु शोभनहृदया मयूरास्तेषामानन्देन हर्षेण कलाः षड्जसंवादिन्यो मधुराः केकाः शब्दविशेषाः । ताश्च सर्वं पयोदवृत्तान्तं स्मारयन्ति स्वयं च दुःसहा इति भावः । एवमुद्दीपनविभावोद्बोधितविप्रलम्भः । परस्पराधिष्ठानत्वाद्रतेः । विभावानां च साधारण्यमभिमन्यमान इत एव प्रभृति प्रियतमां हृदये निधायैव स्वात्मवृत्तान्तं तावदाह—**कामं सन्त्विति** । दृढमिति सातिशयम् । **कठोरहृदय इति** । रामशब्दार्थव्यङ्ग्यविशेषावकाशदानाय कठोरहृदयपदम् । यथा—तद्गेहमित्युक्तेऽपि नतभित्तीति । अन्यथा रामपदं दशरथकुलोद्भवकौशल्यास्नेहपात्रत्वबाल्यचरितजानकीलाभादिधर्मान्तरपरिणतमर्थं कथं नाम ध्वनेत् । **अस्मीति** । स एवाहं भवामीत्यर्थः । भविष्यतीति क्रियासामान्यम् । तेन किं करिष्यतीत्यर्थः । अथ च भवनमेवास्या असंभाव्यमिति । उक्तप्रकारेण हृदयनिहितां प्रियां सजलजलधरादीनामुद्दीपनविभावानां साधारणत्वावधारणादिना स्मरणेन वैदेहीति शब्देन कथं भविष्यतीति विकल्पपरम्परया च प्रत्यक्षीभावितां हृदयस्य स्फुटनोन्मुखीं ससंभ्रममाह—**हहा हेति** । देवीति

मानं कठोरहृदय इत्यनेन दर्शितावकाशं पितृमरणसीतावियोगाद्यनेकदुःखभाजनत्वं लक्षयदसाधारणानि निर्वेदग्लानिमोहादीनि व्यनक्ति ॥

वाक्ये यथा—

'सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः ।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥'

इदं हि वाक्यमसंभवत्स्वार्थं सत्साद्दश्यात्सुलभसमृद्धिसंभारभाजनतां लक्षयञ्छूरकृतविद्यसेवकानां प्राशस्त्यं ध्वनति ॥

अर्थशक्तिमूलं व्यङ्ग्यमाह—

**वस्त्वलंकारयोस्तद्व्यञ्जकत्वेऽर्थशक्तिमूलः प्रबन्धेऽपि ।**

वस्तुनोऽलंकारस्य च प्रत्येकं वस्त्वलंकारव्यञ्जकत्वेऽर्थशक्तिमूलः स

---

युक्तं तव धैर्यमित्यर्थः ॥ **सुवर्णपुष्पामिति** । सुवर्णं न तु ताम्रादि । पुष्पाणि प्रतिदिनं ग्राह्याणि न तु दीनारादिवत् सकृद्ग्राह्याणि । पृथिवीं न तु नगरादिमात्रं चिन्वन्ति प्रत्यहं गृहीतसारां कुर्वते । **पुरुषा इति** । अन्ये त्वकार्यकराः । त्रय इति न तु चत्वारः । एवं शूरः पराक्रमेण दुर्घटकार्यकारी । कृता परं धाराधिरोहं नीता विद्या तत्त्वावबोधहेतुर्येन । सेवक इति सेवाज्ञ इति वा वक्तव्ये ज्ञानस्यालौकिकत्वमनौचित्याद्यगणनादि च ध्वनितुं यस्ये(श्चे)त्यादि कृतम् । शूरकृतविद्यवत्सेवाज्ञस्य निर्गुणस्यापि लाभप्राप्तिरिति त्रयश्चकाराः स्वतः संभवन्तीति न केवलं भणितिवशेनैवाभिनिष्पन्नशरीरो यावद्बहिरप्यौचित्येन संभाव्यमानसद्भाव इत्यर्थः । यथा—'सिहिपिञ्छकण्णऊरा[1] जाया वाहस्स गव्विरी भमइ । मुत्ताहलरइअपसाहणाणँ मज्झे सवत्तीणम् ॥' शिखिमात्रमारणमेव तदासक्तस्य कृत्यम् । अन्यासु त्वासक्तो हस्तिनोऽप्यमारयत् इति बहुवचनेनोक्तमुत्तमं सौभाग्यम् । रचितानि विविधभङ्गीभिः प्रसाधनानि इति तासां संभोगव्यग्रिमाभावात् तद्विरचनशिल्पकौशलमेव परमिति दौर्भाग्यातिशय इति दर्शितम् । गर्वश्च बाल्यावि-

---

१. 'शिखिपिच्छकर्णपूरा जाया व्याधस्य गर्विणी भ्रमति ।
मुक्ताफलरचितप्रसाधनानां मध्ये सपत्नीनाम् ॥' [इति च्छाया]

च पदवाक्ययोः प्रबन्धे च । इह चार्थः स्वतःसंभवी कविप्रौढोक्तिमात्रनिष्पन्नशरीरः, कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरो वेति भेदकथनं न न्याय्यम् । प्रौढोक्तिनिर्मितत्वमात्रेणैव साध्यसिद्धेः । प्रौढो-

---

वेकादिनापि भवतीति नात्र स्वोक्तिसद्भावः शङ्क्यः । एष चार्थो यथा यथा वर्ण्यते तथा तथा सौभाग्यातिशयं व्याधवध्वा द्योतयति ॥ **कविप्रौढोक्तिमात्रेति** । कवेरेव या प्रौढा उक्तिस्तन्मात्रनिष्पन्नशरीर इत्यर्थः । यथा—'स[1]ज्जेइ सुरहिमासो ण[2] या पणामेइ जुअइजणलक्खमुहे । अहिणवसहआरमुहे णवपल्लवपत्तलेअणङ्गस्स सरे ॥' अत्र वसन्तश्चे[3]तनोऽनङ्गस्य सखा स जयति केवलं न तावदर्पयति इत्येवंविधया समर्पयितव्यवस्त्वर्पणकुशलयोक्त्या सहकारोद्भेदिनी वसन्तदशा यत उक्ता अतोऽनर्पितेष्वपि शरेषु यद्येवं मन्मथः प्रतपति तदर्पितेषु कियद्विक्त(क्र)मिष्यते इति मन्मथोन्माथकस्यारम्भं क्रमेण गाढगाढीभविष्यन्तं व्यनक्ति ॥ कविनिबद्धवक्तृप्रौढोक्तिमात्रशरीरो यथा—'शिखरिणि क्व नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः । तरुणि येन तवाधरपाटलं दशति बिम्बफलं शुकशावकः ॥' न हि निर्विघ्नोत्तमसिद्धयोऽपि श्रीपर्वतप्रभृतय इमां सिद्धिं विदध्युः । दिव्यकल्पसहस्रादिश्चात्र परिमितकालः । न चैवंविधोत्तमफलत्वेन चान्द्रायणप्रभृत्यपि तपः श्रुतम् । तवेति भिन्नं पदम् । समासेन विगलिततया सा न प्रतीयते तव दशतीत्यभिप्रायेण । तेन वृत्तानुरोधात् त्वदधरपाटलम् इति न कृतमिति । तदसदेव । दशतीत्यास्वादयति । अविच्छिन्नप्रतिबन्धतया न त्वौदरिकवत्परिभुंक्ते अपि तु रसज्ञोऽत्रेति तत्प्राप्तिवदेव । रसज्ञताप्यस्य तपःप्रभावादेवेति । शुकशावक इति । तारुण्याद्युचितकाललाभोऽपि तपस एवेति । अनुरागिणश्च प्रच्छन्नस्वाभिप्रायख्यापनवैदग्ध्यचाटुविरचनात्मकभावोन्मीलनं व्यङ्ग्यम् । अत्र चाव्यवहरणत्रयेऽपि प्रौढोक्तिरेव वस्तुव्यञ्जकत्वेन स्वदते । स्वभावेऽपि हि वर्ण्यमानः कविप्रौढ्यैव स्वदते । एतच्च जात्यलंकारे विवेचयिष्यते । काव्यस्य च कविरेव कर्ता वक्ता च । तत्र कविनैव निबद्ध इति कवेरेव

---

१. 'सज्जयति सुरभिमासो न तावदर्पयति युवतिजनलक्ष्यमुखान् ।
अभिनवसहकारमुखान्नवपल्लवपत्रलाननङ्गस्य शरान् ॥' [इति च्छाया]

२. 'ण दाव अप्पेइ' ध्वन्यालोके. ३. 'न्तोचेतनो' ध्वन्यालोकलोचने.

क्तिमन्तरेण स्वतः संभविनोऽप्यकिंचित्करत्वात् । कविप्रौढोक्तिरेव च कविनिबद्धवक्तृप्रौढोक्तिरिति किं प्रपञ्चेन ॥

तत्र वस्तुनो वस्तुव्यञ्जकत्वं पदे यथा—

'[1]तं ताण सिरिसहोयररयणाहरणम्मि हिययमिक्करसम् ।
बिम्बाहरे पियाणं निवेसियं कुसुमबाणेन ॥'

अत्र कुसुमबाणेनेति पदं कामदेवस्य मृदूपायसौन्दर्यं प्रकाशयति ॥

वाक्ये यथा—

'तापी नेयं नियतमथ वा तानि नैतानि नूनं
तीराण्यस्याः सविधविचलद्वीचिवाचालितानि ।
अन्यो वाहं किमथ न हि तद्वारिवेल्लद्बलाकं
यत्तत्पल्लीपतिदुहितरि स्नातुमभ्यागतायाम् ॥'

अत्र वाक्यार्थेन वस्तुमात्ररूपेणाभिलषणीयजनकृतमेव भावानां हृद्यत्वं न स्वत इत्येतद्वस्तु व्यज्यते ॥

---

तथाविधार्था उल्लिखिताः इति स्वतःसंभवित्वम् । कविनिबद्धवक्तृप्रौढोक्तिमात्रशरीरत्वं चार्थस्य न वाच्यमित्यर्थः ॥ **किं प्रपञ्चेनेति** । एवं हि भेदपरिकल्पने शिष्यव्यामोह एव संपद्यत इत्यर्थः ॥ **तं ताणेति** । तेषामसुराणां पातालवासिनां यैः पुनः पुनरिन्द्रविमर्दनादि किं किं न कृतम् तद्धृदयमिति येभ्यस्तेभ्योऽतिदुःखकरेभ्योऽप्यकम्पनीयव्यवसायम् । तच्च श्रीसहोदराणामत एवानिर्वार्यान्योत्कर्षाणामित्यर्थः । तेषां रत्नानामासमन्ताद्धरणे एकरसं तत्परं यद्धृदयं तत्कुसुमबाणेन सुकुमारतरोपकरणसंभारेणापि प्रियाणां बिम्बाधरे निवेशितम् । तदवलोकनपरिचुम्बनदर्शनमात्रकृतकृत्यताभिमानयोगित्वेन कामदेवेन कृतम् तेषां हृदयं यदत्यन्तविजिगीषाज्वलनजाज्वल्यमानमभूदिति यावत् ॥

---

१. 'तत्तेषां श्रीसहोदररत्नहरणे हृदयमेकरसम् ।
बिम्बाधरे प्रियाणां निवेशितं कुसुमबाणेन ॥' [इति च्छाया]

वस्तुनोऽलंकारव्यञ्जकत्वं पदे यथा—

'[1]वीराण रमइ घुसिणारुणम्मि न तहा पियाथणुत्थङ्गे।
दिट्ठी रिउगयकुम्भत्थलम्मि जह बहलसिन्दूरे॥'

अत्र धी(वी)राणामिति पदार्थो वस्तुमात्ररूपः कुचयोः कुम्भस्थलस्य चोपमालंकारं ध्वनति॥

---

**वस्तुनोऽलंकारव्यञ्जकत्वमिति।** वस्तुना उपमादिरलंकारो व्यज्यत इत्यर्थः। तत्रोपमाध्वनिः 'वीराण-' इत्यादिना दर्शितः। अर्थान्तरन्यासध्वनिः पदे यथा —'[1]हिअअ[2]ट्ठियमन्नं खुअ अणरुद्धमुहं पि मं पसायन्त। अवरद्धस्स वि [3]ण हु दे बहुजाणय रुसिउं सक्कम्॥' हृदये स्थितो न तु बहिः प्रकटितो मन्युर्यया। अत एवाप्रदर्शितरोषमुखीमपि मां प्रसादयन्। हे बहुज्ञ, अपराद्धस्यापि तव खलु न रोषकरणं शक्यम्। अत्र बहुज्ञेत्यामन्त्रणार्थो विशिषे पर्यवसितः। अनन्तरं तु तदर्थपर्यालोचनबलाद्यत्[4]सामान्यरूपं समर्थकं प्रतीयते तदेव चमत्कारकारि। [5]तथा हि। खण्डिता सती वैदग्ध्यानुनीता तं प्रत्यक्षेण दर्शयन्ती इत्थमाह। यः कश्चिद्बहुज्ञो धूर्तः स एवं सापराधोऽपि स्वापराधावकाशमवच्छादयतीति मा त्वमात्मनि बहुमानं मिथ्या ग्रहीरिति। उत्प्रेक्षाध्वनिर्यथा—'चन्दनासक्तभुजगनिःश्वासानिलमूर्च्छितः। मूर्च्छयत्येष पथिकान्मधौ मलयमारुतः॥' अत्र हि मधौ मलयमारुतस्य पथिकमूर्च्छाकारणत्वं मन्मथोन्माथदायित्वेनैव। तत्तु चन्दनासक्तभुजगनिःश्वासानिलमूर्च्छितत्वेनोत्प्रेक्ष्यत इत्युत्प्रेक्षा साक्षादनुक्तापि वाक्यार्थसामर्थ्यादवसीयते। न चैवंविधे विषये इवादिशब्दप्रयोगमन्तरेणासंबद्धतैवेति शक्यं

---

१. 'वीराणां रमते घुसृणारुणे न तथा प्रियास्तनोत्सङ्गे।
दृष्टी रिपुगजकुम्भस्थले यथा बहलसिन्दूरे॥' [इति च्छाया]

---

१. 'हृदयस्थापितमन्युमपरोषमुखीमपि मां प्रसादयन्।
अपराद्धस्यापि न खलु ते बहुज्ञ रोषितुं शक्यम्॥' [इति च्छाया]

२. 'हिअअट्ठाविअमण्णुं अवरुण्णमुहं' ध्वन्यालोके पाठः. ३. 'णं' ध्वन्यालोके

४. 'सामर्थ्य' लोचने. ५. 'सा हि' लोचने.

वक्तुम्, गमकत्वात्। अन्यत्रापि तदप्रयोगे तदर्थावगतिदर्शनात्। यथा—'ईसाकलुसस्स वि तुह मुहस्स णणु एस पुण्णिमायंदो। अज्ज सरिसत्तणं पाविऊण अङ्गि व्विअ न माई॥' ईर्ष्याकलुषितस्यापि ईषदरुणच्छायाकस्य। यदि तु[2] प्रसन्नस्य मुखस्य सादृश्यमुद्वहेत्सर्वदा तत्किं कुर्यात् त्वन्मुखं तु चन्द्रीभवतीति मनोरथानामप्यपथमिदमित्यपिशब्दस्याभिप्रायः। अङ्गे न स्वदेहे न माति दश दिशः पूरयति यतोऽद्येयता कालेन एकं दिवसमात्रमित्यर्थः। अत्र पूर्णचन्द्रेण दिशां पूरणं स्वरससिद्धमेवमुत्प्रेक्ष्यते। यदि च ननुशब्देन वितर्कमुत्प्रेक्षारूपमाचक्षणेनासंबद्धता पराकृतेति संभाव्यते तदेदमत्रोदाहरणं यथा—'त्रासाकुलः परिपतन्परितो निकेतान्पुंभिर्न कैश्चिदपि धन्विभिरन्वबन्धि। तस्थौ तथापि न मृगः क्वचिदङ्गनाभिराकर्णपूर्णनयनेषुहतेक्षणश्रीः॥' परितः सर्वतो निकेतान्परिपतन्नाक्रामन्न कैश्चिदपि चापपाणिभिरसौ मृगोऽनुबद्धस्तथापि न क्वचित्तस्थौ त्रासचापलयोगात् स्वाभाविकादेव तत्र चोत्प्रेक्षा ध्वन्यते। अङ्गनाभिराकर्णपूर्णैर्नेत्रशरैर्हृता ईक्षणश्रीः सर्वस्वभूता अस्य यतः अतो न तस्थौ। नन्वेतदप्यसंबद्धमस्तु। न। शब्दार्थव्यवहारे प्रसिद्धिरेव प्रमाणम्॥ दीपकध्वनिर्यथा—'मा भवन्तमनलः पवनो वा वारणो मदकलः परशुर्वा। वज्रमिन्द्रकरविप्रसृतं वा स्वस्ति तेऽस्तु लतया सह वृक्ष॥' इति। अत्र मा बाधिष्टेति गोप्यमानादेव दीपकादत्यन्तस्नेहास्पदत्वप्रतिपत्त्या चारुत्वनिष्पत्तिः॥ अप्रस्तुतप्रशंसाध्वनिर्यथा—'ढुण्ढुणन्तो मरिहिसि—' इति। प्रियतमेन साकमुद्याने विहरन्ती काचिन्नायिका भ्रमरमेवमाहेति। भृङ्गस्याभिधायां प्रस्तुतत्वमेव। न चामन्त्रणादप्रस्तुतत्वगतिः प्रत्युतामन्त्रणं तस्या मौग्ध्यविजृम्भितमित्यभिधया तावन्नात्राप्रस्तुतप्रशंसा। समाप्तायां पुनरभिधायां वाच्यार्थसौन्दर्यबलादन्यापदेशता ध्वन्यते। यत्र स्वसौभाग्याभिमानपूर्णा सुकुमारपरिमलमालतीकुसुमसदृशी मुग्धकुलवधूर्निर्व्याजप्रेमपरतया कृतकवैदग्ध्यलब्धप्रसिद्ध्यतिशयानि शम्भलीकष्टकव्याप्तानि दूरामोदकेतकीवनस्थानीयानि वेश्याकुलानि इतश्चामुतश्च चञ्चूर्यमाणं प्रियतममुपालभते॥ अपह्नुतिध्वनिर्यथा—'यत्कालागुरुपत्रभङ्गरचनावासैकसारायिते गौराङ्गी-

---

१. 'ईर्ष्याकलुषस्यापि तव मुखस्य नन्वेष पूर्णिमाचन्द्रः। अद्य सदृशत्वं प्राप्याङ्ग इव न माति॥' [इति च्छाया]

२. 'त्वप्रस' लोचने.

वाक्ये यथा—

'पुत्रक्षयेन्धनघनप्रविजृम्भमाण-
स्नेहोत्थशोकविषमज्वलनाभितप्तः ।
प्रालेयशीतलममंस्त स बाह्यवह्नि-
मह्नाय देहमथ संविदधे सरित्सात् ॥

अत्र विशिष्टः पुत्रक्षयोपतप्तोऽग्निं प्रविष्टो न तेन दग्ध इत्ययं वाक्यार्थो वस्तुस्वभावः शोकस्य बाह्यवह्नेराधिक्यमिति व्यतिरेकालंकारं ध्वनति ॥

---

कुचकुम्भभूरिसुभगाभोगे सुधाधामनि । विच्छेदानलदीपितोत्कंचनिताचेतोधि-[1]वासोद्भवं संतापं विनिनीषुरेष विततैरङ्गैर्नताङ्गः स्मरः ॥' अत्र चन्द्रमण्डलमध्यवर्तिनो लक्ष्मणो वियोगाग्निपरिचितवनिताहृदयोदितप्लोषमलीमसच्छविमन्मथाकारतयापह्नवो ध्वन्यते । अत्रैव ससंदेहध्वनिः । यतः चन्द्रवर्तिनोऽस्तस्य नामापि न गृहीतम् । अपि तु गौराङ्गीस्तनाभोगस्थानीये चन्द्रमसि कालागुरुपत्रभङ्गविच्छित्त्यास्पदत्वेन यच्छाखामुत्कृष्टतामाचरतीति तन्न जानीमः किमेतद्वस्त्विति ससंदेहो ध्वन्यते ॥ पूर्वमनङ्गीकृतप्रणयामनुतप्तां प्रणयिविरहोत्कण्ठितां वल्लभागमनप्रतीक्षापरत्वेन कृतप्रसाधनादिविधेयतया वासकसज्जीभूतां पूर्णचन्द्रोदयावसरे दूतीमुखेनानीतः प्रियतमस्त्वदीयकुचकलशन्यस्तकालागुरुपत्रभङ्गरचना मन्मथोद्दीपनकारिणीति चाटुकं कुर्वाणश्चन्द्रवर्तिनी च कुवलयदलश्यामला कान्तिरेवमेव करोतीति निदर्शनाध्वनिरपि ॥ त्वदीयकुचकलशशोभा मृगाङ्कशोभा च सह मदनमुद्दीपयते इति सहोक्तिध्वनिरपि ॥ 'त्वत्कुचसदृशश्चन्द्रश्चन्द्रसमस्त्वत्कुचाभोगः' इति प्रतीतेरुपमाध्वनिरपि ॥ एवमन्येऽप्यत्र प्रभेदाः शक्योत्प्रेक्षाः । महाकविवाचोऽस्याः कामधेनुत्वात् । यतः—'हेलापि कस्यचिदचिन्त्यफलप्रसक्त्यै कस्यापि नालमणवेऽपि फलाय यत्नः । दिग्दन्तिरोमचलनं धरणीं धुनोति खात्संपतन्नपि लतां चलयेन्न भृङ्गः ॥' व्यतिरेकध्वनिर्यथा—'[2]जाएज्ज

---

१. 'वनिताचेतो' स्यात्.

२. 'जायेय वनोद्देशे कुब्ज इव पादपो घटितपत्रः ।
मा मानुषे लोके तापैकरसो दरिद्रश्च ॥'

अलंकारस्य वस्तुव्यंङ्ग्यत्वं पदे यथा—

'चूंअङ्कुरावयंसं छणपसरमंहग्घमणहरसुरामोयम् ।
अपणामियं पि गहियं कुसमसरेण महुमासलच्छीए मुहम् ॥'

---

वणुद्देशे खुज्जो व्विअ पायवो घडिअवत्तो । मा माणुसम्मि लोए ताएक्करसो दरिद्दो अ ॥' जायेय वनोद्देशे एव वनस्यैकान्ते गहने यत्र स्फुटबहुतरवृक्षसंपत्त्या प्रेक्षतेऽपि न कश्चित् कुब्ज इति । यो रूपघटनादावेवानुपयोगी । झटितपत्र इति छायामपि न करोति तस्य का पुष्पफलवार्तेति भावः । तादृशोऽपि कदाचिदाङ्गारिकस्योपयोगी स्यादुलूकादेर्निवासायेति भावः । मानुष इति । सुलभार्थिजन इति भावः । लोक इति । यत्र लोक्यते सोऽर्थिभिः तेन चार्थिजनो न किंचिच्छक्यते कर्तुं तन्महद्वैशसमिति भावः । अत्र वाच्योऽलंकारो न कश्चित् । त्यागैकरसस्य दरिद्रस्य जन्मानभिनन्दनं त्रुटितपत्रकुब्जपादपजन्माभिनन्दनं च साक्षाच्छब्दवाच्यम् । तथाविधादपि पादपात्तादृशश्च पुंसः शोच्यतायामाधिक्यं तात्पर्येण प्रकाशयति ॥ एवमन्येऽलंकारा व्यङ्ग्यतया अभ्यूह्या इति ॥ **अलंकारस्य वस्तुव्यञ्जकत्वमिति** । अलंकारेण उपमादिना वाच्येन वस्तु व्यज्यत इत्यर्थः । तत्र विरोधस्य वस्तुव्यञ्जकत्वं चूअङ्कुरावयंसमित्यादिना प्रदर्शितम् ॥ उपमाया यथा । शिखरिणीति । अत्र तवाधरपाटलमिति पदे समासोपमयाभिलाषात्मकं वस्तु ध्वन्यते ॥ रूपकस्य यथा 'चमहियमाणसकञ्चणपङ्कयनिम्महियपरिमला ज़स्स । अखुडियदाणप्पसरा बाहुप्पलिहा व्विय गयन्दा ॥' अत्र बाह्वोः परिघरूपेणात्मना रूपकालंकारेण भुजद्वयान्यद्गजाश्वादिसामग्री रूपं तस्यानुपादेयमिति वस्तु व्यज्यते । एवमन्येऽप्यलंकारा वस्तुनो व्यञ्जकत्वेनोदाहार्याः ॥ **छणेति** । महार्घेनो(णो)त्सवप्रसरेण मनोहरसुरस्य मन्मथदेवस्य आमोदश्चमत्कारो यत्र । महार्घशब्दस्य

---

१. 'व्यञ्जकत्वं' स्यात् टीकानुरोधात्.

२. 'चूताङ्कुरावतंसं क्षणप्रसरमहार्घमनोहरसुरामोदम् ।
असमर्पितमपि गृहीतं कुसुमशरेण मधुमासलक्ष्म्या मुखम् ॥'

३. 'महं घणमहुरामोअम्' ध्वन्या०.

---

१. '...... मानसकाञ्चनपङ्कजनिर्मथितपरिमला यस्य ।
अखण्डितदानप्रसरा बाहुपरिघा इव गजेन्द्राः ॥'

अत्रापणामियमसमर्पितमपि विरोधालंकारेण वाच्येन मधुमासप्रौढिमनि भाविनि किं भविष्यतीत्येवंभूतं वस्तु ध्वन्यते ॥

वाक्ये यथा—

'[1]गाढालिङ्गणरहसुज्जयम्मि दइए लहु समोसरइ ।
माणंसिणीण माणो पीलणभीय व्व हिययाओ ॥'

अत्रोत्प्रेक्षया प्रत्यालिङ्गनादि । तत्र जृम्भत इति वस्तु व्यज्यते ॥

अलंकारेणालंकारः पदे यथा—

'[2]तुह वल्लहस्स गोसम्मि आसि अहरो मिलाणकमलदलो ।
इअ नववहुया सोउण कुणई वयणं महीसमुहम् ॥'

अत्र मिलाणकमलदलमिति रूपकेण म्लानत्वान्यथानुपपत्तेः त्वयास्य मुहुर्मुहुः परिचुम्बनं कृतमिति अनुमानं व्यज्यते ॥

वाक्ये यथा—

'स वक्तुमखिलाञ्छक्तो हयग्रीवाश्रितान्गुणान् ।
योऽम्बुकुम्भैः परिच्छेदं शक्तः कर्तुं महोदधेः ॥'

अत्र निदर्शनेन हयग्रीवगुणानामवर्णनीयताप्रतिपादनरूपोऽसाधारणतद्विशेषप्रकाशनपर आक्षेपो व्यज्यते ॥

प्रबन्धेऽर्थशक्तिमूलो व्यङ्ग्यो यथा गृध्रगोमायुसंवादे—

---

परनिपातः । प्राकृते नियमाभावात् । असमर्पितमपि गृहीतं कुसुमशरेण मधु-

---

१. 'गाढालिङ्गनरभसोद्यते दयिते लघु समपसरति ।
मनस्विन्या मानः पीडनाभीत इव हृदयात् ॥'

२. 'तव वल्लभस्य प्रातरासीदधरो म्लानकमलदलम् ।
इति नववधूः श्रुत्वा करोति वदनं महीसंमुखम् ॥'

तथा च—

'अलं स्थित्वा श्मशानेऽस्मिन्गृध्रगोमायुसंकुले ।
न चेह जीवितः कश्चित्कालधर्ममुपागतः ॥'

इति दिवाप्रभवतो गृध्रस्य पुरुषविसर्जनपरमिदं वचनम् ।

'आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत सांप्रतम् ।
बहुविघ्नो मुहूर्तोऽयं जीवेदपि कदाचन ॥'

'अमुं कनकवर्णाभं बालमप्राप्तयौवनम् ।
गृध्रवाक्यात्कथं बालास्त्यक्षध्वमविशङ्किताः ॥'

इति निशि विजृम्भमाणस्य गोमायोर्जनव्यावर्तननिष्ठां चेति प्रबन्धप्रतिपाद्येनार्थेन गृध्रगोमाय्वोर्भक्षणाभिप्रायो व्यज्यते ॥ एवं **मधुमथनविजये** पाञ्चयज्ञोक्तिषु, **विषमबाणलीलायां** कामदेवस्य सहचरसमा-

---

मासलक्ष्म्या मुखमारम्भो वक्त्रं च । तच्च सुरामोदयुक्तं भवति ॥ **[1]पाञ्चजन्योक्तिष्विति** । '[2]लीलादाढग्गुव्वूढसयलमहिमण्डलस्स विअ अज्ज । कीस मुणालाहरणं पितुम्भगरुआइ अङ्गंपि ॥' पाञ्चजन्योक्तयो रुक्मिणीविप्रलम्भवासुदेवाशयप्रतिभेदनाभिप्रायमभिव्यञ्जन्ति ॥ **सहचरेति** । कामदेवस्य सहचरा मधुयौवनमलयानिलादयस्तेषां समागमे । तदुक्तिष्वित्यर्थः । यथा—'[3]हुंमिअवहच्छिअरेहो णिरङ्कुसो अहविवेअरहिओ वि । सिविणेवि उम्मसमये पत्तिअभत्तिं न पप्फसिमि ॥' इत्यादयो यौवनोक्तयस्तं तं निजस्वभावं व्यञ्जन्ति ॥ **रसभावेति** । यद्यपि रसेनैव सर्वं काव्यं जीवति, तथापि तस्य रसस्य एकघनचमत्कारात्मनोऽपि कुतश्चिदंशात्प्रयोजकीभूतादधिकोऽसौ चमत्कारो भवति । तत्र यदा कश्चिदुद्रिक्तावस्थां प्रतिपन्नो व्यभिचारी वक्ष्यमाणोदयादिधर्माच्चमत्कारातिशये प्रयोजको भवति तदा भावध्वनिः । यदा तु विभावाभासाद्रत्याभासोदयस्तदा विभावानुभावाभासाच्चर्वणाभास इति रसाभासः । एवं भावाभासोऽपि । एवं रसध्वनेरेवामी

---

१. 'पाञ्चजन्योक्तिषु' विवेके.

---

१. 'पाञ्चयज्ञोक्तिषु' मूल०. २, ३. अनयोश्छाया स्फुटा.

गमेऽर्थव्यञ्जकत्वमुदाहार्यम् ॥ एवं च वस्तुनोऽलंकारव्यञ्जकत्वे भेद-त्रयमुत्प्रेक्ष्यम् ॥

**रसादिश्च ।**

रसभावतदाभासभावशान्तिभावोदयभावस्थितिभावसंधिभावशबलत्वान्यर्थशक्तिमूलानि व्यङ्ग्यानि । चकारः पदवाक्यप्रबन्धानुकर्षणार्थः । पृथग्योगे रसादयो व्यङ्ग्या एव भवन्ति, न तु कदाचिद्वाच्यतामपि सहन्ते इति रसादीनां प्राधान्यख्यापनार्थः । वस्त्वलंकारौ हि वाच्यावपि भवतः ॥

तत्रार्थशक्तिमूलो व्यङ्ग्यो रसः पदे यथा—

'उत्कम्पिनी भयपरिस्खलितांशुकान्ता
ते लोचने परिभृशं कुपिते वहन्ती ।

---

भावध्वनिप्रभृतयो निःस्पन्दाः । आस्वादे प्रधानं प्रयोजकमंशं विभज्य व्यवस्था-
प्यते । यथा—गन्नयुक्तिज्ञौ(?)रेकसंमूर्च्छितमोदोपभोगेऽपि सुपरिशुद्धमांस्यादिप्र-
युक्तमिदं सौरभमिति । रसध्वनिस्तु स एव, यत्र मुख्यतया विभावानुभावव्यभि-
चारिसंयोजनोचितस्थायिप्रतिपत्तिकस्य प्रतिपत्तुः स्थाय्यंशचर्वणाप्रयुक्त एवास्वा-
दप्रकर्ष इति । उदाहरणानि चैतल्लक्षणाप्रस्तावे दर्शयिष्यन्ते ॥ **उत्कम्पिनीति ।**
अत्र हि ते इति पदं रसमयत्वेन स्फुटमेवावभासते सहृदयानाम् । तथा हि—
वासवदत्तादाहाकर्णनप्रबुद्धशोकनिर्भरस्य वत्सराजस्येदं परिदेवितवचनम् । तत्र च
शोको नामेष्टजनविनाशप्रभव इति तस्यास्य जनस्य ये भ्रूक्षेपकटाक्षादयः पूर्वं
रतिविभावतामवलम्बन्ते स्म त एवात्यन्तविनष्टाः सन्त इदानीं स्मृतिगोचरतया
निरपेक्षत्वभावप्रमाणं[1] करुणमुद्दीपयन्तीति स्थिते[2]। ते लोचने इति तच्छब्दस्तल्लोच-
नगतस्वसंवेद्याव्यपदेश्यानन्तगुणगणस्मरणाकारद्योतको रसस्यासाधारणनिमित्ततां
प्राप्तः । तेन यत्किंचि[3]च्चोदितं परिहृतं च तन्मिथ्यैव । तथा हि । चोद्यम्—प्रका-
न्तपरामर्षकस्य तच्छब्दस्य कथमियति व्यापारः । उत्तरम्—रसाविष्टोऽत्र परा-

---

१. 'निरपेक्षभावत्वप्राणं' लोचने. २. 'स्थितम्' स्यात्. ३. 'केनचित्' लोचने.

तीक्ष्णेन दारुणतया सहसैव दग्धा
धूमान्धितेन दहनेन न वीक्षितासि ॥'

अत्र ते इति पदेन स्मारितानामनुभवैकगोचराणां सातिशयविभ्रमाणां शोकव्यञ्जकत्वम् ॥

त्याद्यन्ते यथा—

'मा पन्थं रुन्धीओ अवेहि बालय अहोसि अहिरीओ।[1]
अम्हे अणिरिक्काओ सुन्नघरं रक्खियव्वं णो ॥'

अत्रापेहीति त्याद्यन्तत्वं तावदप्रौढो लोकमध्ये यदेवं प्रकाशयसि अस्ति तु संकेतस्थानं शून्यं गृहं तत्रैवागन्तव्यमिति ध्वनति ॥

---

मृष्टेति। तदुभयमनुत्था[प]नोपहतम्। यत्र ह्यनुद्दिश्यमानधर्मान्तरसाहित्ययोग्यधर्मयोगित्वं वस्तुनो यच्छब्देनाभिधाय तद्बुद्धिस्थधर्मान्तरसाहित्यं तच्छब्देन निर्वाह्यते तत्र पूर्वप्रक्रान्तपरामर्शकत्वं तच्छब्दस्य। यत्र तु निमित्तोपनतस्मरणविशेषाकारसूचकत्वं स घट इत्यादौ तत्र का परामर्शकथेति ॥ उत्कम्पिनीत्यादिना तदीयभयानुभावोत्प्रेक्षणं मया अनिर्वाहितप्रतीकारमिति शोकावेगस्य विभावतेति सातिशयविभ्रमैकायतनरूपे अपि लोचने विधुरे कांदिशीकतया निर्लक्ष्ये क्षिपन्ती क्व स्नाता क्वासौ चार्यपुत्र इति तयोर्लोचनयोस्तादृशी चावस्थेति सुतरां शोकोद्दीपनम्। **तीक्ष्णेनेति**। तस्यायं स्वभाव एव किं कुरुतां तथापि च धूमेनान्धीकृतो द्रष्टुमसमर्थ इति, न तु सविवेकस्येदृशानुचितकारित्वं संभाव्यत इति स्मर्यमाणं तदीयं सौन्दर्यमिदानीं सातिशयशोकावेशविभावतां प्राप्त इति तेशब्दे सति सर्वोऽयमर्थो निर्व्यूढः। यथा वा—'झगिति कनकचित्रे तत्र दृष्टे कुरङ्गे रभसविकसितास्ते दृष्टिपाताः प्रियायाः। पवनविलुलितानामुत्पलानां पलाशप्रकरमिव किरन्तः स्मर्यमाणा दहन्ति ॥' इति ॥ **अणिरिक्काओ इति**। परतन्त्रा इति ॥

इत्याचार्यश्रीहेमचन्द्रविरचिते विवेके प्रथमोऽध्यायः।

---

१. 'मा पन्थानं रुध अपेहि बालक अहो असि अह्रीकः।
वयं परतन्त्राः शून्यगृहं रक्षणीयमस्माकम् ॥'

पदैकदेशोऽपि पदं यथा—

'तालैः शिञ्जद्वलयसुभगैर्नर्तितः कान्तया मे
यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद्वः ।'

अत्र तालैरिति बहुवचनमनेकभङ्गिवैदग्ध्यं ख्यापयद्विप्रलम्भमुद्दीपयति—

'लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो
निराहाराः सख्यः सततरुदितोच्छूननयनाः ।
परित्यक्तं सर्वं हसितपठितं पञ्जरशुकै-
स्तवावस्था चेयं विसृज कठिने मानमधुना ॥'

अत्र न लिखतीत्यपि तु प्रसादपर्यन्तमास्ते इति न त्वासित इति । भूमिमिति न तु भूमाविति । न हि बुद्धिपूर्वकं किंचिल्लिखतीति स्यादित्यादिविभक्तीनां व्यञ्जकत्वम् ॥

'अंस(ण्ण)त्थ वच्च बालय अण्हा इति किसमलेहसि एअम् ।[1]
हो जायाभीरुयाण तीत्थं विय न होई ॥'

अत्र जायातो ये भीरवस्तेषामेतत्स्थानमिति दूरापेतः संबन्ध इत्यनेन संबन्धेनैवेर्ष्यातिशयः प्रच्छन्नकामिन्याभिव्यक्तः । जायाभीरुकाणामित्यत्र तद्धितस्यापि व्यञ्जकत्वम् । ये ह्यरसज्ञा[2] धर्मपत्नीषु प्रेमपरतन्त्रास्तेभ्यः कोऽन्यो जगति कुत्सितः स्यादिति कप्रत्ययोऽवज्ञातिशयद्योतकः ॥

'अयमेकपदे तया वियोगः प्रियया चोपनतः सुदुःसहो मे ।
नववारिधरोदयादहोभिर्भवितव्यं च निरातपत्वरम्यैः ॥'

अत्र चकारौ निपातावेवमाहतुः । गण्डस्योपरि स्फोटवद्[3]द्विप्रयोगश्च

---

१. 'अन्यत्र व्रज बालक प्रकर्षेणालोकयस्येतत् ।
भो जायाभीरुकाणां तीर्थमेव न भवति ॥'

२. 'ये हि रसज्ञाः' ध्वन्यालोके. ३. 'स्फोट इतिवत्तद्वियोगवद्वर्षा' ध्वन्यालोके.

वर्षासमयश्च समुपनतमेतद्द्वयमलं प्राणहरणायेति । अत एव रम्यपदेन सुतरामुद्दीपनविभावत्वमुक्तम् ॥

'प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः' अत्र प्र इत्युपसर्ग इङ्गुदीफलानां सरसत्वमाचक्षाण आश्रमस्य सौन्दर्यातिशयं ध्वनति ॥

अनेकस्य निपातस्योपसर्गस्य चैकत्र पदे यः प्रयोगः सोऽपि रसव्यक्त्यर्थः । यदाह—'अहो बतासि स्पृहणीयवीर्यः' अत्राहो बतेत्यनेन श्लाघातिशयो ध्वन्यते ॥

'मनुष्यवृत्त्या समुपाचरन्तं स्वबुद्धिसामान्यकृतानुमानाः ।
योगीश्वरैरप्यसुबोधमीशं त्वां बोद्धुमिच्छन्त्यबुधाः स्वतर्कैः ॥'

अत्र सम्यग्भूतमुपांशु कृत्वा आसमन्ताच्चरन्तमित्यनेन लोकानुजिघृक्षातिशयस्तत्तदाचरतः परमेश्वरस्य ध्वन्यते ॥

'रमणीयः क्षत्रियकुमार आसीत्' इति । अत्र शंकरधनुर्भङ्गश्रवणात्प्रकुपितस्य भार्गवस्योक्त्या आसीदित्यतीतकालनिर्देशाद्दाशरथेः कथाशेषत्वं व्यज्यते ॥

यथा च प्रत्ययांशस्य द्योतकत्वं तथा प्रकृत्यंशस्यापि यथा—

'तद्गेहं नतभित्ति मन्दिरमिदं लब्धावकाशं दिवः
सा धेनुर्जरती नदन्ति करिणामेता घनाभा घटाः ।
स क्षुद्रो मुसलध्वनिः कलमिदं संगीतकं योषिता-
माश्चर्यं दिवसैर्द्विजोऽयमियतीं भूमिं परां प्रापितः ॥'

अत्र दिवसार्थेनात्यन्तासंभाव्यमानतास्यार्थस्य ध्वन्यते । तदिति प्रकृत्यंशश्चात्र नतभित्तीत्येतत्प्रकृत्यंशसहायः समस्तामङ्गलभूतां मूषिकाद्याकीर्णतां ध्वनति । एवं सा धेनुरित्यादावपि योज्यम् ॥

तथा—

'रइकेलिहिअनिअसणकरकिसलयरुद्धनयणजुअलस्स ।
रुद्दस्स तइयनयणं पव्वइपरिचुम्बिअं जयइ ॥'

अत्र जयतीति न तु शोभते इत्यादि । समानेऽपि हि स्थगनव्यापारे लोकेऽन्तरेणैव रूपेणास्य पिधानमिति तदेवोत्कृष्टमिति व्यज्यते ॥

भावादीनां पदप्रकाशत्वेऽधिकं न वैचित्र्यमिति न तदुदाह्रियते। वाक्यस्य रसादिव्यञ्जकत्वं रसादिलक्षणे एवोदाहरिष्यते । प्रबन्धे च नाटकादावर्थशक्तिमूला रसव्यक्तिः प्रतीतैव । वर्णरचनयोस्तु साक्षान्माधुर्यादिगुणव्यञ्जकत्वमेव। तद्द्वारेण तु रसे उपयोग इति गुणप्रकरणे एव वक्ष्येते इतीह नोक्ते ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायामलंकारचूडामणिसंज्ञस्वोपज्ञ-
काव्यानुशासनवृत्तौ प्रथमोऽध्यायः।

---

## द्वितीयोऽध्यायः।

रसलक्षणमाह—

**विभावानुभावव्यभिचारिभिरभिव्यक्तः स्थायी भावो रसः।**

वागाद्यभिनयसहिताः स्थायिव्यभिचारिलक्षणाश्चित्तवृत्तयो विभाव्यन्ते विशिष्टतया ज्ञायन्ते यैस्तैर्विभावैः काव्यनाट्यशास्त्रप्रसिद्धैरालम्बनोद्दीपनस्वभावैर्ललनोद्यानादिभिः, स्थायिव्यभिचारिलक्षणं चित्तवृत्तिविशेषं सामाजिकजनोऽनुभवन्ननुभाव्यते साक्षात्कार्यते यैस्तैरनुभावैः कटाक्ष-

---

**विभावैरिति**। यदाह मुनिः—'बहवोऽर्था विभाव्यन्ते वागङ्गाभिनयात्मकाः। अनेन यस्मात्तेनायं विभाव इति संज्ञितः॥' **अनुभावैरिति**। 'वागङ्गसत्त्वाभि-

---

१. 'रतिकेलिहृतनिवसनकरकिसलयरुद्धनयनयुगलस्य ।
रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति ॥'

भुजोत्क्षेपादिभिः, विविधमाभिमुख्येन चरणशीलैर्व्यभिचारिभिर्धृतिस्मृतिप्रभृतिभिः, स्थायिभावानुमापकत्वेन लोके कारणकार्यसहचारिशब्दव्यपदेश्यैर्ममैवैते परस्यैवैते न ममैते न परस्यैते इति संबन्धिविशेषस्वीकारपरिहारनियमानवसायात्साधारण्येन प्रतीतैरभिव्यक्तः सामाजिकानां वासनारूपेण स्थितः **स्थायी** रत्यादिको **भावो** नियतप्रमातृगतत्वेन स्थितोऽपि साधारणोपायबलात् सहृदयहृदयसंवादभाजा साधारण्येन गोचरीक्रियमाणश्चर्व्यमाणतैकप्राणो विभावादिभावनावधिरलौकिकचमत्कारकारितया परब्रह्मास्वादसोदरो निमीलितनयनैः कविसहृदयै रस्यमानः स्वसंवेदनसिद्धो **रसः** ॥

---

नयैर्यस्मादर्थो विभाव्यते । वागङ्गोपाङ्गसंयुक्तस्त्वनुभाव इति स्मृतः ॥' **रस इति** । तथा च **भरतमुनिः**—'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति । तत्र **भट्टलोल्लट**स्तावदेवं व्याचचक्षे—विभावादिभिः संयोगोऽर्थात्स्थायिनः ततो रसनिष्पत्तिः । तत्र विभावश्चित्तवृत्तेः स्थाय्यात्मिकाया उत्पत्तेः कारणम् । अनुभावाश्च न रसजन्या अत्र विवक्ष्यन्ते तेषां रसकारणत्वेन गणनानर्हत्वात् अपि तु भावानामेव । (ये[1]तु भावानामेव) येऽनुभावा व्यभिचारिणश्च [ते] चित्तवृत्त्यात्मकत्वात् यद्यपि न सहभाविनः स्थायिना, तथापि वासनात्मतेह विवक्षिता। तेन स्थाय्येव विभावानुभावादिभिरुपचितो रसः। स्थायी त्वनुपचितः। स चोभयोरपि मुख्यया वृत्त्या रामादावनुकार्येऽनुकर्तरि च नटे रामादिरूपतानुसंधानबलादिति ॥ तथा चाह **दण्डी**—'रतिः शृङ्गारतां याता रूपबाहुल्ययोगतः । आरुह्य च परां कोटिं कोपो रौद्रत्वमागतः ॥' अयं भावः—विभावैर्जनितोऽनुभावैः प्रतीतिपदं नीतो व्यभिचारिभिरुपचितो मुख्यवृत्त्यानुकरणीये रामे तद्रूपतानुसंधानादनुकर्तरि प्रतीयमानः स्थायी रस इति ॥ एतन्नेति **शङ्कुकः** । तथा हि—विभावाद्ययोगे स्थायिनोऽवगमो नोपपद्यते अवगमकस्याभावात् । न हि धूमं विना धराधरान्तःस्थो वह्निरवगम्यते । अपि च यथा स्वयमुत्पादिता विभावैः सूचिताश्चानुभावैः पोषमुपनीताश्च व्यभिचारिभिः संयोगाद्रसीभवन्ति स्थायिनः।

---

१. इदं प्रमादलिखितं भवेत्.

तदा स्थायिनामेव भावानामुद्देशो लक्षणं चादावभिधातुं युक्तं तच्च कस्मान्न कृतम् । आदौ हि रसानामुद्देशलक्षणे अभिहिते कस्माच्च रसानां विभावानुभावांश्चोक्त्वा तानेव स्थायिनां पुनराह ॥ तथा हि रसान्प्रतिपदं लक्षयन्मुनिर्वक्ष्यति—'अथ वीरो नामोत्तमप्रकृतिरुत्साहात्मकः । स चासंमोहाध्यवसायनयविनयबलपराक्रमशक्तिप्रतापप्रभावादिभिर्विभावैरुत्पद्यते' इति । पुनश्च स्थायिभावानुवादे तु—'उत्साहो नामोत्तमप्रकृतिः । स चाविषादशक्तिसौन्दर्यादिभिर्विभावैरुत्पद्यते' इति । एवमभिन्नार्था एवैते विभावा रसलक्षणे विस्तरत उक्ताः, भावानुवादे लेशतः प्रदर्शिताः । न चोत्पत्तौ पदार्थानां कारणमभिधाय पुष्यतां पुनस्तदुत्पत्तिकारणमभिधातव्यम्, वैयर्थ्यापत्तेः । किं च—अनुपचितावस्थः स्थायी भावः, उपचितावस्थो रस इत्युच्यमाने एकैकस्य स्थायिनो मन्दतममन्दतरमन्दमध्येत्यादिविशेषापेक्षया आनन्त्यापत्तिः । एवं रसस्यापि तीव्रतीव्रतरतीव्रतमादिभिरसंख्यत्वं प्रपद्यते । अथोपचयकाष्ठां प्राप्त एव रस उच्यते, तर्हि 'स्मितमवहसितं विहसितमुपहसितं चापहसितमतिहसितम्' इति षोढात्वं हास्यरसस्य कथं भवेत् । अन्यच्च उत्तरोत्तरप्रकर्षतारतम्यवशेन 'प्रथमे त्वभिलाषः स्याद्द्वितीये त्वर्थचिन्तनम् । अनुस्मृतिस्तृतीये च चतुर्थे गुणकीर्तनम् ॥ उद्वेगः पञ्चमे ज्ञेयो विलापः षष्ठ उच्यते । उन्मादः सप्तमे ज्ञेयो भवेद्व्याधिरथाष्टमे । नवमे जडता प्रोक्ता दशमे मरणं भवेत् ॥' इति दशावस्थः कामोऽभिहितः । तत्रापि प्रत्यवस्थमुत्तरोत्तरप्रकर्षतारतम्यसंभवात्कामावस्थासु दश स्वसंख्याताः शृङ्गाररतिभावादयः प्रसज्जेयुः । अपरं च प्रागवस्थाभावः स्थायी, रसीभवति तु क्रमेणोपचित इत्यत्रापि विपर्ययो दृश्यते । यतः—इष्टजनवियोगाद्विभावादुत्पन्नो महान् शोकः क्रमेणोपशाम्यति । न तु दार्ढ्यमुपैति । क्रोधोत्साहरतीनां च निजनिजकारणबलादुद्भूतानामपि कालवशादमर्षस्थैर्यं सेवाविपर्ययेऽपचयोऽवलोक्यते । तस्मान्न भावपूर्वकत्वं रसस्य । अपि तु तद्विपर्यय एव । उक्तं हि मुनिना—'रसपूर्वकत्वं भावानाम्, भावपूर्वकत्वं रसस्य, विषयविशेषापेक्षया प्रयोगे ह्यनुकर्तरि रसानास्वादयतामनुकार्ये भावप्रतीतिरुत्पद्यते' इति । प्रथमपक्षस्योत्थानम् । लोके तु भावदर्शनात्तत्स्वरूपरसनिष्पत्तिरिति । तस्मादन्यथा व्याख्यायते हेतुभिर्विभावाख्यैः कार्यैश्चानुभावात्मभिः सहचारिरूपैश्च व्यभिचारिभिः प्रयत्नार्जिततया कृत्रिमैरपि तथानभिमन्यमानैः संयोगाद्गम्यगमकभावरूपादनुमीयमानोऽपि वस्तुसौन्दर्य-

१. 'सेव' भवेत्.

बलात्कषायफलचर्वणपरपुरुषदर्शनप्रभवमुखप्रसेककलनाकल्पया रसनीयस्वरूपतयान्यानुमीयमानविलक्षणः स्थायित्वेन संभाव्यमानो रत्यादिर्भावो नटेऽत्यन्ताविद्यमानोऽपि सामाजिकजनतास्वाद्यमानो मुख्यरामादिगतस्थाय्यनुकरणरूपोऽनुकरणरूपत्वादेव च नामान्तरेण व्यपदिष्टो रसः। 'सेयं ममाङ्गेषु सुधारसच्छटा सुपूरकर्पूरशलाकिका दृशोः। मनोरथश्रीर्मनसः शरीरिणी प्राणेश्वरी लोचनगोचरं गता॥' 'दैवादहमद्य तया चपलायतनेत्रया वियुक्तश्च। अविरलविलोलजलदः कालः समुपागतश्चायम्॥' इत्यादौ हि विभावाः काव्यबलादनुसंधेयाः, अनुभावाः शिक्षातः, व्यभिचारिणः कृत्रिमनिजानुभावार्जनबलात्। स्थायी तु काव्यबलादपि नानुसंधेयः॥ 'रतिः शोकः' इत्यादयो हि शब्दा रत्यादिकमभिधेयीकुर्वन्त्यभिधानत्वेन, न तु वाचिकाभिनयरूपतयावगमयन्ति। न हि वागेव वाचिकमपि तु तया निर्वृत्तमङ्गैरिवाङ्गिकम्। तेन—'विवृद्धात्माप्यगाधोऽपि दुरन्तोऽपि महानपि। वाडवेनेव जलधिः शोकः क्रोधेन पीयते॥' इति। तथा—'[1]शोकेन कृतस्तथा स्थितो येन क्रन्दैः (?)। हृदयस्फुटनभयात्तैरादितुमभ्यर्थ्यते सचिवैः॥' इत्येवमादौ न शोकोऽभिनेयोऽपि त्वभिधेयः। 'भाति पतितो लिखन्त्यास्तस्या बाष्पाम्बुसीकरकणौघः। स्वेदोद्गम इव करतलसंस्पर्शादेष मे वपुषि॥' इत्यनेन तु वाक्येन स्वार्थमभिदधता उदयनगतः सुखात्मा रतिस्थायिभावोऽभिनीयते न तूच्यते। अवगमनाशक्तिर्ह्यवगमनं वाचकत्वादन्या। अत एव स्थायि (दि[2]वसं) (?) पदं सूत्रे भिन्नविभक्तिकमपि मुनिना नोपात्तम्। तेन रतिरनुक्रियमाणः शृङ्गार इति। अर्थक्रियापि मिथ्याज्ञानादृष्टा। यथोच्यते—'मणिप्रदीपप्रभयोर्मणिबुद्ध्याभिधावतोः। मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियां प्रति॥' इति। न चात्र नर्तक एव सुखीति प्रतिपत्तिः, नाप्ययमेव राम इति, न चाप्ययं न सुखीति, नापि रामः स्याद्वा न वायमिति, न चापि तत्सदृश इति। किं तु सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिभ्यो विलक्षणा चित्रतुरगादिन्यायेन यः सुखी रामः असावयमिति प्रतीतिरस्तीति॥ यदाह—'प्रतिभाति न संदेहो न तत्त्वं न विपर्ययः। धीरसावयमित्यस्ति नासावेवायमित्यपि॥ विरुद्धबुद्ध्यसंभेदादविवेचितविप्लवः। युक्त्या पर्यनुयुज्येत स्फुरन्ननुभवः कया॥' इति, तदिदमप्यन्तस्तत्त्वशून्यं विमर्दक्षममिति भट्टतोतः। तथा हि—अनुकरणरूपो रस इति यदुच्यते तत्किं सामाजिकप्रतीत्यभिप्रायेण, उत

१. पूर्वार्धे त्रुटितं प्रतीयते. २. प्रमादपतितं भवेत्.

नटाभिप्रायेण, किं वा वस्तुवृत्तविवेकव्याख्यातृबुद्धिसंवलनेन । यथाहुर्व्याख्यातारः खल्वेवं विवेचयन्तीति । अथ भरतमुनिवचनानुसारेण तत्राद्यः पक्षोऽसंगतः । किंचिद्धि प्रमाणेनोपलब्धं तदनुकरणमिति शक्यं वक्तुम् । यथा—एवमसौ सुरां पिबतीति सुरापानानुकरणत्वेन पयःपानं प्रत्यक्षावलोकितं प्रतिभाति । इह च नटगतं किं तदुपलब्धं स इत्यनुकरणतया भातीति चिन्त्यम् । तच्छरीरं तन्निष्ठं प्रतिशीर्षकादिरोमाञ्चगद्गदिकादिभुजाक्षेपचलनप्रभृतिभ्रूक्षेपकटाक्षादिकं च न रतेश्चित्तवृत्तिरूपाया अनुकारत्वेन कस्यचित्प्रतिभाति । जडत्वेन भिन्नेन्द्रियग्राह्यत्वेन भिन्नाधिकरणत्वेन ततोऽतिवैलक्षण्यात् । मुख्यावलोकने च तदनुकरणप्रतिभासो न च रामरतिमुपलब्धपूर्विणः केचित् ॥ एतेन रामानुकारी नट इत्यपि निरस्तः प्रवादः ॥ अथ नटगता चित्तवृत्तिरेव प्रतिपन्ना सती रत्यनुकारः शृङ्गार इत्युच्यते । तत्रापि किमात्मकत्वेन सा प्रतीयते इति चिन्त्यम् ॥ ननु प्रमदादिभिः कारणैः कटाक्षादिभिः कार्यैर्धृत्यादिभिश्च सहचारिभिर्लिङ्गभूतैर्या लौकिकी कार्यरूपा कारणरूपा सहचारिरूपा च चित्तवृत्तिः प्रतीतियोग्या तदात्मकत्वेन सा नटचित्तवृत्तिः प्रतिभाति । तर्हि रत्यादिकारणैव सा प्रतिपन्नेति दूरे रत्यनुकरणतावाचोयुक्तिः ॥ ननु ते विभावादयोऽनुकार्ये पारमार्थिका इह त्वनुकर्तरि न तथेति विशेषः । अस्त्वेवम्, किं तु ते विभावादयोऽनन्तकारणानन्तकार्यानन्तसहचररूपा अपि काव्यशिक्षादिबलोपकल्पिताः कृत्रिमाः सन्तः किं कृत्रिमत्वेन सामाजिकैर्गृह्यन्ते, न वा । यदि गृह्यन्ते, तदा तैः कथं रतेरवगतिः ॥ नन्वत एव प्रतीयमानं रत्यनुकरणं मुग्धबुद्धेः कारणान्तरप्रभवे हि कार्ये सुशिक्षितेन तथा ज्ञाते वस्त्वन्तरस्यानुमानं तावद्युक्तम् । असुशिक्षितेन तु तस्यैव प्रसिद्धस्य कारणस्य यथा वृश्चिकविशेषाद्गोमयस्यैवानुमानं वृश्चिकस्यैव वा तत्परं मिथ्याज्ञानम् । प्रसिद्धा इति लक्षणात्कारणा इत्यनुकरणं नाम कारणान्तरं तत्प्रभवाश्चेदनुभावाः स्युः । तथैव च विशेषभेदा यदि ज्ञायेरंस्तदा रत्यनुकरणलक्षणस्य वस्त्वन्तरस्यानुमानं समञ्जसं स्यात् । न चैवं तत्कथमिव रत्यनुकरणप्रतीतिः । अविशेषविदा च तथाविधानुभावदर्शने रतिरेवानुमीयते तच्च मिथ्याज्ञानमेवेति । यत्रापि लिङ्गज्ञानं मिथ्या तत्रापि तदाभासानुमानमयुक्तम्[2] । न हि बाष्पधूमत्वेन ज्ञानादग्न्यनुकारानुमानं तदनुकारत्वेन प्रतिभासमानादपि लिङ्गान्न तदनुकारानुमानं युक्तं, धूमानुकारत्वेन हि ज्ञायमानान्नीहारान्नाग्न्यनुकारजपापुञ्जप्रतीतिर्दृष्टा ॥

१. 'सीर्पका' इत्यादर्शः. २. 'भासादनु' स्यात्.

नन्वक्रुद्धोऽपि नटः क्रुद्ध इव भाति। सत्यम्, क्रुद्धेन सदृशः, सादृश्यं च भ्रुकुट्यादिभिर्गौरिव गवयेन मुखादिभिरिति नैतावतानुकारः कश्चित्। न चापि सामाजिकानां सादृश्यमतिरस्ति। सामाजिकानां च न भावशून्या नर्तके प्रतिपत्तिरित्युच्यते। अथ च तदनुकारप्रतिभास इति रिक्ता वाचोयुक्तिः। यच्चोक्तं रामोऽयमित्यस्ति प्रतिपत्तिः, तदपि यदि तदात्वे निश्चितं तदुत्तरकालभाविबाधकवैधुर्याभावे कथं न तत्त्वज्ञानं स्यात्। बाधकसद्भावे वा कथं न मिथ्याज्ञानम्। वास्तवेन च वृत्तेन बाधकानुदयेऽपि मिथ्याज्ञानमेव स्यात्। तेन विरुद्धबुद्ध्यसंभेदादित्यसत्। नर्तकान्तरेऽपि रामोऽयमिति प्रतिपत्तिरस्ति। ततश्च रामत्वं सामान्यरूपमित्यायातम्॥ यच्चोच्यते—विभावाः काव्यादनुसंधीयन्ते। तदपि न विद्मः। न हि ममेयं सीता काचिदिति स्वात्मीयत्वेन प्रतिपत्तिर्नटस्य॥ अथ सामाजिकस्य तथा प्रतीतियोग्याः क्रियन्ते इत्येतावदेवानुसंधानमुच्यते, तर्हि स्थायिनि सुतरामनुसंधानं स्यात्। तस्यैव हि मुख्यत्वेन अस्मिन्नयमिति सामाजिकानां प्रतिपत्तिः॥ तस्मात्सामाजिकप्रतीत्यनुसारेण स्थाय्यनुकरणं रस इत्यसत्। न चापि नटस्येत्थं प्रतिपत्तिः रामं तच्चित्तवृत्तिं वा अनुकरोमीति। सदृशकरणं हि तावदनुकरणमनुपलब्धप्रकृतिना न शक्यं कर्तुम्॥ अथ पश्चात्करणमनुकरणम्, तल्लोकेऽप्यनुकरणात्मतातिप्रसक्ता॥ अथ न नियतस्य कस्यचिदनुकारोऽपि तच्च सप्रकृतेः शोकमनुकरोमीति। तत्रापि कस्योन्तमर्हि(?)केनेति चिन्त्यम्। न तावच्छोकेन, तस्य तदभावात्। न चाश्रुपातादिना शोकस्यानुकारः, तद्वैलक्षण्यादित्युक्तम्। इयत्तु स्यात् उत्तमप्रकृतेर्ये शोकानुभावास्ताननुकरोमीति। तत्रापि कस्योत्तमप्रकृतेः यस्य कस्यचिदिति चेत्, सोऽपि विशिष्टतां विना कथं बुद्धावारोपयितुं शक्यः। य एवं रोदितीति चेत्, स्वात्मापि मध्ये नटस्यानुप्रविष्ट इति गलितोऽनुकार्यानुकर्तृभावः। किं च—नटः शिक्षावशात्स्वविभावस्मरणाच्चित्तवृत्तिसाधारणीभावेन हृदयसंवादात्केवलाननुभावान्दर्शयन्काव्यमुचितकाकुप्रभृत्युपस्कारेण पठंश्चेष्टत इत्येतावन्मात्रस्य प्रतीतेर्न त्वनुकारं वेदयते। कान्तवेषानुकारवद्धि न रामचेष्टितस्यानुकारः। नापि वस्तुवृत्तानुसारेण तदनुकारणत्वम् असंवेद्यमात्रस्य वस्तुवृत्तत्वानुपपत्तेः। न च मुनिवचनमेवंविधमस्ति क्वचित्स्थाय्यनुकरणं रस इति॥ यच्चोच्यते—वर्णकैर्हरितालादिभिः संयुज्यमान एव गौरित्यादि, तत्र यद्यभिव्यज्यमान इत्यर्थोऽभिप्रेतः। तदसत्। नहि सिन्दूरादिभिः पारमार्थिको

गौरभिव्यज्यते, प्रदीपादिभिरिव । किं तु तत्सदृशः समूहविशेषो निर्वर्त्यते । त एव हि सिन्दूरादयो गवावयवसंनिवेशसदृशेन संनिवेशविशेषेणावस्थिता गोसदृगिति प्रतिभासस्य विषयो नैवं विभावादिसमूहो रतिसदृशताप्रतिग्राह्यः । तस्माद्भावानुकरणं रस इत्यसत् ॥ येन त्वभ्यधायि सुखदुःखजननशक्तियुक्ता विषयसामग्री बाह्यैव सांख्यदृशा सुखदुःखस्वभावा रसः । तस्यां सामग्र्यां दलस्थानीया विभावाः संस्कारका अनुभावव्यभिचारिणः, स्थायिनस्तु तत्सामग्रीजन्या आन्तराः सुखदुःखस्वभावा इति । तेन स्थायिभावान् रसत्वमुपनेष्याम इत्यादावुपचारमङ्गीकुर्वता ग्रन्थविरोधं स्वयमेव बुध्यमानेन दूषणाविष्करणमौखर्यात्प्रामाणिकजनः परिरक्षित इति किमस्योच्यते । यत्त्वन्यत्तत्प्रतीतिवैषम्यप्रसङ्गादि तत्कियदत्रोच्यताम् ॥ **भट्टनायकस्त्वाह**—'रसो न प्रतीयते, नोत्पद्यते, नाभिव्यज्यते । स्वगतत्वेन हि प्रतीतौ करुणे दुःखित्वं स्यात् । न च सा प्रतीतिर्युक्ता सीतादेरविभावत्वात् । स्वकान्तास्मृत्यसंवेदनात् । देवतादौ साधारणीकरणायोग्यत्वात् । समुद्रोल्लङ्घनादेरसाधारण्यात् । न च तत्त्वतो रामस्य स्मृतिरनुपलब्धत्वात् । न च शब्दानुमानादिभ्यस्तत्प्रतीतौ ताटस्थ्यमेव भवेत्तत्प्रतीतिरनुभवस्मृत्यादिरूपा रसस्य युक्ता ॥ उत्पत्तावपि तुल्यमेतत् दूषणम् । शक्तिरूपत्वेन पूर्वं स्थितस्य पश्चादभिव्यक्तौ विषयार्जनतारतम्यापत्तिः । स्वगतपरगतत्वादि च पूर्ववद्विकल्प्यम् । तस्मात्काव्ये दोषाभावगुणालंकारमयत्वलक्षणेन, नाट्ये चतुर्विधाभिनयरूपेण निबिडनिजमोहसंकटतानिवारणकारणविभावादिसाधारणीकरणात्मनाभिधातो द्वितीयेनांशेन भावकत्वव्यापारेण भाव्यमानो रसोऽनुभवस्मृत्यादिविलक्षणेन रजस्तमोनुवेधवैचित्र्यबलात् हृदि विस्तरविकासात्मना सत्त्वोद्रेकप्रकाशानन्दमयनिजसंविद्विश्रान्तिविलक्षणेन परब्रह्मास्वादसविधेन भोगेन परं भुज्यते' इति ॥ यत्स एवाह—'अभिधा भावना चान्या तद्भोगीकृतमेव च । अभिधाधामतां याते शब्दार्थालंकृती ततः ॥ भावनाभाव्य एषोऽपि शृङ्गारादिगणो मतः । तद्भोगीकृतरूपेण व्याप्यते सिद्धिमान्नरः ॥' इति ॥ तत्र पूर्वपक्षोऽयं भट्टलोल्लटपक्षादभ्युपगत इति । तद्दूषणमनुत्थानोपहतमेव । प्रतीत्यादिव्यतिरिक्तश्च संसारे को भोग इति न विद्मः । रसेनेति चेत् । सापि प्रतिपत्तिरेव । केवलमुपायवैलक्षण्यान्नामान्तरं प्रतिपद्यतां दर्शनानुमितिश्रुत्युपमितिप्रतिभानादिनामान्तरवत् । निष्पादनाभिव्यक्तिद्वयानभ्युपगमे च तिस्रो वा सद्वा रस इति

---

१. 'मौषर्यां' इत्यादर्शः.

न तृतीया गतिः स्यात्। न चाप्रतीतं वस्त्वस्ति तद्व्यवहारयोग्यम् ॥ अथोच्यते— प्रतीतिरस्य भोगीकरणम्। तच्च रत्यादिस्वरूपं तदस्तु तथापि न तावन्मात्रम्। यावन्तो हि रसास्तावन्त्य एव रसात्मानः प्रतीतयो भोगीकरणस्वभावाः सत्त्वादिगुणानां चाङ्गाङ्गिवैचित्र्यमनन्तकल्प्यमिति का त्रित्वेनेयत्ता। 'भावनाभाव्य एषोऽपि शृङ्गारादिगणो हि यत्।' इति तु यत् 'काव्येन भाव्यन्ते रसाः' इत्युच्यते, तत्र विभावादिजनितचर्वणात्मकास्वादरूपप्रत्ययगोचरतापादनमेव यदि भवेद्भावनं तदभ्युपगम्यत एव ॥ यत्तूक्तम्—'संसर्गादि यथा शास्त्र एकत्वात्तल्ययोगतः। वाक्यार्थस्तद्वदेवात्र शृङ्गारादी रसो मतः ॥' इति, तदस्माकमभिमतमेव। तर्हि उच्यताम् परिशुद्धतत्त्व उक्तमेव मुनिना नत्वपूर्वं किंचित्। तथा ह्याह—'काव्यार्थान् भावयन्तीति भावाः'। अस्यार्थः—पदार्थवाक्यार्थौ रसेष्वेव पर्यवस्यत इत्यसाधारण्यात्प्राधान्याच्च काव्यस्यार्था रसाः। अर्थ्यन्ते प्राधान्येनेत्यर्थाः, न त्वर्थशब्दोऽभिधेयवाची। स्वशब्दानभिधेयत्वं हि रसादीनां दर्शितमेव। एवं काव्यार्था रसाः तान् कुर्वते ये स्थायिव्यभिचारिणस्ते भावाः स्थायिव्यभिचारिकलापेनैव ह्यास्वाद्योऽलौकिकोऽर्थो निर्वर्त्यते। पूर्वं हि स्थाय्यादिकमवगच्छति। ततः सर्वसाधारणतया आस्वादयति। तेन पूर्वागमगोचरीभूतः सन् स्थाय्यादिरुत्तरभूमिकाभागिन आस्वाद्यस्य रसस्य भावको निष्पादक उच्यते। तस्मात्काव्यार्थो रस इति। तथा हि— 'आरोग्यमाप्तवान् शश्वत्स्तुत्वा देवमहर्पतिम्। स्यादर्थावगतिः पूर्वमित्यादिवचने यथा ॥ ततश्चोपात्तकालादिन्यक्कारेणोपजायते। प्रतिपत्तुर्मनस्येवं प्रतिपत्तिर्न संशयः ॥ यः कोऽपि भास्करं स्तौति स सर्वोऽप्यगदो भवेत्। तस्मादहमपि स्तौमि रोगनिर्मुक्तये रविम् ॥' इति। एवं काव्यात्मकादपि शब्दात्सहृदयस्याधिकास्ति प्रतिपत्तिर्न संशयः। तस्य च 'ग्रीवाभङ्गाभिरामम्—' इत्यादिवाक्येभ्यो वाक्यार्थप्रतिपत्तेरनन्तरं मानसी साक्षात्कारात्मिका अपहस्तिततद्वाक्योपात्तकालादिविभागा तावत्प्रतीतिरुपजायते। तस्यां च यो मृतपोतकादिर्भाति तस्य विशेषरूपत्वाभावाद्भीत इति। त्रासकस्यापारमार्थिकत्वाद्भयमेव परं देशकालाद्यनालिङ्गितं तत एव भीतोऽहम्। भीतोऽयं शत्रुर्वयस्यो मध्यस्थो वेत्यादिप्रत्ययेभ्यो दुःखसुखादिकृतहान्यादिबुद्ध्यन्तरोदयनियमवत्तया विघ्नबहुलेभ्यो विलक्षणनिर्विघ्नप्रतीतिग्राह्यं साक्षादिव हृदये निवेशमानं चक्षुषोरुपरिवर्तमानं भयानको रसः। तथाविधे हि भये नात्मा तिरस्कृतो निर्विशेषत उल्लिखितः। एवं परोऽपि। तत एव च न परिमितमेव साधारण्यम्। अपि तु विततम्। व्याप्तिग्रह इव

धूमाग्न्युभयरूपयोरेव वा। तदत्र साक्षात्कारायमाणत्वपरिपोषिका नटादिसामग्री। यस्यां वस्तुमतां काव्यार्पितानां च देशकालप्रमात्रादीनां नियमहेतूनामन्योन्यसंबन्धबलादत्यन्तमपसरणे स एव साधारणीभावः सुतरां पुष्यति। अत एव सामाजिकानामेकघनतैव प्रतिपत्तेः सुतरां रसपोषाय सर्वेषामनादिवासनाचित्रीकृतचेतसां वासनासंवादात्। सा चाविघ्ना संविच्चमत्कारस्तज्जोऽपि कम्पपुलकोल्लुकसनादिर्विकारश्चमत्कारो यथा—'अज्ज विहरी चमक्कइ कहकह वि न मंदरेण कलिआइं। चंदकलाकंदलसच्छहाइं लच्छीइं अंगाइं ॥' अद्भुतभोगात्मस्पन्दावेशरूपो हि चमत्कारः। स च साक्षात्कारस्वभावो मानसाध्यवसायो वा संकल्पो वा स्मृतिर्वा तथात्वेन स्फुरन्त्यस्तु। यदाह—'रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्पर्युत्सुकीभवति यत्सुखितोऽपि जन्तुः। तच्चेतसा स्मरति नूनमबोधपूर्वं भावस्थिरा[1]नि जननान्तरसौहृदानि ॥' इत्यादिः। अत्र हि स्मरतीति या स्मृतिरुपदर्शिता सा न तार्किकप्रसिद्धा, पूर्वमेतस्यार्थस्याननुभूतत्वात्। अपि तु प्रतिभानापरपर्यायसाक्षात्कारस्वभावेयमिति। सर्वस्य तावदेषास्ति प्रतीतिरास्वादात्मा यस्यां रतिरेव भाति तत एव विशेषान्तरानुपहितत्वात्सा रसनीया सती लौकिकी न मिथ्या नानिर्वाच्या, न लौकिकतुल्या, न तदारोपादिरूपा। एषैव चोपचयावस्थास्तु देशाद्यनियन्त्रणात्। अनुकारोऽप्यस्त्वनुगामितया करणात्। विषयसामग्र्यपि भवतु विज्ञानवादावलम्बनात्। सर्वथा रसनात्मकवीतविघ्नप्रतीतिग्राह्यो भाव एव रसः। तत्र विघ्नापसारका विभावप्रभृतयः। तथा हि। लोके सकलविघ्नविनिर्मुक्ता संवित्तिरेव चमत्कारनिर्वेशरसनास्वादनभोगसमापत्तिलयविश्रान्त्यादिशब्दैरभिधीयते। विघ्नाश्चास्यां सप्त संभावनाविरहरूपा प्रतिपत्तावयोग्यता। स्वगतपरगतत्वनियमेन देशविशेषावेशो निजसुखादिविवशीभावः। प्रतीत्युपायवैकल्यस्फुटत्वाभावोऽप्रधानता। संशययोगश्च। तथा हि—संवेद्यमसंभावयमानः संवेद्ये संविदं निवेशयितुमेव न शक्तोऽस्ति। का तत्र विश्रान्तिरिति प्रथमो विघ्नः। तदपसारणे हृदयसंवादो लोकसामान्यवस्तुविषयः। अलोकसामान्येषु तु चेष्टितेषु अखण्डितप्रसिद्धिजनितगाढरूढप्रत्ययप्रसरकारी प्रख्यातरामादिनामधेयपरिग्रहः। अत एव निःसामान्योत्कर्षोपदेशव्युत्पत्तिप्रयोजने नाटकादौ प्रख्यातवस्तुविषयत्वादि नियमेन निरूप्यते। न तु प्रहसनादितिवत्। स्वैकगतानां च सुखदुःखसंविदामास्वादे यथासंभवं तदपगमभीरुतया वा तत्प-

---

१. 'स्थिराणि' इति प्रसिद्धपाठः.

रिरक्षाव्यग्रतया वा तत्सदृशो जिजीषया वा तज्जिहासया वा तत्प्रतिष्ठापयिषया वा तद्गोपनेच्छया वा प्रकारान्तरेण वा संवेदनान्तरसमुद्गम एव परमो विघ्नः । परगतत्वनियमभा[1]षजा(?)मपि सुखदुःखानां संवेदने नियमेन स्वात्मनि सुखदुःखमोहमाध्यस्थ्यादिसंविदन्तरोद्गमनसंभावनादवश्यभावी विघ्नः । तदपसारेण कार्यो नातिप्रसङ्गोऽत्र पूर्वरङ्गविधिं प्रतीति पूर्वरङ्गानिगूहनेन 'नटी विदूषको वापी'तिलक्षितप्रस्तावनालोकनेन च यो नटरूपताधिगमस्तत्पुरःसरप्रतिशीर्षकादिना तत्प्रच्छादनप्रकारोऽभ्युपायः । अलौकिकभाषादिभेदलास्याङ्गरङ्गपीठमण्डपगतकक्षापरिग्रहनाट्यध[2]र्मासहितः । तस्मिन् हि सति अस्यैवात्रैव एतर्ह्येव च सुखं दुःखं वेति न भवति । प्रतीतिस्वरूपस्य निह्नवाद्रूपान्तरस्य चारोपितस्य प्रतिभासविश्रान्तिवैकल्येन स्वरूपे विश्रान्त्यभावात् । सत्येतदीयरूपनिह्नवमात्र एव पर्यवसानात् इत्येष मुनिना साधारणीभावरसचर्वणोपयोगित्वेन परिकरबन्धः समाश्रितः । तथा निजसुखादिविवशीभूतश्च कथं वस्त्वन्तरे संमदं विश्रमयेदिति तत्प्र[3]त्यहव्यपोहनाय प्रतिपदार्थनिष्ठैः साधारणो महिम्ना सकलभोग्यत्वसहिष्णुभिः शब्दादिविषयमयैरातोद्यग[4]ने विचित्रमण्डपविदग्धगणिकादिभिरुपरञ्जनं समाभितम् । येनाहृदयोऽपि हृदयवैमल्यप्राप्त्या सहृदयीक्रियते । किं च प्रतीत्युपायानामभावे कथं प्रतीतिभावः । अस्फुटप्रतीतिकारिशब्दलक्षणसंभवेऽपि न प्रतीतिर्विश्राम्यति स्फुटप्रतीतिरू[5]पः प्रत्यक्षोचितप्रत्ययसाकाङ्क्षत्वात् । यथाहुः—'सर्वा चेयं प्रमितिः प्रत्यक्षपरा' इति । स्वसाक्षात्कृते आगमानुमानशतैरप्यनन्यथाभावस्य स्वसंवेदनात् । अलातचक्रादौ साक्षात्कारान्तरेणैव बलवता तत्प्रमित्यपसारणादिति लौकिकस्तावदयं क्रमः । तस्मात्तदुभयविघ्नविघातेऽभिनयालोकधर्मिवृत्तिप्रवृत्त्युपस्कृताः समभिषिच्यन्ते । अभिनयनं हि शब्दलक्षणलिङ्गव्यापारसदृशमेव प्रत्यक्षव्यापारकल्पमिति । अप्रधाने च वस्तुनि संवित्कस्य विश्राम्यति । तस्यैव प्रत्ययस्य प्रधानान्तरं प्रत्यनुधावतः स्वात्मन्यविश्रान्तत्वात् । अतोऽप्रधानत्वं जडे विभावानुभाववर्गे व्यभिचारिनिचये च संविदात्मकेऽपि नियमेन नान्यसुखप्रेक्षिणि संभवतीति तदतिरिक्तः स्थाय्येव चर्वणापात्रम् । तत्र पुरुषार्थनिष्ठाः काश्चित्संविद इति प्रधानम् । तद्यथा—रतिः कामतदनुषङ्गिधर्मार्थनिष्ठा, क्रोधस्तत्प्रधानेष्वर्थनिष्ठः कामधर्मपर्यवसितोऽप्युत्साहः समस्तधर्मादिपर्यवसितः

---

१. 'भावजाना' स्यात्. २. 'धर्मै' स्यात्. ३. 'प्रत्यूह' स्यात्. ४. 'घने' स्यात्. ५. 'रूपप्रत्य' स्यात्.

यथा—

'लाक्षागृहानलविषान्नसभाप्रवेशैः
प्राणेषु चित्तनिचयेषु च नः प्रहृत्य ।
आकृष्टपाण्डववधूपरिधानकेशाः
स्वस्था भवन्ति मयि जीवति धार्तराष्ट्राः ॥'

**निर्घातादेस्त्रासोऽङ्गसंक्षेपादिकृत् ।**

निर्घातगर्जितभूपर्वतकम्पशिलोल्काशनिविद्युत्पातरक्षःस्थूलप्रभूतकुष्ठादिभ्यश्चेतश्चमत्कृतिरूपस्त्रासो भयात्पूर्वापरविचारवतो भिन्न एव । सोऽङ्गसंक्षेपस्तम्भरोमोद्गमगद्गदप्रलयोत्कम्पनिःस्पन्दवीक्षितैर्वर्ण्यः ।

यथा—

'परिस्फुरन्मीनविघट्टितोरवः सुराङ्गनास्त्रासविलोलदृष्टयः ।
उपाययुः कम्पितपाणिपल्लवाः सखीजनस्यापि विलोकनीयताम् ॥'

**ग्रहादेरपस्मारः कम्पादिकृत् ।**

ग्रहभूतदेवयक्षपिशाचब्रह्मराक्षसशून्यारण्यश्मशानसेवनोच्छिष्टगमनधातुवैषम्यादेरावेशरूपोऽपस्मारः । तं कम्पितस्फुरितस्विन्नधावितश्वसितभूमिपतनारावमुखफेनादिभिर्वर्णयेत् । अयं च प्राय आभासेष्वेव शोभते ।

यथा—

'आश्लिष्टभूमिं रसितारमुच्चैर्लोलद्भुजाकारबृहत्तरङ्गम् ।
फेनायमानं पतिमापगानामसावपस्मारिणमाशशङ्के ॥'

**रोगादेर्निर्वेदो रुदितादिकृत् ।**

रोगाधिक्षेपताडनदारिद्र्येष्टवियोगावमानतत्त्वज्ञानादिभ्यः स्वावमानारूपो निर्वेदः । स रुदितश्वसितानुपादेयतादिभिर्वर्ण्यः ।

---

**तत्त्वज्ञानादिभ्य इति ।** चिरकालविभ्रमविप्रलब्धस्य उपादेयत्वनिवृत्तये यत्स-

यथा—

'किं करोमि क्व गच्छामि कमुपैमि दुरात्मना।
दुर्भरेणोदरेणाहं प्राणैरपि विडम्बितः॥'

**उत्पातादिभ्य आवेगो विस्मयादिकृत्।**

उत्पातवातवर्षाग्निगर्जाप्रियाप्रियश्रवणव्यसनादिभ्यः संभ्रम **आवेगः**। तं विस्मयावगुण्ठनच्छैन्नश्रयणधूमान्ध्यत्वरितापसर्पणपुलकविलापसंनहनादिभिर्यथासंख्यं वर्णयेत्।

तत्रोत्पातावेगो यथा—

किं किं सिंहस्ततः किं नरसदृशवपुर्देव चित्रं गृहीतो
नैवेदृक्कोऽपि जीवो द्रुतमुपनिपतन्पश्य संप्राप्त एव।
शस्त्रं शस्त्रं न शस्त्री त्वरितमहह हा कर्कशत्वं नखाना-
मित्थं दैत्याधिनाथो निजनखकुलिशैर्येन भिन्नः स पायात्॥'

---

म्यग्ज्ञानं तन्निर्वेदं जनयति, न त्वात्मस्वभावः, तस्य शान्तस्थायित्वेनोक्तत्वात्। यथा—'वृथा दुग्धोऽनड्वान्स्तनभरनता गौरिति चिरं परिष्वक्तः षण्ढो युवतिरिति लावण्यरहितः। कृता वैडूर्याशा विकचकिरणे काचशकले मयामूढेन त्वां कृपणमगुणज्ञं प्रणमता॥' इति। अयं च निर्वेदः स्वयं पुरुषार्थसिद्धये वोत्साहस्त्वादिवदत्यन्तानुरञ्जनाय वा हासविस्मयादिवन्न प्रभवतीत्यन्यमुखप्रेक्षितत्वाद्व्यभिचार्येवेति॥ **उत्पातवातेति**। आदिशब्दः प्रत्येकमभिसंबध्यते। ततश्चोत्पातादेर्वातादेर्वर्षादेरग्न्यादेर्गजादेः प्रियश्रवणादेरप्रियश्रवणादेर्व्यसनादेश्च विभावादित्यर्थः। एवं विस्मयादिना अवगुणादिच्छन्नश्रवणादिना धूमाद्यादिना त्वरितापसर्पणादिना पुलकादिना विलापादिना संहननादिना चानुभावेनेति प्रतिपत्तव्यम्॥ तत्र उत्पा-

---

१ 'कुञ्जरोद्भ्रमण' इति भरतसंवादात् 'गजो(द्भ्रमण)' इति भवेत्. टीकायां तु 'गजादेः' इत्थं व्याख्यातं तस्माद् 'गज' इत्येव स्यात्. २. 'छत्राश्रयण' इति भरते पाठात् 'छत्राश्रयण' इति भवेत्.

---

१ 'अवगुण्ठनादिना छत्राश्रयणा' स्यात्.

एवं वातावेगादिषूदाहार्यम्।

**संदेहादेर्वितर्कः शिरःकम्पादिकृत्।**

संदेहविमर्शविप्रतिपत्त्यादिभ्यः संभावनीयप्रत्ययो **वितर्कः**। स शिरःकम्पभ्रूक्षेपसंप्रधारणकार्यकलापमुहुर्ग्रहणमोक्षणादिभिर्वर्ण्यः।

यथा—

'अनङ्गः पञ्चभिः पौष्पैर्विश्वं व्यजयतेषुभिः।
इत्यसंभाव्यमथ वा विचित्रा वस्तुशक्तयः॥'

---

तावेगः 'किं किं सिंहः' इत्यादिना निदर्शितः॥ वातावेगो यथा—'वाताहतं वसनमाकुलमुत्तरीयम्—' इत्यादि। वर्षावेगो यथा—'देवे वर्षत्यशनपचनव्यापृता वह्निहेतो गेहाद्गेहं फलकनिचितैः सेतुभिः पङ्कभीताः। [1]नीव्रप्रान्तानविरलजलान्पाणिभिस्ताडयित्वा सूर्पच्छायास्थगितशिरसो योषितः संचरन्ति॥' अग्न्यावेगो यथा—'क्षिप्तो हस्तावलग्नः—' इत्यादि। गजावेगो यथा—'स च्छिन्नबन्धद्रुतयुग्यशून्यं भग्नाक्षपर्यस्तरथं क्षणेन। रामापरित्राणविहस्तबोधं सेनानिवेशं तुमुलं चकार॥' प्रियदर्शनादावेगो यथा—'एह्येहि वत्स रघुनन्दन पूर्णचन्द्र चुम्बामि मूर्धनि चिरं च परिष्वजे त्वाम्। आरोप्य वा हृदि दिशामि शमुद्वहामि वन्देऽथ वा चरणपुष्करकद्वयं ते॥' अप्रियदर्शनश्रवणावेगो यथा उन्मत्तराघवे—'चित्रमायः—(ससंभ्रमम्।) भगवन् कुलपते रामभद्र, परित्रायतां परित्रायताम्। (इत्याकुलतां नाटयति।)' इत्यादि। पुनः 'चित्रमायः—मृगरूपं परित्यज्य विधाय विकटं वपुः। नीयते रक्षसा तेन लक्ष्मणो युधि संक्षयम्॥ रामः—वत्सस्याभयवारिधेः प्रतिभयं मन्ये कथं राक्षसात्त्रस्तश्चैष मुनिर्विरौति मनसश्चास्त्येव मे संभ्रमः। मा हासीर्जनकात्मजामिति मुहुः स्नेहाद्गुरुर्याचते न स्थातुं न च गन्तुमाकुलमतेर्मूढस्य मे निश्चयः॥' व्यसनं राजविद्रवादि, तद्धेतुरावेगो यथा—'आगच्छागच्छ शस्त्रं कुरु, वरतुरगं संनिधेहि द्रुतं मे, खड्गः क्वासौ, कृपाणीमुपनय, धनुषा किं किमङ्ग प्रविष्टे। संरम्भोन्निद्रितानां क्षितिभृति गहनेऽन्योन्यमेव प्रतीच्छन्नादः स्वप्नाभिदृष्टे त्वयि चकितदृशां विद्विषामाविरासीत्॥' **संदेहेति**। संदेहः किंस्विदित्युभयावलम्बी प्रत्ययः संशयरूपः। विमर्शो

---

१ 'नीवृत्प्रा' स्यात्. २. 'द्विड्वैरादि' स्यात्.

**परोत्कर्षादेरसूयावज्ञादिकृत् ।**

परस्य सौभाग्यैश्वर्यविद्यादिभिरुत्कर्षादादिशब्दादपराधमुहुर्द्वेषादिभ्यश्चाक्षमारूपासूया । तामवज्ञाभ्रुकुटीक्रोधसेर्ष्योक्त्यालोकितदोषोपवर्णनादिभिर्वर्णयेत् ।

यथा—

'वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु हुं वर्तते
सुन्दस्त्रीदमनेऽप्यखण्डयशसो लोके महान्तो हि ते ।
यानि त्रीणि कुतोमुखान्यपि पदान्यासन्खरायोधने
यद्वा कौशलमिन्द्रसूनुनिधने तत्राप्यभिज्ञो जनः ॥'

**व्याध्यभिघाताभ्यां मृतिर्हिक्काकार्श्यादिकृत् ।**

व्याधिर्ज्वरादिः प्रतीतः, सर्पविषगजादिसंभवोऽभिघातस्ताभ्यां मृतेः प्रागवस्था **मृतिः** । साक्षान्मृतावनुभवाभावात् । तत्र व्याधिजां मृतिं हिक्काश्वासाङ्गभङ्गाक्षिनिमीलनाद्यैः, अभिघातजां तु कार्श्यवेपथुदाहहिक्काफेनाङ्गभङ्गजडतामरणादिभिर्वर्णयेत् ।

---

विशेषप्रतीत्याकाङ्क्षात्मिका इच्छा । प्रमाणेन पक्षाभावप्रतीतिमात्रं विप्रतिपत्तिरित्याहुः । एभ्योऽन्तरं भवितव्यताप्रत्ययस्वभावः एकतरपक्षशैथिल्यदायी पक्षान्तरतुल्यकक्षभवोच्चावयतु(?)न्मन्नतामन्यस्य दर्शयंस्तर्कः । स च संशयात्पृथगेव । संदेहेन तत्त्वबुद्ध्याशादिरूपस्य विमर्शादेः स्वीकारेऽपि कविशिक्षार्थं भङ्ग्या निरूपणम् । अन्ये तु—धर्मिणि संदेहो धर्मे तु विमर्शो भ्रान्तिज्ञानं विप्रतिपत्तिरित्याहुः । **प्रागवस्थेति** । म्रियमाणावस्थैव अनेन व्याधिना मे न निवर्तितव्यमित्येवंविधचित्तवृत्तिरूपा ॥ **कार्श्येति** । अष्टौ हि विषवेगाः । यदाह भरतः—'कार्श्यं तु प्रथमे वेगे द्वितीये वेपनं[1] तथा । दाहं तृतीये हिक्कां च चतुर्थे संप्रयोजयेत् ॥ फेनं च पञ्चमे कुर्यात्स्यात्षष्ठे स्कन्धभञ्जनम् । जडतां

---

१. 'वेपथुस्तथा' भरतपुस्तके.

यथा—

'स गतः क्षितिमुष्णशोणितार्द्रां खुरदंष्ट्राग्रनिपातदारिताश्मा ।
असुभिः क्षणमीक्षितेन्द्रसूनुर्विहितामर्षगुरुध्वनिर्निरासे ॥'

शृङ्गारे तु मरणाध्यवसायो मरणादूर्ध्वं झटिति पुनर्योगो वा निबध्यते । अन्यत्र तु स्वेच्छा ।

यथा—

'संप्राप्तेऽवधिवासरे क्षणममुं तद्वर्त्मवातायनं
वारंवारमुपेत्य निःक्रियतया निश्चित्य किंचिच्चिरम् ।
संप्रत्येव निवेद्य केलिकुररीः सास्रं सखीभ्यः शिशो-
र्माधव्या सहकारकेण करुणः पाणिग्रहो निर्मितः ॥'

तथा—

'तीर्थे तोयव्यतिकरभवे जह्नुकन्यासरय्वो-
र्देहत्यागादमरगणनालेख्यमासाद्य सद्यः ।
पूर्वाकाराधिकतररुचा संगतः कान्तयासौ
लीलागारेष्वरमत पुनर्न क्षमाभ्यन्तरेषु ॥'

अथ सात्त्विकानाह—

**स्तम्भस्वेदरोमाञ्चस्वरभेद(स्वर)[1]कम्पवैवर्ण्याश्रुप्रलया अष्टौ सात्त्विकाः ।**

सीदत्यस्मिन्मन इति व्युत्पत्तेः सत्त्वगुणोत्कर्षात्साधुत्वाच्च प्राणात्मकं वस्तु सत्त्वम्, तत्र भवाः सात्त्विकाः । भावा इति वर्तते ॥ ते च

---

सप्तमे कुर्यादष्टमे मरणं तथा ॥' आदिग्रहणात्सहसा भूमिपतनविकम्पनस्फुरणादयो ज्ञेयाः ॥ **प्राणभूमीति** । अयं भावः । रत्यादयश्चित्तवृत्तिविशेषाः

---

१. लेखकप्रमादपतितो भवेत्.

प्राणभूमिप्रसृतरत्यादिसंवेदनवृत्तयो बाह्यजडरूपभौतिकनेत्रजलादिविलक्षणा विभावेन रत्यादिगतेनैवातिचर्वणागोचरेणाहृता अनुभावैश्च गम्यमाना भावा भवन्ति । तथा हि । पृथ्वीभागप्रधाने प्राणे संक्रान्तचित्तवृत्तिगणः स्तंभोविष्टत्वं चेतनत्वम् । जलभागप्रधाने तु बाष्पः । तैज-

---

पूर्वसंविद्रूपाः समुल्लसन्ति । तत आभ्यन्तरं प्राणान्तस्वरूपाध्यासेन कलुषयन्ति । न चैतदसंवेद्यम् । तथा हि क्रोधावेशे अन्तरा ज्वलत्येव पूर्वमुन्मिषति ततः खेदः । अनेनैवाशयेन भट्टबाणेनोक्तम्—'पूर्वं तपो गलति पश्चात्स्वेदसलिलम्' इति । तथा तदवस्थां प्राप्तोऽवहित्थादिना भावो बहिर्विकारपर्यन्ताप्राप्तेः परिरक्ष्यमाणो दृष्टः । यथा—'पिअमुहससङ्कदंसणचलिअं रइसाअरं पिआहिअअम् । गुरुसंकमरुम्भियसेअपमुहपसरं पि हु ण ठाइ ॥' प्रियमुखदर्शनेन रतिविषये सादरं मत्प्रियाहृदयं चलितं गुरुविषये मा संक्रमीदिति । निषिद्धस्वेदप्रभृति बाह्यप्रसरमपि न विश्राम्यति । आन्तरस्वेदादि सात्त्विकक्षोभमयमेवेत्यर्थः । निदर्शनं चात्र प्रतीयमानम् । तथा हि । प्रियं मुखं यस्य तादृशस्य शशाङ्कस्य दर्शने आहृदयमपि चलितो रयी वेगवत्सागरो गुरुणा सेतुना रुद्धाः सेकप्रारम्भकाः प्रसरा यस्य तादृशोऽपि खल्वित्याश्चर्यं न तिष्ठति न निस्तरङ्गीभवति । सागरशब्द उभयलिङ्गः । प्राकृते वा लिङ्गविपर्यासः । तदत्र रतिर्मनोरुपत्वाच्युता बाह्याभौतिकविकारपर्यवसायिनी च न जातेति प्राणभूमावेव विश्रान्ता वर्णिता ॥ **रत्यादिगतेनैवेति** । नेतु[2] विभावान्तरेण, तेषां बाह्यविषयविशेषाभिमुख्यनिरपेक्षत्वादित्यर्थः ॥ ग्लान्यालस्यश्रममूर्च्छादीनां तु यद्यप्यालम्बनविषयशून्यता, तथापि बाह्यहेतुका अतो व्यभिचारिषु गणिताः । अबाह्यहेतुकास्तु स्तम्भादय इति सात्त्विकाः ॥ **स्तम्भो विष्टम्भचेतनत्वमिति** । मनसा हर्षादिवशेनानिन्द्रियप्रदेशचारिणां विकल्पपर्यन्तागमनरहिताविकल्पकवृत्तिमात्रनिष्ठानामि-

---

१. 'स्तम्भो विष्टम्भचेतनत्वम्' इति टीकायाम्.

---

१. 'प्रियमुखशशाङ्कदर्शनचलितं रतिसादरं प्रियाहृदयम् । गुरुसंक्रमरुद्धसेकप्रारम्भप्रसरमपि खलु न तिष्ठति ॥' इति, '–रयिसागरोऽप्याहृदयम् । गुरुसंक्रमरुद्धसेकप्रारम्भकप्रसरोऽपि खलु न तिष्ठति ॥' इति च च्छाया. २. 'न तु' स्यात्.

सस्तु प्राणनैकत्वादुभयथा तीव्रातीव्रत्वेन प्राणानुग्रह इति द्विधा स्वेदो वैवर्ण्यं च । तद्धेतुत्वात् च तथा व्यवहारः । आकाशानुग्रहे गतचेतनत्वं प्रलयः । वायुस्वातन्त्र्ये तु तस्य मन्दमध्योत्कृष्टावेशात्रेधा रोमाञ्चवेपथुस्वरभेदभावेन स्थितिरिति भरतविदः ॥ बाह्यास्तु स्तम्भादयः शरीरधर्मा अनुभावाः । ते चान्तरालिकान् सात्त्विकान् भावान् गमयन्तः परमार्थतो [1]रतिर्निर्वेदादिगमका इति स्थितम् ॥ एवं च नव स्थायिनः, त्रयस्त्रिंशद्व्यभिचारिणः, अष्टौ सात्त्विकाः । इति पञ्चाशद्भावाः ॥

रसभावानभिधाय तदाभासानाह—

**[2]नैरिन्द्रियेषु तिर्यगादिषु चारोपाद्रसभावाभासौ ।**

निरिन्द्रिययोः संभोगारोपणात्संभोगाभासो यथा—

'पर्याप्तपुष्पस्तबकस्तनीभ्यः स्फुरत्प्रवालोष्ठमनोहराभ्यः ।
लतावधूभ्यस्तरवोऽप्यवापुर्विनम्रशाखाभुजबन्धनानि ॥'

---

न्द्रियाणामनधिष्ठानादित्यर्थः । यथा—'तेत्ताणहयच्छायणिव्वललोअणसिहंपउच्छवाद्यम् । आलिरकपइवाणवणिपयपयइचडुलत्तणं पिवि अलिअम् ॥' एवं बाष्पहेतुत्वाद्बाष्पो यथा—'उत्पक्ष्मणोर्नयनयोरुपरुद्धवाष्पं वृद्धिं कुरु स्थिरतया विहितानुबन्धम् । अस्मिन्नलक्षितनतोन्नतभूमिभागे मार्गे पदानि खलु ते विषमीभवन्ति ॥' **तीव्रातीव्रत्वेनेति** । तीव्रत्वेन प्राणानुग्रहस्वेदो यथा—'आश्लेषे प्रथमं क्रमादथ जिते हृद्येऽधरस्यार्पणे केलिद्यूतविधौ पणं प्रियतमे कान्ता पुनः पृच्छति । सा तूर्हासनिरुद्धसंभृतरसोद्भेदस्फुरद्गण्डया तूष्णीं शारविशारणाय निहितः स्वेदाम्बुगर्भः करः ॥' अतीव्रत्वेन तु वैवर्ण्यं यथा—'संचारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा । नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः ॥' प्रलयन्ति प्रकर्षेण प्राणनिलीनेष्विन्द्रियेषु लयः प्रलयः । यथा—'तीव्राभिषङ्गप्रभवेण–' इति ॥ **तस्येति** । प्राणस्य ॥ **मन्देति** ।

१. 'रतिनिर्वेदा' स्यात्. २. 'निरिन्द्रि' स्यात्.

१. अस्य संस्कृतं न स्फुरति.

विप्रलम्भारोपणाद्विप्रलम्भाभासो यथा—

'वेणीभूतप्रतनुसलिला तांम्यती तस्य सिन्धुः
पाण्डुच्छायातटरुहतरुभ्रंशिभिः शीर्णपर्णैः ।
सौभाग्यं ते सुभग विरहावस्थया व्यञ्जयन्ती
कार्श्यं येन त्यजति विधिना स त्वयैवोपपाद्यः ॥'

भावाभासो यथा—

'गुरुगर्भभरक्लान्ताः स्तनन्त्यो मेघपङ्क्तयः ।
अचलाधित्यकोत्सङ्गमिमाः समधिशेरते ॥'

तिरश्चोः संभोगाभासो यथा—

'मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः ।
शृङ्गेण संस्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः ॥'

यथा च—

'ददौ सरःपङ्कजरेणुगन्धि गजाय गण्डूषजलं करेणुः ।
अर्धोपभुक्तेन बिसेन जायां संभावयामास रथाङ्गनामा ॥'

विप्रलम्भाभासो यथा—

'आपृष्टासि व्यथयति मनो दुर्बला वासरश्री-
रेह्यालिङ्ग क्षपय रजनीमेकिका चक्रवाकि ।

---

प्राणस्य मन्दावेशाद्रोमाञ्चो यथा—(वृन्दावन्दाभिमुखम् ।) 'तद्वक्त्राभिमुखं मुखं विनमितं दृष्टिः कृता पादयोस्तस्यालापकुतूहलाकुलतरे श्रोत्रे निरुद्धे मया । पाणिभ्यां च तिरस्कृतः सपुलकः स्वेदोद्गमो गण्डयोः सख्यः किं करवाणि यान्ति शतधा यत्कञ्चुके संधयः ॥' मिथ्यावेशाद्वेपथुर्यथा—'मा गर्वमुद्वह कपोलतले चकास्ति

१. 'तामतीतस्य(?)' स्यात्.

१. लेखकप्रमादलिखितं भवेत्. २. 'मध्यावेशा' स्यात्.

नान्यासक्तो न खलु कुपितो नानुरागच्युतो वा
दैवासक्तस्तदिह भवतीमस्वतन्त्रस्त्यजामि ॥'

यथा वा—

'नान्तर्वर्तयति ध्वनत्सु जलदेष्वामन्द्रमुद्गर्जितं
नासन्नात्सरसः करोति कवलानावर्जितैः शैवलैः।
दानास्वादनिषण्णमूकमधुपव्यासङ्गदीनाननो
नूनं प्राणसमावियोगविधुरः स्तम्बेरमस्ताम्यति ॥'

भावाभासो यथा—

'त्वत्कटाक्षावलीलीलां विलोक्य सहसा प्रिये।
वनं प्रयात्यसौ व्रीडाजडदृष्टिर्मृगीजनः ॥'

आदिशब्दान्निशाचन्द्रमसोर्नायकत्वाध्यारोपात्संभोगाभासो यथा—

'अङ्गुलीभिरिव केशसंचयं संनिगृह्य तिमिरं मरीचिभिः।
कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥'

चन्द्रे भावाभासो यथा—

'त्वदीयमुखमालोक्य लज्जमानो निशाकरः।
मन्ये घनघटान्तर्धिं समाश्रयति सत्वरः ॥'

रसाभासस्य भावाभासस्य च समासोक्त्यर्थान्तरन्यासोत्प्रेक्षारूपकोपमाश्लेषादयो जीवितम् ॥

---

कान्त स्वहस्तलिखिता मम मञ्जरीति। अस्यापि किं सखि न भाजनमीदृशानां वैरी न चेद्भवति वेपथुरन्तरायः ॥' उत्कृष्टावेशात्स्वरभेदो यथा—'याते द्वारमतीम्—' इति ॥ एते च सात्त्विकाः प्रतिरसं संभवन्तीति राजानुगतविवाहप्रवृत्तभृत्यन्यायेनापि व्यभिचारिवन्न स्वातन्त्र्यगन्धमपि भजन्त इति सुलभोदाहरणलाच्च वृत्तावुदाहरणानि न प्रदर्शितानि ॥ **रसाभास इति।**

**अनौचित्याच्च ।**

अन्योन्यानुरागाद्यभावेनानौचित्याद्रसभावाभासौ ।

रसाभासो यथा—

'दूराकर्षणमोहमन्त्र इव मे तन्नाम्नि याते श्रुतिं
　चेतः कालकलामपि प्रसहते नावस्थितिं तां विना ।
एतैराकुलितस्य विक्षतरतेरङ्गैरनङ्गातुरैः
　संपद्येत कथं तदाप्तिसुखमित्येतन्न वेद्मि स्फुटम् ॥'

अत्र सीताया रावणं प्रति रत्यभावाद्रसाभासः ।

यथा वा—

'स्तुमः कं वामाक्षि क्षणमपि विना यं न रमसे
　विलेभे कः प्रणान्रणमखमुखे यं मृगयसे ।
सुलग्ने को जातः शशिमुखि यमालिङ्गसि बला-
　त्तपःश्रीः कस्यैषा मदननगरि ध्यायसि तु यम् ॥'

अत्रानेककामुकविषयमभिलाषं तस्याः स्तुम इत्याद्यनुगतं बहुव्यापारोपादानं व्यनक्ति ।

भावाभासो यथा—

'निर्माल्यं नयनश्रियः कुवलयं वक्त्रस्य दासः शशी
　कान्तिः प्रावरणं तनोर्मधुमुचो यस्याश्च वाचः किल ।

---

[1]परस्परस्थानबन्धात्मिकाया हि रतेः श्रृङ्गारत्वमुक्तम् । अत्र तु कामनाभिलाषमात्ररूपा रतिर्व्यभिचारिभावो न स्थायी । तस्य तु स्थायिकल्पत्वेनाभाति । अतश्च स्थाय्याभासत्वं रतेः । यतो रावणस्य सीताद्विष्टमप्युपेक्षिका हृदयं नैव स्पृशति । तत्स्पर्शे ह्यभिमानोऽस्य [2]लीयेतैवामयीयं रसक्तेति तु निश्चयोऽप्यनुपयोगी कामजमोहसारत्वात् शुक्तौ रूप्याभासवत् । तस्माद्विभावाद्याभासाद्रत्या-

---

१. 'परस्परास्थानबन्धा' इति स्यात्. २. 'लीयेतैव । मयीयं न सक्तेति' स्यात्.

विंशत्या रचिताञ्जलिः करतलैस्त्वां याचते रावण-
स्तां द्रष्टुं जनकात्मजां हृदय हे नेत्राणि मित्रीकुरु ॥'

अत्रौत्सुक्यम् ॥

काव्यस्य लक्षणमुक्त्वा भेदानाह—

**व्यङ्ग्यस्य प्राधान्ये काव्यमुत्तमम् ।**

वाच्यादर्थाद्व्यङ्ग्यस्य वस्त्वलंकाररसादिरूपस्य प्राधान्ये काव्यमुत्तमम् । यथा—

'वल्मीकः किमुतोद्धृतो गिरिरियत्कस्य स्पृशेदाशयं
त्रैलोक्यं तपसा जितं यदि मदो दोष्णां किमेतावता ।
सर्वं साध्वथ वा रुणत्सि विरहक्षामस्य रामस्य चे-
त्त्वद्दन्ताङ्कितवालिकक्षरुधिरक्लिन्नाग्रपुङ्खं शरम् ॥'

अत्र दन्ताङ्कितपदेन तदवजयस्तत्कक्षपरिग्रहस्तथैव चतुरर्णवभ्रमणं पुनः कृपामात्रेण त्यागस्तत्राप्रतीकारः पुनरप्यभिमानदर्प इत्यादि व्यज्यते ॥

**असत्संदिग्धतुल्यप्राधान्ये मध्यमं त्रेधा ।**

असति संदिग्धे तुल्ये च प्राधान्ये व्यङ्ग्यस्य मध्यमं काव्यम् ।

---

भासे प्रतीते चर्वणाभाससारः शृङ्गाराभास इति ॥ एवं हास्याभासो यथा—'लोकोत्तराणि चरितानि न लोक एष संमन्यते यम किमङ्ग वदाम नाम । यत्त्वत्र हासमुखरे त्वममुष्य तेन पार्श्वोपपीडमिह को न विजाहसीति ॥' अत्र यदभिनन्दनीयेऽपि वस्तुनि लोकस्य हासमुखरत्वं स हास्याभासः । किंशब्दस्य वाच्यस्य तु हास्यत्वमेव । एवं रसान्तरेषूदाहार्यमिति ॥ **दन्ताङ्कितपदेनेति ।** वस्तुस्वभावेन । **अभिमानदर्प इत्यादीति ।** वस्त्वित्यर्थः । एवमलंकारे रसादौ च प्राधान्येन व्यङ्ग्ये काव्यस्योत्तमत्वं विज्ञेयम् । तद्यथा—'लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन्स्मेरेऽधुना तव मुखे तरलायताक्षि । क्षोभं यदेति न मनागपि तेन मन्ये सुव्यक्तमेव जलराशिरयं पयोधिः ॥' अत्र रूपकालंकारो व्यङ्ग्यः ।

तत्रासत्प्राधान्यं क्वचिद्वाक्यादनुत्कर्षेण । 
यथा—

'वाणीरकुडङ्गुड्डीणसउणिकोलाहलं सुणन्तीए ।
घरकम्मवावडाए वहूए सीदन्ति अङ्गाइं ॥'

अत्र 'दत्तसंकेतः कश्चिल्लतागहनं प्रविष्टः' इति वाक्यात् 'सीदन्त्यङ्गानि' इति वाच्यमेव सातिशयम् ।

---

तथा हि । लावण्यं संस्थानमुग्रिमा, कान्तिः प्रभा, ताभ्यां परिपूरितानि संविभक्तानि हृद्यानि संपादितानि दिङ्मुखानि येन । कोपकषायकालुष्यादनन्तरं प्रसादौन्मुख्येन स्मेरे ईषद्विहसनशीले तरलायते प्रसादान्दोलनविकाससुन्दरे अक्षिणी यस्यास्तस्या आमन्त्रणम् । अथ वा अधुना कोपादनन्तरं प्रसादोदये न एति, वृत्ते तु क्षणान्तरे क्षोभमगमत् । कोपकषायपाटलस्मेरं च तव मुखं संध्यारुणपूर्णशशधरमण्डलमेवेति भाव्यम् । क्षोभेण चलितचित्तवृत्तितया सहृदयस्य न चैति तत्सुव्यक्तमन्वर्थतयायं जलराशिर्जाड्यसंचयः । जलादयः शब्दा भावार्थप्रधाना इत्युक्तं प्राक् । अत्र क्षोभो मदनविकारात्मा सहृदयस्य त्वन्मुखावलोकने भवतीति इयताभिधाया विश्रान्तत्वाद्रूपकं व्यङ्ग्यमेव । तदाश्रयेण च काव्यस्य चारुत्वं व्यवतिष्ठत इति तस्यैव प्राधान्यम् ॥ रसप्राधान्ये यथा—'कृच्छ्रेणोरुयुगं व्यतीत्य सुचिरभ्रान्ता नितम्बस्थले मध्येऽस्यास्त्रिवलीतरङ्गविषमे निःस्पन्दतामागता । मद्दृष्टिस्तृषितेव संप्रति शनैरारुह्य तुङ्गौ स्तनौ साकाङ्क्षं मुहुरीक्षते जललवप्रस्पन्दिनी लोचने ॥' अत्र हि नायिकाकरानुवर्तमानस्वारमप्रतिकृतिपविचित्रितचित्रफलकालोकनाद्वत्सराजस्य परस्परास्थावन्यरूपो रतिस्थायिभावो विभावानुभावसंयोजनावशेन चर्वणा इति (?) आरुह्य इति प्राधान्येनात्र रसो व्यङ्ग्यः । एवं भावतदाभासादीनामुत्तमकाव्यप्रभेदतया उदाहरणानि ज्ञेयानीति ॥ **सातिशयमिति** । तथा हि ।

---

१. 'वाच्यात्' इति भवेत्.

२. 'वानीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वत्याः ।
गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि ॥' इति च्छाया.

३. 'व्यङ्ग्यात्' इति काव्यप्रकाशोक्तमेव वरं प्रतीयते.

---

१. 'मज्जिमा' स्यात्. २. 'कृच्छ्राद्‌दूरु' इत्युपलभ्यते. ३. 'प्रस्यन्दिनी' स्यात्.
४. 'स्याबन्धरूपो' स्यात्.

क्वचित्पराङ्गत्वेन यथा—

'अयं स रसनोत्कर्षी पीनस्तनविमर्दनः।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः॥'

अत्र शृङ्गारः करुणस्याङ्गम्।

---

गृहकर्मव्यापृताया इत्यन्यपराया अपि। वध्वा इति सातिशयलब्धा (?) पारतन्त्र्यबद्धाया अपि। अङ्गानीत्येकमपि[1] तादृशमङ्गं यद्गाम्भीर्यावहित्थवशेन संवरीतुं पारितम्। सीदन्तीत्यास्तां गृहकर्मसंपादनं स्वात्मानपि धर्तुं न प्रभवति। गृहकर्मयोगे च स्फुटं लक्ष्यमाणानीति अस्माद्वाच्यादेव सातिशयमदनपरतन्त्रताप्रतीतिरित्यर्थः। **पराङ्गत्वेनेति**। परस्परसमवेततदाभासभावप्रशमभावोदयभावसंधिभावशबलतारूपस्य भावस्य वाक्यार्थीभूतस्य अङ्गं रसादिवस्त्वलंकाररूपं व्यङ्ग्यं तस्य भावस्तत्त्वम्[2]। तेनेति रसेन। **उत्कर्षीति**। रसनां मेखलां संभोगावसरे ऊर्ध्वं कर्षतीति। **शृङ्गार इति**। समरभुवि पतितकरावलोकनेन प्राक्तनसंभोगवृत्तान्तः स्मर्यमाण इदानीं विध्वस्ततया यतः शोकविभावतां प्रतिपद्यते अतः करुणस्याङ्गतां याति। यथा च—'तव शतपत्रमृदुताम्रतलश्चरणश्चलकलहंसनूपुरकलध्वनिना मुखरः। महिषमहासुरस्य शिरसि प्रसभं निहितः कनकमहामहीध्रगुरुतां कथमम्ब गतः॥' अत्र वितर्कविस्मयादयो भावा देवताविषयाया रतेरङ्गम्। यथा च—'समस्तगुणसंपदः सममलंक्रियाणां गणैर्भवन्ति यदि भूषणं तव तथापि नो शोभसे। शिवं हृदयवल्लभं यदि यथा तथा रञ्जयेस्तावदेव[3] ननु वाणि ते जगति सर्वलोकोत्तरम्॥' अत्र शृङ्गाराभासो भावस्याङ्गम्। यथा च—'स पातु वो यस्य हतावशेषास्तत्तुल्यवर्णाञ्जनरञ्जितेषु। लावण्ययुक्तेष्वपि वित्रसन्ति दैत्याः स्वकान्तानयनोत्पलेषु॥' अत्र रौद्रप्रकृतीनामनुचितस्त्रासो भगवत्प्रतापकारणकृत इति भावाभास इति। स च देवताविषयरतिभावस्याङ्गम्। यथा च—'अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः। ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात्॥' अत्र राजविषयस्य रतिभावस्य भावप्रशमोऽङ्गम्। 'साकं कुरङ्गसदृशा[4] मधुपानलीलां कर्तुं स्मरद्भिरपि[5] वैरिणि ते प्रवृत्ते। अन्या-

---

१. 'मपि न तादृ' स्यात्. २. 'स्तत्वं तेनेति। रसनोत्कर्षीति' स्यात्. ३. 'स्तदेव' स्यात्. ४. 'कुरङ्गकदृशा' काव्यप्रकाशे. ५. 'सुहृद्भिः' काव्यप्रकाशे.

यथा च—

'जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।
कृता लंकाभर्तुर्वदनपरिपाटीषु घटना
मयाप्तं रामत्वं कुशलवसुता न त्वधिगता ॥'

अत्र व्यङ्ग्य उपमानोपमेयभावो रामत्वमिति वाच्यस्याङ्गतां नीतः ।

यथा च—

'भ्रमिमरतिमलसहृदयं प्रलयं मूर्च्छां तमः शरीरसादम् ।
मरणं जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ॥'

अत्र हालाहलं वस्तु व्यङ्ग्यं भुजगरूपणलक्षणस्य वाच्यस्याङ्गम् ।

---

भिधाय[1] तव नाम विभोर्गृहीतं[2] केनापि तत्र विषमामकरोदवस्थाम् ॥' अत्र त्रासस्योदयः । 'असोढा तत्कालोल्लसदसहभावस्य तपसः कथानां विस्रम्भेष्वथ च रसिकः शैलदुहितुः । प्रमोदं वो दिश्यात्कपटबटुवेषापनयने त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः ॥' अत्रावेगधैर्ययोः संधिः । 'पश्येत्कश्चिच्चल चपल रे का त्वराहं कुमारी हस्तालम्बं वितर हहहा व्युत्क्रमः[3] क्वासि यासि । इत्थं पृथ्वीपरिवृढ भवद्विद्विषोऽरण्यवृत्तेः कन्या कंचित्फलकिसलयान्याददानाभिधत्ते[4] ॥' अत्र शङ्कास्तेयधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यानां शबलता । एते च रसवदाद्यलंकाराः । यद्यपि भावोदयसंधिशबलत्वानि नालंकारतयोक्तानि तथापि कश्चिद्ब्रूयादित्येवमुक्तम् । इदानीं वाच्यं प्रत्यलंकारस्य व्यङ्ग्यस्याङ्गतामाह— **यथा चेति । जनस्थाने इति ।** जनानां स्थानम्, दण्डकारण्यं च । कनकमृगतृष्णा, भ्रान्तिश्च । वैदेही सीता, वै देहि इति पदद्वयं च । लङ्कापुरस्य भर्तुः रावणस्य, अलमीषद्रूपत्वाकुत्सितस्य भर्तुश्च । वदनेषु दशसु मुखेषु । घटना शरयोजना, विचित्रोक्तिपरम्परासु च । कुशलवौ सुतौ यस्याः सा सीता, शुभधनता च ॥ **प्रलयेति ।** प्रलय इन्द्रियाणामल्पं सामर्थ्यम् । मूर्च्छा मनस इन्द्रि-

---

१. 'धायि' काव्यप्रकाशे. २. 'विभो गृ' काव्यप्रकाशे. ३. 'व्युत्क्रमः' काव्यप्रकाशे. ४. 'त्फलकिस' काव्यप्रकाशे.

क्वचिदस्फुटत्वेन यथा—

'अहयं उज्जुअरूया तस्स वि उम्मन्थराइं पिम्माइं।
सहि आयणो अ निउणो अलाहि किं पायराएण॥'

अत्र स मां पुरुषायितेऽर्थयते, अहं च निषेद्धुं न शक्ता, तत्सख्यः पादमुद्रया तर्कयित्वा मामहासिषुरिति व्यङ्ग्यमस्फुटम्।

क्वचिदतिस्फुटत्वेन यथा—

'श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानाम्।
उपदिशति कामिनीनां यौवनमद एव ललितानि॥'

अत्राप्रयासेन शिक्षादानलक्षणं वस्तु व्यङ्ग्यमतिस्फुटत्वेन प्रतीयमानमसत्प्राधान्यमेव कामिनीकुचकलशवद्गूढं चमत्करोति नातिगूढम्।

---

याणां च शक्तिनिरोधः। तमः सत्ये च (?)मनसि इन्द्रियाणामशक्तिः मरण मतिः प्राणत्यागकर्तृतात्मिका पूर्वक्रियैव च पाशबन्धाद्यवसरगता मरणशब्देनात्र विवक्षिता। विषमिति जलं कालकूटं च॥ **गूढमिति।** यथा—'मुखं विकसितस्मितं वसितवक्रिम प्रेक्षितं समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः। उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते॥' अत्र विकसितशब्देन बाधितव्याकोशात्मकमुख्यार्थेन सच्छायत्वप्रसरणादिसादृश्यात् स्मितं लक्षयता हृद्यत्वसुरभित्वबहुमानास्पदत्वनित्यसुलभत्वादिधर्मसहस्रं ध्वन्यते। वसितशब्देन निश्चेतने वक्रिमणि असंभवत्पारम्पर्यात्मकस्वार्थेन किंकरत्वतन्मुखप्रेक्षित्वादिसादृश्याद्वक्रिमाणं लक्षयता तापकत्वात्तदनुसरणं न कदाचिदप्यन्यत्र सद्भावः स्वेच्छया यत्र कुत्रचिदविवरणमित्यादि ध्वन्यते। समुच्छलितशब्देनानुपपद्यमानसामस्त्योर्ध्वललनात्मकस्वार्थेनाकस्मादुत्कल्लोलीभवनसादृश्याद्विभ्रमं लक्षयता प्रौढप्रौढतरत्ववद्वास्य सर्वजना-

---

१. अस्य संस्कृतं बहूनां पदानामस्फुटत्वान्न लिखितम्.

---

१. 'सत्त्वे' स्यात्. २. 'मरणं मृतिः' स्यात्.

संदिग्धप्राधान्येन यथा—

'मंहिलासहस्सभरिए तुह हियए सुदय सा अमायन्ती ।
अणुदिणमणण्णकम्मा अङ्गं तनुयं पि तणुएइ ॥'

अत्र अङ्गं तनुकमपि तनूकरोतीति किं वाच्यम्, किं वा तनूभावप्रकर्षाधिरोहेण यावदत्याहितं नाप्नोति तावदुज्झित्वा दौर्जन्यं सानुनीयतामिति व्यङ्ग्यं प्रधानमिति संदिग्धम् ।

तुल्यप्राधान्ये यथा—'ब्राह्मणातिक्रम–' इति । अत्र जामदग्न्यः सर्वेषां क्षत्राणामिव रक्षसां क्षयं करिष्यतीति व्यङ्ग्यस्य वाच्यस्य च समं प्राधान्यम् ।

यथा वा—

'पङ्क्तौ विशन्तु गणिताः प्रतिलोमवृत्त्या
पूर्वे भवेयुरियताप्यथ वा त्रपेरन् ।
सन्तोऽप्यसन्त इव चेत्प्रतिभान्ति भानो-
र्भासावृते नभसि शीतमयूखमुख्याः ॥'

अत्र प्राकरणिकाप्राकरणिकयोः समं प्राधान्यम् ।

---

भिलषणीयत्वादि ध्वन्यते । अपास्तशब्देनामूर्च्छायां मत्याश्रितमर्यादायामसंभवदपेक्षणात्मकस्वार्थेन सत्त्वनिर्वृत्तिसादृश्यात्संस्थानं लक्षयता पुनरस्वीकारानवलोकनादि ध्वन्यते । मुकुलितशब्देनासंभवत्कोरकात्मस्वार्थेनाभिनवोद्भेदसादृश्यात्स्तनयुग्मं लक्षयता स्पृहणीयत्वरामणीयत्वरामणीयकस्वास्पदत्वमनोभवसमुद्दीपकत्वमिति ध्वन्यते । उद्धुरशब्देन बाधितधुरौन्मुख्यस्वार्थेनोच्चैस्त्वसादृश्यासंबन्धवज्जघनं लक्षयतोपचितत्वस्पृहणीयत्वमनोभवकेतनत्वादि ध्वन्यते । इन्दुवदनेत्यत्र यद्युपचारस्तदा इन्दुशब्देन बाधितस्वार्थेन पारिमाण्डल्यादि-

---

१. 'महिलासहस्रभरिते तव हृदये सुभग सा अमान्ती ।
अनुदिनमनन्यकर्माङ्गं तन्वपि तनयति ॥' इति च्छाया.

यथा वा—

'मथ्नामि कौरवशतं समरे न कोपा-
द्दुःशासनस्य रुधिरं न पिबाम्युरस्तः।
संचूर्णयामि गदया न सुयोधनोरू
संधिं करोतु भवतां नृपतिः पणेन॥'

अत्र मथ्नाम्येवेत्यादि व्यङ्ग्यं वाच्यतुल्यभावेन स्थितम्। इति त्रयो मध्यमकाव्यभेदा न त्वष्टौ।

**अव्यङ्ग्यमवरम्।**

शब्दार्थवैचित्र्यमात्रं व्यङ्ग्यरहितमवरं काव्यम्।

यथा—

'अघौघं नो नृसिंहस्य घनाघनघनध्वनिः।
हताद्धुरुघुराघोषः सुदीर्घो घोरघर्घरः॥'

यथा वा—

'ते दृष्टिमात्रपतिता अपि नात्र[1] कस्य
क्षोभाय पक्ष्मलदृशामलकाः खलाश्च।

---

सादृश्याद्वदनं लक्षयता जगज्जीवयितृत्वादि ध्वन्यते। उद्गमशब्देन बाधितोदयात्मकस्वार्थेनाभिनवोद्भेदसादृश्यात्तरुणिमानं लक्षयता स्पृहणीयत्वादि ध्वन्यते। मोदतेशब्देन बाधितहर्षात्मकमुख्यार्थेनार्दवितर्दकत्वसादृश्यादुद्गमं लक्षयता उच्छृङ्खलस्पृहणीयादि ध्वन्यते॥ **न त्वष्टाविति**। यथाह मम्मटः—'अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम्। संदिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम्। व्यङ्ग्यमेवंगुणीभूतव्यङ्ग्यस्याष्टौ भिदाः स्मृताः॥' इति॥ ननु यत्र रसादीनामविषयः स काव्यप्रकारोऽपि न भवत्येव। यस्मादवस्तुसंस्पर्शिता काव्यस्य

---

१. 'कस्य नात्र' काव्यप्रकाशे.

नीचाः सदैव सविलासमलीकलग्ना
ये कालतां कुटिलतामिव न त्यजन्ति ॥'

यद्यपि सर्वत्र काव्येऽन्ततो विभावादिरूपतया रसपर्यवसानम्, तथापि स्फुटस्य रसस्यानुपलम्भादव्यङ्ग्यमेतत्काव्यमुक्तम् ॥

इत्याचार्यश्री**हेमचन्द्र**विरचितायाम**लंकारचूडामणि**संज्ञस्वोपज्ञ**काव्यानुशासन**वृत्तौ रसभावतदाभासकाव्यभेदप्रतिपादनो द्वितीयोऽध्यायः ॥

---

## तृतीयोऽध्यायः।

'अदोषौ शब्दार्थौ काव्यम्' इत्युक्तम्। तत्र दोषाणां रसापकर्षहेतुत्वं सामान्यलक्षणमुक्तम्। विशेषलक्षणमाह—

**रसादेः स्वशब्दोक्तिः क्वचित्संचारिवर्जं दोषः।**

रसस्थायिव्यभिचारिणां स्वशब्देन वाच्यत्वं दोषः। संचारिणस्तु क्वचित्स्वशब्दाभिधानेऽपि न दोषः।

---

तन्नोपपद्येत। वस्तु च सर्वमेव जगद्गतमवश्यं कस्यचिद्रसस्य भावस्याङ्गं प्रतिपद्यते। अनन्तरो विभावत्वेन चित्तवृत्तिविशेषा हि रसादयः। न च तदस्ति वस्तु यन्न किंचिच्चित्तवृत्तिविशेषमुपजनयति तदनुत्पादने वा कविविषयतैव तस्य न स्यादित्याशङ्क्याह—**यद्यपीति** ॥

इत्याचार्यश्रीहेमचन्द्रविरचिते विवेके द्वितीयोऽध्यायः।

---

**वाच्यत्वमिति।** वाच्यत्वं हि रसादीनां स्वशब्दनिवेदितत्वेन वा स्याद्विभावादिप्रतिपादनमुखेन वा। पूर्वस्मिन् पक्षे स्वशब्दनिवेदितत्वाभावे रसादीनामप्रतीतिप्रसङ्गः। न च सर्वत्रैतेषां स्वशब्दनिवेद्यत्वं यथा—'यद्विश्रम्य-'[1] इति।

---

१. 'यद्विश्रम्य विलोकितेषु बहुशो निःस्थेमनी लोचने यद्गात्राणि दरिद्रति प्रतिदिनं लूनाब्जिनीनालवत्। दूर्वाकाण्डविडम्बकश्च निबिडो यत्पाण्डिमा गण्डयोः कृष्णे यूनि सयौवनासु वनितास्वेषैव वेषस्थितिः ॥' इति संपूर्णश्लोको भट्टेन्दुराजस्य ध्वन्यालोचने उदाहृतः.

तत्र रसस्य स्वशब्देन शृङ्गारादिना वाभिधानं यथा—

'शृङ्गारी गिरिजानने सकरुणो रत्यां प्रवीरः स्मरे
बीभत्सोऽस्थिभिरुत्फणी च भयकृन्मूर्त्याद्भुतस्तुङ्गया।
रौद्रो दक्षविमर्दने च हसकृन्नग्नः प्रशान्तश्चिरा-
दित्थं सर्वरसात्मकः पशुपतिर्भूयात्सतां भूतये॥'

स्थायिभावानां यथा—

'संप्रहारे प्रहरणैः प्रहाराणां परस्परम्।
छैणत्कारैः श्रुतिगतैरुत्साहस्तस्य कोऽप्यभूत्॥'

अत्रोत्साहस्य स्थायिनः।

यत्रापि स्वशब्देन निवेदितत्वमस्ति तत्रापि विशिष्टविभावादिप्रतिपादनमुखेनैव रसादीनां प्रतीतिः। स्वशब्देन सा केवलमनूद्यते। यथा—'याते द्वारवतीम्—' इत्यादि। अत्र विभावानुभावबलादुत्कण्ठा

---

अत्रानुभावविभावबोधानन्तरमेव तन्मयीभवनयुक्त्या तद्विभावानुभावोचितचित्तवृत्तिवासनानुरञ्जितस्वसंविदानन्दचर्वणागोचरोऽर्थात्माभिलाषचिन्तौत्सुक्यनिद्राधृतिग्लान्यालस्यश्रमस्मृतिवितर्कादिशब्दाभावेऽपि स्फुरत्येव॥ न च केवलशृङ्गारादिशब्दमात्रभाजि विभावादिप्रतिपादनरहिते काव्ये मनागपि रसवत्त्वप्रतीतिरस्ति। यथा—'शृङ्गारहास्यकरुणा-' इत्यादौ। तस्मादन्वयव्यतिरेकाभ्यामभिधेयसामर्थ्याक्षिप्तत्वमेव रसादीनाम्। नत्वभिधेयत्वं कथंचिदिति। स्वशब्दोक्तिदोष[2] इत्यर्थः। द्वितीयश्च पक्षोऽस्माकमप्यभिमत एव। एतेन—'रसवद्दर्शितस्पष्टशृङ्गारादिरसोदयम्। स्वशब्दस्थायिसंचारिविभावाभिनयास्पदम्॥' इत्येतद्व्याख्यानावसरे यद्भट्टोद्भटेन 'पञ्चरूपा रसाः' इत्युपक्रम्य 'स्वशब्दाः शृङ्गारादेर्वाचकाः शृङ्गारादयः शब्दाः' इत्युक्तम्, तत्प्रतिक्षिप्तम्॥

---

१. 'ठाण' 'झण' वा काव्यप्रकाशे.

---

१. 'र्थो रसात्मा' लोचने. २. अस्य मूलप्रतीकं 'दोष इति।' इति त्रुटितं भवेत्.

प्रतीयत एव । सोत्कण्ठः शब्दः केवलं सिद्धं साधयति । उत्कमित्यनेन तूक्तानुभावाकर्षणं कर्तुं सोत्कण्ठशब्दः प्रयुक्त इत्यनुवादोऽपि नानर्थकः ।

व्यभिचारिणां यथा—

'सव्रीडा दयितानने सकरुणा मातङ्गचर्माम्बरे
सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि ।
सेर्ष्या जह्नुसुतावलोकनविधौ दीना कपालोदरे
पार्वत्या नवसंगमप्रणयिनी दृष्टिः शिवायास्तु वः ॥'

अत्र व्रीडादीनाम् ।

'क्वचित्संचारिवर्जम्' इति वचनात्क्वचिन्न दोषः ।

यथा—

'औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः ।
दृष्ट्वाग्रे वरमात्तसाध्वसरसा गौरी नवे संगमे
संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः ॥'

अत्रौत्सुक्यशब्द इव तदनुभावो न तथा प्रतीतिकृत् । अत इव 'दूरादुत्सुकम्—' इत्यादौ व्रीडाद्यनुभावानां विचलितत्वादीनामिवोत्सुकत्वानुभावस्य सहसा प्रसरणादिरूपस्य तथा प्रतिपत्तिकारित्वाभावादुत्सुकमिति कृतम् ।

**अबाध्यत्वे आश्रयैक्ये नैरन्तर्येऽनङ्गत्वे च विभावादिप्रातिकौल्यम् ।**

---

नानर्थक इति । शब्दोपात्तस्यैव ह्यनुवादो भवति न प्रतीयमानस्येत्यर्थः ॥

---

१. 'प्रातिकूल्यं' स्यात्.

अबाध्यत्वादिषु सत्सु विभावादिप्रातिकौल्यं[1] रसादेर्दोषः ।

यथा—

'प्रसादे वर्तस्व प्रकटय मुदं संत्यज रुषं
प्रिये शुष्यन्त्यङ्गान्यमृतमिव मे सिञ्चतु वचः ।
निधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं
न मुग्धे प्रत्येतुं प्रभवति गतः कालहरिणः ॥'

अत्र कालहरिणश्चपलः शीघ्रमेव प्रयाति न च पुनरागच्छतीत्यादिवैराग्यकथाभिः प्रियानुनयनं निर्विस्येव[2] कस्यचिदिति शृङ्गारप्रतिकूलस्य शान्तस्यानित्यताप्रकाशनरूपो विभावो निबद्ध इति विभावप्रातिकौल्यम्[3] । तत्प्रकाशितो निर्वेदश्च स्वदते इति व्यभिचारिप्रातिकौल्योदाहरणमप्येतत्[4] ।

एवं शृङ्गारबीभत्सयोर्वीरभयानकयोः शान्तरौद्रयोरप्युदाहार्यम् ।

यथा च—

'निहुंयरमणम्मि लोयणवहम्मि पडिए गुरूणमज्झम्मि ।
सयलपरिहारहियया वणगमणं वेव महइ वहू ॥'[5]

अत्र सकलपरिहारवनगमने शान्तानुभावौ । इन्धनाद्यानयनव्याजेनोपभोगार्थं वनगमनं चेन्न दोषः ।

**अबाध्यत्वे इति** । अबाध्यत्वमशक्याभिभवत्वं तदभावेन केवलं न दोषो यावत्प्रकृतस्य रसस्य परिपोषः । यथा—'क्वाकार्यं शशलक्ष्मणः क्व च कुलम्' इत्यादि । अत्र वितर्कौत्सुक्ये मतिसरणे शङ्कादैन्ये धृति-

---

१- 'प्रातिकूल्यं' स्यात्. २. 'निर्विण्ण' स्यात्. ३.४. 'प्रातिकूल्यं' स्यात्.
५. 'निभृतरमणे लोचनपथे पतिते गुरुजनमध्ये ।
सकलपरिहारहृदया वनगमनमेवेच्छति वधूः ॥' इति च्छाया.

चिन्तने [1]परस्परबाध्यबाधकभावेन [2]भवन्ती चिन्तायामेव पर्यवस्यन्ती परमास्वादस्थानम् ।

'सत्यं मनोरमाः [3]कामाः सत्यं रम्या विभूतयः ।
किं तु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम् ॥'

अत्र त्वाद्यमर्धं बाध्यत्वेनैवोक्तम्, द्वितीयं तु [4]प्रसिद्धास्थिरत्वापाङ्गभङ्गोपमानेन जीवितस्यास्थिरत्वं प्रतिपादयद्बाधकत्वेनोपात्तं शान्तमेव पुष्णाति । न पुनः शृङ्गारस्यात्र प्रतीतिः, तदङ्गस्याप्रतिपत्तेः ।

ध्वनिकारस्तु—

'विनेयानुन्मुखीकर्तुं काव्यशोभार्थमेव च ।
तद्विरुद्धरसस्पर्शस्तदङ्गानां न दुष्यति ॥'

इति विरोधपरिहारमाह ॥

**आश्रयैक्य इति** । एकाश्रयत्वे दोषः । भिन्नाश्रयत्वे तु वीरभयानकयोः परस्परं विरुद्धयोरपि नायकप्रतिनायकगतत्वेन निवेशितयोर्न दोषः ।

यथा अर्जुनचरिते—

'समुत्थिते धनुर्ध्वनौ भयावहे किरीटिनो
महानुपप्लवोऽभवत्पुरे पुरंदरद्विषाम् ।
श्रवेण तस्य तु ध्वनेर्विलुप्तमूलबन्धन-
मशेषदैत्ययोषितां श्लथीबभूव जीवितम् ॥'

इत्यादि ॥

---

१. 'परस्परं' लोचने. २. 'द्वन्द्वशो भवन्ती' लोचने. ३. 'रामाः' ध्वन्यालोककाव्यप्रकाशयोः. ४. 'प्रसिद्धास्थिरापाङ्गः' स्यात्.

**नैरन्तर्य इति।** एकाश्रयत्वेऽपि शान्तशृङ्गारयोः परस्परविरुद्धयोर्निरन्तरत्वे दोषः, न तु रसान्तरान्तरितयोः।

यथा नागानन्दे शान्तरसस्य—'अहो गीतमहो वादितम्'[1] इत्यद्भुतमन्तरे निवेश्य जीमूतवाहनस्य मलयवतीं प्रति शृङ्गारो निबद्धः।

न केवलं प्रबन्धे, यावदेकस्मिन्नपि वाक्ये रसान्तरव्यवधानाद्विरोधो निवर्तते।

यथा—

'भूरेणुदिग्धान्नवपारिजातमालारजोवासितबाहुमध्याः।
गाढं शिवाभिः परिरभ्यमाणान्सुराङ्गनाश्लिष्टभुजान्तरालाः॥
सशोणितैः क्रव्यभुजां स्फुरद्भिः पक्षैः खगानामुपवीज्यमानान्।
संवीजिताश्चन्दनवारिसेकसुगन्धिभिः कल्पलतादुकूलैः॥
विमानपर्यङ्कतले निषण्णाः कुतूहलाविष्टतया तदानीम्।
निर्दिश्यमानांल्ललनाङ्गुलीभिर्वीराः स्वदेहान्पतितानपश्यन्॥'

अत्र बीभत्सशृङ्गारयोरन्तरा वीररसनिवेशान्न विरोधः। वीराः स्वदेहानित्यादिना उत्साहाद्यवगत्या कर्तृकर्मणोः समस्तवाक्यार्थानुयायितया

---

**मरणमिति।** प्राणत्यागकर्तृतात्मिका पूर्वक्रियैव पात्रबन्धाद्यवसरगता मरणशब्देनात्र विवक्षिता॥ **शान्तरसस्येति।** 'रागस्यास्पदमित्यवैमि न हि मे ध्वंसीति न प्रत्ययः कृत्याकृत्यविचारणासु विमुखं को वा न वेति क्षितौ। इत्थं निन्दमपीदमिन्द्रियवशं[2] प्रीत्यै भवेद्यौवनं भक्त्या याति यदीत्थमेव पितरौ शुश्रूषमाणस्य मे॥' इत्यादिना उपक्षेपात्प्रभृतिपरार्थशरीरवितरणात्मकनिर्वहणपर्यन्तं

---

१. 'वादित्रम्' काव्यप्रकाशे.

---

१. अस्य मूलं त्रुटितं भवेत्, अत्र वास्य प्रमादपतितत्वं भवेत्. २. 'निन्द्य' स्यात्.

प्रतीतिरिति मध्यपाठाभावेऽपि सुतरां वीरस्य व्यवधायिकता[1]। स्वदेहानित्यनेन चैकत्वाभिमानादाश्रयैक्यम्।

अनङ्गत्वमिति[2]। द्वयोर्विरुद्धयोरङ्गित्वे दोषः, नाङ्गभावप्राप्तौ।

सा हि नैसर्गिकी, समारोपकृता वा।

तत्र येषां नैसर्गिकी तेषां तावदुक्तावविरोध एव। यथा विप्रलम्भे तदङ्गानां व्याध्यादीनाम्। ते हि निरपेक्षभावतया सापेक्षभावविरोधिन्यपि करुणे सर्वथाङ्गत्वेन दृष्टा[3]। यथा—'भ्रमिमरतिमलसहृदयताम्' इत्यादि।

समारोपितायामप्यदोषो यथा—'कोपात्कोमललोलबाहुलतिका—' इत्यादि। अत्र बद्ध्वा हन्यत इति च रौद्रानुभावानां रूपकबलादारोपितानां तदनिर्वाहादेवाङ्गत्वम्। इयं चाङ्गभावप्राप्तिरन्या।

यदाधिकारिकत्वात्प्रधाने एकस्मिन्काव्यार्थे रसयोर्भावयोर्वा परस्परविरोधिनोरङ्गभावस्तत्रापि न दोषः।

यथा—

'क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
गृह्णन्केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण।
आलिङ्गन्योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शांभवो वः शराग्निः॥'

---

प्रतिपादितस्य॥ **एकत्वाभिमानादिति**। अन्यथा विभिन्नविषयत्वात्को विरोधः स्यादित्यर्थः॥ ननु वीर एवात्र रसो न शृङ्गारो न बीभत्सः किं तु रतिजुगुप्से वीरं प्रति व्यभिचारीभूते। भवत्वेवम्। तथापि प्रकृतोदाहरणे

---

१. 'यकता' इति ध्वन्यालोकलोचने पाठः.    २. 'अनङ्गत्वे चेति' स्यात्.
३. 'दृष्टाः। यथा' स्यात्.

अत्र त्रिपुररिपुप्रभावातिशयवर्णने प्रकृते करुण इव शृङ्गारोऽप्यङ्गमिति तयोर्न विरोधः॥

पराङ्गत्वेऽपि कथं विरोधिनोर्विरोधनिवृत्तिरिति चेत्, उच्यते। विधौ विरुद्धसमावेशस्य दुष्टत्वम्, नानुवादे।

यथा—

'एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर।
एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः॥'

---

तावदुत्पन्नरतिजुगुप्सयोरपि न विरोधः॥ **करुण इवेति**। तथा हि—हैस्तावलग्नस्य वह्नेः क्षेपो विधूननं भयहेतुकमिति करुणाङ्गत्वे[2] उपलालनाप्रवृत्तस्य तु वल्लभस्य करग्रहणासहनं क्षेपो नाविकारान्तरसंपर्कसमुत्थेर्ष्याकोपनिमित्तो विप्रलम्भसंसूचकः। पटाञ्चलावलग्नस्य वह्नेः प्रसभाभिहननं दाहनिमित्तदुःखजनितमवधूननं जलादिप्रक्षेपरूपं चेति करुणरसपरिपोषकम्। करावधूननेन करग्रहणासंपत्तावञ्चलावलम्बिनो वल्लभस्य प्रसभमभिहननमवदापनमस्तया(?)वशावज्ञानिमित्तं विप्रलम्भमपरिपोषकम्। इतश्चेतश्च प्रवर्तमानस्य वह्नेः कबरीकलापासङ्गितश्वासहेतुकः ससंभ्रमकरयुगलजनितः प्रक्षेपोपासनमभिव्यञ्जकमिह करुणस्य प्रपञ्चलवे ताण्डवपूर्वकत्वरितगतिनायिकावेणीलतावग्रहोपायहठचुम्बनप्रवृत्तवल्लभस्यायासनमपक्षेपेणामयि निर्लज्ज तथा नाम व्यलीकशतानि कृत्वा संप्रतीत्थमाचरतीत्येवंरूपोपालम्भवचनादिमयं कृतककोपवशमीर्ष्यारोषाभिव्यञ्जकम्। केशावलग्नस्य वह्नेः सेन्धनस्य प्रक्षेपे च संभ्रमवशेनानालोचितदेशतया पादपतनमतज्वालितस्य वा सर्वतोदिक्कस्य पादाक्रमणमिति तथाभूतस्य संभ्रमवशेनानिरीक्षणमनालोचनम्। वेल्लद्वेणीविलग्ननायकावलोकनजनितरोषावेषारुणितनयनस्फुरिताधरसंरब्धकान्तादर्शननिश्चितमानग्रहणः प्रणामान्ते मौन इति। वल्लभः पादपतितो न विगणिततदपराधोन्मुखीकरणविस्मृततदपराधया नायिकया वह्न्याक्रान्तपादतया पलाय-

---

१. इतः प्रभृति 'विरोधाभावात्' इत्यन्तो ग्रन्थः पुस्तकान्तरालाभेन शुद्धयशुद्धिज्ञानाभावेन यथादर्शमस्फुटार्थो विचार्यः. २. 'ङ्गत्वम्।' स्यात्.

न ह्यत्र विधिः[1] तदेव कुरु माकार्षीरिति वदेकदा[2] प्राधान्यलक्षणः । अपित्वन्याङ्गतालक्षणोऽनुवादः । एहीति क्रीडन्ति गच्छेति क्रीडन्ति इति क्रीडाङ्गयोरागमनगमनयोर्न विरोधः । न च रसेषु विध्यनुवाद-व्यवहारो नास्तीति शक्यं वक्तुम् । तेषां वाक्यार्थत्वेनाभ्युपगमात् ।

---

नासमर्थत्रिपुरनारीसमाश्लेषकारी वह्निरतितीव्रतरावेगावेशेन सर्वाङ्गे प्रकम्पनेनावधूतः क्षिप्तो दुःसहदुःखावस्थाद्योतकः । पादपतनप्रसादितवल्लभो वल्लभालिङ्गन-प्रवृत्तः कान्तजनोऽसहनया दृढकोपनया झगिति[1] प्रसादमव्रजं गर्वगरिममन्थरि-तयावधूतस्तदा मोटने न निवारित इति संस्कार इति शेषेर्ष्याविप्रलम्भसंसूचनम् । अत एव परित्यक्तप्रायेर्ष्याकोपतया वल्लभकृतापराधानुस्मरणजनिताश्रुबाधाविलीकृतकुवलयदलसदृशलोचनतया शृङ्गारोद्दीपनम् । वह्निदाहजनितवल्लभसुतादिविनाशानुस्मरणहेतुकदुःखसंभारवशाद्गताश्रुप्रवाहविसंस्थुलीकृतसुन्दरतरनयनतया शोकावेगपोषणम् । आर्द्रापराधः प्रत्ययप्रेमस्खलितादिप्रमादयुक्तः । अत एवेर्ष्याकोपनिमित्तता । वह्नेरपि प्रत्यग्रापराधना दाहजनिता तया शोकावेगहेतुतेति सदृशार्थवाचकपदनिकुरम्बजनितरसद्वयप्रतीतिभूषितकाव्यार्थाभोगाः सहृदयानां परं चमत्कारमावहन्तीत्युच्यत इति ॥ अयं भावः—सामग्रीविशेषपरिपतितत्वेन भावानां विरोधाविरोधौ न स्वभावमात्रनिबन्धनौ भिन्नदेशयोः शीतोष्णयोरपि विरोधाभावात् ॥ ननु प्रधानतया यद्वाच्यं तत्र विधिः, अप्रधाने[2] तु वाच्येऽनुवादः, न च रसस्य वाच्यत्वं सह्यत[3] इत्याशङ्कमानः परिहरति—**न चेति** । प्रधानाप्रधानत्वकृतौ[4] विध्यनुवादौ, तौ च व्यङ्ग्यतायामपि भवत एवेति भावः । मुख्यतया च रस एव काव्यवाक्यार्थानामर्थः । तेन[5] यत्रामुख्यतया सोऽर्थस्तत्रानूद्यमानत्वं रसस्यापि युक्तम् । यदि[6] वानूद्यमानविभावादिसमा-

---

१. 'विधिस्तदैव तदेव कुरु मा कार्षीरिति तावदे' इति पश्चात्कृतपाठः. २ 'दा' रहितोऽपि ध्वन्यालोचनस्थः पाठः.

---

१. 'झगिति' स्यात्. २. 'अप्रधानत्वेन' ध्वन्यालोकलोचने. ३. 'वाच्यत्वं त्वयैव सोढमित्याशङ्कमानः' ध्वन्यालोकलोचने. ४. 'प्रधानाप्रधानमात्रकृतौ' ध्वन्यालोकलोचने. ५. 'तेन मुख्यतया यत्र सोऽर्थः' ध्वन्यालोकलोचने. ६. 'यदिचा' स्यात्.

[1]वाक्यार्थस्य च यौ विध्यनुवादौ तौ तदाक्षिप्तानां रसानामपि भवतः ।

अथ वा त्रिपुररिपुप्रभावातिशयस्य करुणोऽङ्गम्, तस्य तु शृङ्गारः । तथापि न करुणे विश्रान्तिरिति तस्याङ्गतैव ।

अथ वा प्राग्यथा कामुक आचरति स्म, तथा शराग्निरिति स्मर्यमाणशृङ्गारेणेदानीं विध्वस्ततया शोकविभावतां प्रतिपद्यमानेन पोषितः करुणो रसः प्रधानमेव वाक्यार्थमभिधत्ते । यतः प्रकृतिरमणीयाः पदार्थाः शोचनीयतां प्राप्ताः प्रागवस्थादिभिः[2] स्मर्यमाणैर्विलासैरधिकतरं शोकावेगमुपजनयन्ति ।

यथा—

'अयं स रसनोत्कर्षी पीनस्तनविमर्दनः ।'

इदं हि भूरिश्रवसः समरभुवि पतितं बाहुं दृष्ट्वा तत्कान्तानामनुशोचनम् । तथात्रापि त्रिपुरयुवतीनां शांभवः शराग्निरार्द्रापराधः कामी यथा व्यवहरति स्म तथा व्यवहृतवानित्यनेनापि प्रकारेणास्त्येवाविरोधित्वम् ।

---

क्षिप्तत्वाद्रसस्यानूद्यमानता । तदाह—**वाक्यार्थस्य चेति** । **अस्त्येवाविरोधित्वमिति** । अत्रायं भावः—पूर्वं पक्षद्वये विप्रलम्भकरुणयोरन्यत्राङ्गभावगमनान्निर्विरोधित्वमुक्तम् । अधुना तु स विप्रलम्भः करुणस्यैवाङ्गतां प्रतिपन्नो न विरोधीति । तथा हि—करग्रहणासहनादिना ईर्ष्याविप्रलम्भवृत्तान्तः स्मर्यमाण इदानीं विध्वस्ततया शोकविभावतां प्रकृष्टां प्रतिपद्यते इति वाक्यार्थीभूतस्य करुणस्य विरोधिनापि शृङ्गारेण परिपोष एव विधीयते ॥ परतस्तु शृङ्गारपोषितेन करुणेनात्र मुख्य एवार्थ उपोद्बल्यते । उक्तं हि—'गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते । प्रधानस्योपकारे हि तथाभूय निवर्तते ॥' इति ।

---

१. 'वाक्यार्थस्य वाच्यस्य च' ध्वन्यालोके. २. 'स्वाभाविभिः ससर्थं' ध्वन्यालोके.

एवं च—

'दन्तक्षतानि करजैश्च विपाटितानि
[1]प्रोद्भिन्नसान्द्रपुलके भवतः शरीरे ।
दन्तानि रक्तमनसा मृगराजवध्वा
जातस्पृहैर्मुनिभिरप्यवलोकितानि ॥'

इत्यादावपि शृङ्गारः शान्तस्याङ्गम् । तथा हि—यथा कश्चिन्मनोरथशतप्रार्थितप्रेयसीसंभोगावसरे जातपुलकस्तथा त्वं परार्थसंपादनाय स्वशरीरदान इति शृङ्गारेण शान्त एव पोष्यते इति ।

यत्र तु न पोष्यते तत्रानङ्गत्वाद्दोष एव ।

यथा—

'राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥'

अत्र प्रकृतस्य करुणरसस्य विरुद्धश्रृङ्गारो न पोषकः ।

---

**दन्तक्षतानीति** । [1]बाधिसत्त्वस्य सिंहीं स्वकिशोरभक्षणप्रवृत्तां प्रति निजं शरीरं वितीर्णवतः केनचिच्चाटुकं क्रियते । प्रोद्भूतः[2] सान्द्रः पुलकः परार्थसंपत्तिजनानन्दकरेण[3] यत्र[4] । रक्ते रुधिरे मनोभिलाषो यस्याः । अनुरक्तं च मनो यस्याः । [5]पुंररयश्चोद्बोधितः मदनावेशश्चेति विरोधः । **जातस्पृहैरिति** । वयमपि यदि कदाचिदेवं कारुणिकपदवीमधिरोक्ष्यामस्तदा सत्यतो मुनयो भविष्याम इति मनोराज्ययुक्तैः ॥ **न पोषक इति** । अपि त्वङ्गितयैव प्रतिभासते ॥ ननु यत्रैकतात्पर्येणेतरेषां विरुद्धानामविरुद्धानां च न्यग्भूतत्वेनोपादानं तत्र त्वङ्गत्वेनाविरोधः । यत्र तु सम-

१. 'प्रोद्भूत' विवेके लोचने च.

१. 'बोधिसत्त्वस्य' लोचने. २. 'प्रोद्भिन्न' मूले ध्वन्यालोके च. ३. 'संपत्तिजेनानन्दभरेण' ध्वन्यालोकलोचने. ४. 'तादृशे भवतः शरीरे' इत्यपि पूरणीयम्. ५. 'मुनयश्चोद्बोधितमदनावेशाश्चे' ध्वन्यालोकलोचने.

**विभावानुभावक्लेशव्यक्तिः पुनःपुनर्दीप्त्याकाण्डप्रथाच्छेदाङ्गातिविस्तराङ्ग्यननुसंधानानङ्गाभिधानप्रकृतिव्यत्ययाश्च ।**

एते चाष्टौ रसस्य दोषाः ।

तत्र **विभावानुभावयोः क्लेशव्यक्तिर्यथा—**

'परिहरति रतिं मतिं लुनीते स्खलतितरां[1] परिवर्तते च भूयः ।
इति बत विषमा दशास्य देहं परिभवति प्रसभं किमत्र कुर्मः ॥'

अत्र रतिपरिहारादीनामनुभावानां करुणादावपि संभवात्कामिनीरूपो विभावः क्लेशेन प्रतिपाद्यः ।

'कर्पूरधूलिधवलद्युतिपूरधूत[2]-
दिङ्मण्डले शिशिररोचिषि तस्य यूनः ।

---

प्रधानत्वेनानेकस्य भावस्योपनिबन्धनं तत्र कथम् । यथा—'एक्कत्तो[1] रुअइ पिअ अण्णत्तो समरुत्तूर[2]निग्घोसो । नेहेण रणसरसेण[3] य भडस्स दोलाइयं हिअअम् ॥' इत्यादौ रत्युत्साहयोः, 'मात्सर्यमुत्सार्य विचार्य कार्यम्–' इत्यादौ रतिशमयोः, 'इयं सा लोलाक्षी त्रिभुवनललामैकवसतिः स चायं दुष्टात्मा स्वसुरपकृतं येन मम तत् । इतस्तीव्रः कामो गुरुरयमितः क्रोधदहनः कृतो वेषश्चायं कथमिदमिति भ्राम्यति पुनः ॥' इत्यादौ रतिक्रोधयोः, 'अन्त्रैः कल्पितमङ्गलप्रतिसराः स्त्रीहस्तरक्तोत्पलव्यक्तोत्तंसभृतः पिनह्य सरसा हृत्पुण्डरीकस्रजः । एताः शोणितपङ्ककुङ्कुमजुषः संभूय कान्तैः पिबन्त्यस्थिस्नेहसुरां कपालचषकैः प्रीताः पिशाचाङ्गनाः ॥' इत्यादौ रतिजुगुप्सयोः, 'एकं ध्याननिमीलनान्मुकुलितं चक्षुर्द्वितीयं पुनः पार्वत्या वदनाम्बुजस्तनतटे शृङ्गारभारालसम् । अन्यद्दूरविकृष्टचापमदनक्रोधानलोद्दीपितं शंभोर्भिन्नरसं समाधिसमये नेत्रत्रयं पातु वः ॥' इत्यादौ शमरतिक्रोधानाम्, 'ऐतेनाक्ष्णा[4] प्रविततरुषा वीक्ष्यते व्योमसंस्थं भानोर्बिम्बं सजललुलितेनापरेणा-

---

१. 'भृशं' काव्यप्रकाशे. २. 'धौत' काव्यप्रकाशे.

---

१. 'एकतो रोदिति प्रिया अन्यतः समरतूर्यनिर्घोषः ।
स्नेहेन रणरसेन च भटस्य दोलायितं हृदयम् ॥' इति च्छाया.

२. 'तूर' स्यात्. ३. 'रणरसेण' ध्वन्यालोके. ४. 'एकेना' स्यात्.

लीलाशिरोंशुकनिवेशविशेषक्लृप्ति-
व्यक्तस्तनोन्नतिरभून्नयनावनौ सा ॥'

अत्रोद्दीपनालम्बनरूपाः शृङ्गारयोग्या विभावा अनुभावापर्यवसायिनः स्थिताः इति क्लेशव्यक्तिः ।

---

त्मकान्तम् । अह्नश्छेदे दयितविरहाशङ्किनी चक्रवाकी द्वौ संकीर्णौ रचयति रसौ नर्तकी च प्रगल्भा ॥' इत्यादौ रतिशोकक्रोधानां समप्राधान्येनानिबन्धस्तत्र कथं न विरोधः । अत्रोच्यते—अत्राप्येक एव स्थायी । तथा हि—'एक्तो रुअइ पिआ–' इत्यादौ स्थायिभूतोत्साहव्यभिचारिवितर्कलक्षणहेतुसंदेहकारणतया करुणसंग्रामतूर्ययोरुपादानम् वीरमेकं पुष्णातीति भटस्येत्यनेन पदेन प्रतिपादितम् । न च द्वयोः समप्रधानयोरन्योन्यमुपकार्योपकारकभावरहितयोरेकवाक्यभावो युज्यते । किं च—उपक्रान्ते संग्रामे सुभटानां कार्यान्तरकरणेन प्रस्तुतसंग्रामौदासीन्येन महदनौचित्यम् । अतो भर्तुः संग्रामैकरसिकतया शौर्यमेकं प्रकाशयन् प्रियतमाकरुणो वीरमेव पुष्णाति । एवम्—'मात्सर्य–' इत्यादावपि चिरप्रवृत्तिमत्या रतिवासनाया हेयतयोपादानाच्छमैकपरत्वम् 'आर्याः समर्यादम्–' इत्यनेन प्रकाशितम् । 'इयं सा लोलाक्षी' इत्यादावपि रावणस्य प्रतिपक्षनायकतया निशाचरत्वेन मायाप्रधानतया च रौद्रव्यभिचारिविषादविभाववितर्कहेतुतया रतिक्रोधयोरुपादानं रौद्रपरमेव । 'अन्त्रैः कल्पितमङ्गलप्रतिसराः–' इत्यादौ हास्यरसैकपरत्वम् । 'एकं ध्याननिमीलनान्मुकुलितम्–' इत्यादौ तु शंभोर्भावान्तरैरनाक्षिप्ततया समस्तस्यापि योग्यान्तरशमाद्वैलक्षण्यप्रतिपादनेन शमैकपरतैव 'समाधिसमये' इत्यनेन स्फुटीकृता ॥ 'एतेनाक्ष्णा–'[1] इत्यादौ तु समस्तमपि वाक्यं भविष्यद्विप्रलम्भविषयमिति न क्वचिदनेकतात्पर्यम् । तदेवमुक्तप्रकारेण रत्याद्युपनिबन्धे सर्वत्राविरोध इति ॥ **अनुभावापर्यवसायिन इति** । शृङ्गारी चेद्युवा[2], संभवन्ति तथाविधानुभावाः । शान्तश्चेत्, न संभवति । तं प्रतिपन्नरूपत्वात्तथाविधानां विभावानामिति शृङ्गारित्वनिश्चयाभावे सत्स्वपि तथाविधेषु

---

१. 'एकेना' स्यात्. २. 'शृङ्गारी चेत्कविः काव्ये जातं रसमयं जगत् । स एव वीतरागश्चेन्नीरसं सर्वमेव तत् ॥' इति ध्वन्यालोकसंवादात् 'त्कविः' स्यात्.

**पुनःपुनर्दीप्तिर्**यथा कुमारसंभवे रतिप्रलापेषु । उपभुक्तो हि रसः स्वसामग्रीलब्धपरिपोषः पुनः पुनः परामृष्यमाणः परिम्लानकुसुमकल्पः कल्पते इति ।

**अकाण्डे प्रथनं** यथा वेणीसंहारे द्वितीयेऽङ्के । दुर्योधनस्य धीरोद्धतप्रकृतेरपि तथाभूतभीष्मप्रमुखमहावीरलक्षक्षयकारिणि समरसंरम्भे प्रवृत्ते [1]शृङ्गारवर्णने ।

**अकाण्डच्छेदो** यथा वत्सराजस्य रत्नावल्यां चतुर्थेऽङ्के । रत्नावलीनामधेयमप्यगृह्णतो विजयवर्मवृत्तान्ताकर्णने । यथा वा वीरचरिते द्वितीयेऽङ्के । राघवभार्गवयोर्[2]धाराधिरूढवीररसे 'कङ्कणमोचनाय गच्छामि–' इति राघवस्योक्तौ ।

**अङ्गस्याप्रधानस्यातिविस्तरेण वर्णनं** यथा—हयग्रीववधे हयग्रीवस्य । यथा वा विप्रलम्भशृङ्गारे नायकस्य कस्यचिद्वर्णयितुमनुक्रान्ते कवेर्यमकाद्यलंकारनिबन्धरसिकतया महाप्रबन्धेन समुद्रादेः । तथा हि हरिविजये ईर्ष्याकुपितसत्यभामानुनयनप्रवृत्तस्य हरेः पारिजातहरणव्यापारेणोपक्रान्तविप्रलम्भस्य वर्णनप्रस्तावे गलितकनिबन्धनरसिकतया कविना समुद्रवर्णनमन्तरा गडुस्थानीयं विस्तृतम् । तथा कादम्बर्याम् 'रूपविलास–' इत्यादिना महाविप्रलम्भबीजेऽप्युपक्षिप्ते तदनुपयोगिनीष्वटवीशबरेशाश्रममुनिनगरीनृपादिवर्णनास्वतिप्रसङ्गाभिनिवेशः । तथा

---

लीलादयोऽनुभावाः क्लेशेन व्यज्यन्ते इति ॥ **पुनःपुनः [1]परामृश्यमान इति ।** तथा हि—विभावानुभावसामग्रीपरिघटितशरी[2]रस्यापि रसयितृरसनयोग्यरसस्य पुनरान्दोलनं मालतीकुसुमपरिमर्दनवदननुगुणमेव । धाराप्राप्ते हि रसे तदाविष्टानां तत्परवशानामुक्तिरल्पीयस्येव । तथा च तस्यां दशायां महाकवीनामेको द्वित्रा

---

१. 'शृङ्गारकथायामवतारवर्णने' ध्वन्यालोके. २. 'धाराधिरू' काव्यप्रका०.

---

१. 'परामृष्यमाणः' मूले ध्वन्यालोके च. २. 'रसस्या' स्यात्.

हर्षचरिते 'जयति ज्वलद्—' इत्यादिना हर्षोत्कर्षवद्विजयबीजे बाणान्वयवर्णनम्, तत्रापि चानन्वितप्राय एव सारस्वतोत्पत्तिपर्यन्तो महाग्रन्थसंदर्भः। शिशुपालवधादौ चादितः प्रकृतप्रतिबन्धिविजयबीजोपक्षेपावगाढव्याप्तिमद्वीररसानुबन्धेऽपि तदसङ्गतशृङ्गाराङ्गभूततत्तदृतूपवनविहारपुष्पावचायमज्जनादिवर्णनास्वत्यासक्तिः। तदित्थम्। अप्रस्तुतवस्तुविस्तृतिः प्रस्तुतरसप्रतीतिव्यवधानकारिण्यपि महाकविलक्ष्येषु भूयसा दृश्यते इति तत्त्वं त एव विदन्ति।

**अङ्गिनः प्रधानस्याननुसंधानं** यथा—रत्नावल्यां चतुर्थेऽङ्के बाभ्रव्यागमनेन सागरिकाया विस्मृतिः। अनुसंधिर्हि सर्वस्वं सहृदयतायाः। यथा तापसवत्सराजे षट्स्वप्यङ्केषु वासवदत्ताविषयः प्रेमसंबन्धः कथावशादाशङ्क्यमानविच्छेदोऽप्यनुसंहितः।

**अनङ्गस्य रसानुपकारकस्य वर्णनं** यथा—कर्पूरमञ्जर्यां नायिकया स्वात्मना च वसन्तवर्णनमनादृत्य बन्दिवर्णितस्य वसन्तस्य राज्ञा प्रशंसनम्।

---

वा श्लोका निर्यान्ति। अत एव तापसवत्सराजे धाराप्राप्तकरुणरसः सर्वाल्पो द्वितीयोऽङ्कः कविना निबद्धः। **षट्स्वङ्केष्विति**। तथा हि प्रथमे तावदङ्के—'तद्वक्त्रेन्दुविलोकनेन दिवसो नीतः प्रदोषं तथा तद्गोष्ठ्यैव निशापि मन्मथकृतोत्साहैस्तदङ्गार्पणैः। तां संप्रत्यपि मार्गदत्तनयनां द्रष्टुं प्रवृत्तस्य मे बद्धोत्कण्ठमिदं मनः किमथ वा प्रेमासमाप्तोत्सवम्॥' इत्यनेन। द्वितीये—'दृष्टिर्नामृतवर्षिणी स्मितमधुप्रस्यन्दि वक्त्रं न[1] किं नोर्ध्वार्द्रं हृदयं न चन्दनरसस्पर्शानि चाङ्गानि वा। कस्मिंल्लब्धपदेन ते कृतमिदं क्रूरेण प्रीताग्निना नूनं वज्रमयोऽन्य एव दहनस्त्वस्येदमाचेष्टितम्॥' इत्यादिना। तृतीये—'सर्वत्र ज्वलितेषु वेश्मसु भयादाली-

---

१. 'गमने सा' का०प्र०. २. 'प्रेमबन्धः' ध्वन्यालोकलोचने.

---

१. 'नु' ध्वन्यालोकलोचने.

प्रकृतिव्यत्यय इति। प्रकृतिर्दिव्या मानुषी दिव्यमानुषी पातालीया

---

जने विद्रुते श्वासोत्कं[1]स्य विहस्तया प्रतिपदं देव्या पतन्त्या तथा। हा नाथेति मुहुः प्रलापपरया द[2]ग्धं वराक्या तया शान्तेनापि वयं तु तेन दहनेनाद्यापि दह्या[3]महे॥' इत्यादिना। चतुर्थे—'देवी स्वीकृतमानसस्य नियतं स्वप्नायमानस्य मे तद्गोत्रग्रहणादियं सुवदना यायात्कथं न व्यथाम्। इत्थं यन्त्रणया कथं कथमपि क्षीणा क्षपा जाग्रतो दाक्षिण्योपहतेन सा प्रियतमा स्वप्नेऽपि नासादिता॥' इत्यादिना। पञ्चमे समागमप्रत्याशया विप्रलम्भेऽङ्कुरिते—'तथाभूते तस्मिन्मुनिवचसि जातागसि मयि प्र[4]यत्नान्तर्गूढा रुषमुपगता मे प्रियतमा। प्रसीदेति प्रोक्ता न खलु कुपितेत्युक्तिम[5]धुरं समुद्भिन्ना प्रीतैर्नयनसलिलैः स्थास्यति पु[6]रः॥' इत्यादिना। षष्ठे च—'त्वत्संप्राप्तिविलोभितेन स[7]चिवैः प्राणा मया धारितास्तन्मत्वा त्यजतः शरीरकमिदं नैवास्ति निःस्नेहता। आसन्नोऽवसरस्तवानुगमने जाता धृतिः किं त्वयं खेदो यच्च तवानुगं न हृदयं तस्मिन्क्षणे दारुणे॥' इत्यादिना च वासवदत्ताविषयो जीवितसर्वस्वाभिमानात्मा प्रेमबन्धस्तत्र द्विभावौ[8]चित्यात्करुणविप्रलम्भादिभूमिकां गृह्णन् विच्छिन्नविच्छिन्नः समस्तेतिवृत्तव्यापितया दर्शितः। राज्यप्र[9]त्यापत्त्या हि सचिवनीतिमहिमोपनतया तदङ्गभूतपद्मावतीलाभानुगतयानुप्राप्यमानरू[10]पा वासवदत्ताधिगतिरेव तत्र फलम्। निर्वहणे हि—'दृष्टा यूयं निर्जिता विद्विषश्च प्राप्ता देवी भूतधात्री च भूयः। संबन्धोऽभूद्दर्शकेनापि सार्धं किं तै[11]र्वे दुःखं यत्नतः शान्तमद्य॥' इति देवीलाभप्राधान्यं निर्वाहितम्। **दिव्येति**। दिव्यः स्वभाव इत्यर्थः। एवं मनुष्यादिष्वपि व्याख्येयम्। तत्र दिव्या यथा—'स्मृत्वा यन्निजवारवासगतया वीणा समं तुम्बरोरुद्गीतं नलकूबरस्य विरहादुत्कण्ठसंरम्भया। तेनैरावणकर्णचापलमुखः शक्रोऽपि निद्रां जहद्भूयः कारित एव हासिनि शचीवक्त्रे दृशां संभ्रमम्॥' मानुषी यथा—'वधूः श्वश्रूस्थाने व्यवहरति पुत्रः पितृपदे पदे रिक्ते रिक्ते

---

१. 'त्कम्पवि' ध्वन्यालोकलोचने. २. 'दुग्धं' ध्वन्यालोकलोचने. ३. 'निशा' ध्वन्यालोकलोचने. ४. 'प्रयाणेऽन्तर्गूढां' ध्वन्यालोकलोचने. ५. 'विधुरं समुद्भिन्ना पीतैः' ध्वन्यालोकलोचने. ६. 'पुनः' ध्वन्यालोकलोचने. ७. 'मनसा', 'चलितैः' च ध्वन्यालोकलोचने. ८. 'स्तद्विभावौ' ध्व० लोचने. ९. 'प्रत्याहिवृत्त्या' ध्व० लोचने. १०. 'रूपा परमामभिलषणीयतमतां प्राप्ता वास' ध्व० लोचने. ११. 'ते' स्यात्.

मर्त्यपातालीया दिव्यपातालीया दिव्यमर्त्यपातलीया चेति सप्तधा। वीर-

---

विनिहितपदार्थान्तरमिति। नदीस्रोतोन्यायादकलितविवेकक्रमघनं न च प्रत्यावृत्तिः प्रवहति जगत्पूर्णमथ च॥' दिव्यामानुषी तु चतुर्धा। दिव्यस्य मर्त्यागमने मर्त्यस्य च स्वर्गगमने इत्येको भेदः। दिव्यस्य मर्त्यभावे मर्त्यस्य च दिव्यभाव इति द्वितीयः। दिव्येतिवृत्तपरिकल्पनया तृतीयः। प्रभावाविर्भूतदिव्यरूपतया चतुर्थः। तत्र दिव्यस्य मर्त्यागमनं यथा—'श्रियः पतिः श्रीमति शासितुं जगज्जगन्निवासो वसुदेवसद्मनि। वसन्ददर्शावतरन्तमम्बराद्धिरण्यगर्भाङ्गभुवं मुनिं हरिः॥' मर्त्यस्य स्वर्गमनं यथा—'पाण्डोर्नन्दन नन्दनं वनमिदं संकल्पजैः साधुभिः क्लृप्ता पानककेलिकल्पतरुषु द्वन्द्वैः सुधालेहिनाम्। अप्यत्रेन्दुशिलालवालवलयं संतानकानां तले ज्योत्स्नासंगलदच्छनिर्झरजलैर्यत्नं विना पूर्यते॥' दिव्यस्य मर्त्यभावो यथा—'विकसित[1]......तस्मिन्नन्तराये[2] यदूनां समजनि वसुदेवो देवकी यत्कलत्रम्। किमपर[थ]तस्मात्षोडशस्त्रीसहस्रप्रणिहितपरिरम्भः पद्मनाभो बभूव॥' मर्त्यस्य दिव्यभावो यथा—'आकाशयानतटकोटिकृतैकपादास्तद्देदमण्डयुगलान्यवलम्बहस्तैः। कौतूहलान्न च तरङ्गविघट्टितानि पश्यन्ति देवमनुजाः स्वकलेवराणि॥' दिव्येतिवृत्तपरिकल्पना यथा—'ज्योत्स्नापूरप्रसरविशदे सैकतेऽस्मिन्सरय्वा वारद्यूतं चिरतरमभूत्सिद्धयूनोः कयोश्चित्। एको ब्रूते प्रथमनिहतं कैटभं कंसमन्यः सत्त्वं[3] तत्त्वं कथय भवता को हतस्तत्र पूर्वम्॥' प्रभावाविर्भूतदिव्यभावो यथा—'मा गाः पातालमुर्वि स्फुरसि किमपरं पाद्यमानः कुदैत्यैस्त्रैलोक्यं पादपीतप्रथिमनहि बले पूरय स्फूतमङ्कैः। इत्युत्स्वप्रायमाने भुवनभृति दशावङ्कसुप्ते यशोदा पायाचक्राङ्कपादप्रणतिपुलकितस्मेरगण्डस्वभावः॥' पातालीया यथा—'कर्कोटः कोटिकृत्वः प्रणमति पुरतस्तक्षके देहि चक्षुः सक्तः सेवाञ्जलिस्ते कपिलकुलिकयोः स्तौति व[4]स्तवस्तिकस्त्वाम्। पद्मः सद्मैष भक्तेरवलगति पुनः कम्बलोऽयं बलोऽयं सोत्सर्पः सर्पराजो व्रजतु निजगृहं प्रेष्यतां शेषपालः[5]॥' मर्त्यः पातालीयो यथा—'आद्रावले व्रजत वेत्स्यप(?)कर्णकर्णद्भिः संदधाति निशिरं[6] हरशिष्यशिष्यः। तत्सांप्रतं समिति यस्य कुतूहलेन

---

१. 'विकसितरुचि', 'विकसति भुवि' वा स्यात्. २. 'न्नन्ववाये' स्यात्. ३. 'तत्त्वं तत्त्वं कथय भवता' स्यात्. ४. 'च स्वस्तिक' वाग्भटकाव्यानुशासने. ५. 'शङ्खपालः' वा० का०. ६. 'न शरं' स्यात्.

रौद्रशृङ्गारशान्तरसप्रधाना धीरोदात्तधीरोद्धतधीरललितधीरप्रशान्ता उत्तमाधममध्यमा च ।

तत्र रतिहासशोकाद्भुतानि मानुषोत्तमप्रकृतिवद्दिव्यादिष्वपि ।

---

मर्त्यैः शरैरपि किरीटकिरीटमाद्यम् ॥' इहापि दिव्यमानुषवन्मिथो भेदानुगमः ॥ दिव्यपातालीया यथा—'स पातु वो यस्य शिखा स्म कर्णिकं स्वदेहनालं फणपत्रसंचयम् । विभाति जिह्वायुगलोलकेसरं पिनाकिनः कर्णभुजङ्गपङ्कजम् ॥' दिव्यमर्त्यपातालीया यथा—'आस्तीकोऽस्ति मुनिः स विस्मयकृतः पारिक्षितीयान्मखात्त्राता तक्षकलक्ष्मणः फणभृतां वंशस्य शक्रस्य च । उद्वेल्लन्मलयाद्रिचन्दनलतास्वान्दोलनप्रक्रमे यस्याद्यापि सविभ्रमं फणिवधूवृन्दैर्यशो गीयते ॥' **धीरोदात्तेति** । धर्मयुद्धवीरप्रधानो धीरोदात्तः । धीरोद्धतादिषु त्रिष्वपि यथाक्रमं रौद्रशृङ्गारस्यान्तलक्षणो नियतरसः प्राधान्येऽपि अवश्यंभावित्वादुत्साहस्य वीररसप्राधान्यमपि प्रतिपत्तव्यम् । ततो वीररौद्रप्रधानो धीरोद्धतः । वीरशृङ्गारप्रधानो धीरललितः । दानधर्मवीरशान्तप्रधानो धीरप्रशान्त इति । ननु यद्युत्साहादिभाववर्णने कथंचिद्दिव्यमानुषादौचित्यपरीक्षा क्रियते । रत्यादौ तु किं तया प्रयोजनम् । रतिर्हि भारतवर्षोचितेनैव व्यवहारेण दिव्यानामपि वर्णनीयेति स्थितिः । तथा चाहुः—'कस्माद्भारतमिष्टं वर्षेष्वन्येषु देशविहितेषु । हृद्या सर्वा भूमिः शुभगन्धा काञ्चनी यस्मात् ॥ उपवनगमनक्रीडाविहारनारीरतिप्रमोदाः स्युः । तेषु च वर्षेषु सदा न तत्र दुःखं न वा शोकः ॥' इत्याशङ्क्याह—**मानुषोत्तमप्रकृतिवदिति** । न वयं दिव्यमौचित्यं शृङ्गारविषयमन्यत्किंचिद्ब्रूमः । किं तर्हि भारतवर्षेषु यथोत्तमनायकेषु राजादिषु शृङ्गारोपनिबन्धस्तथा दिव्याश्रयोऽपि शोभते । न च राजादिषु प्रसिद्धग्राम्यसंभोगोपवर्णनं प्रसिद्धं नाटकादौ तथैव दिव्येषु तत्परिहर्तव्यम् । नाटकादेरभिनेयत्वादभिनयस्य संभोगशृङ्गारविषयस्य सभ्यत्वात्तत्र परिहार इति चेत् । ननु यद्यभिनयस्यैवं विषयस्य सा केन वार्यते । तस्मादभिनेयार्थेऽनभिनेयार्थे च काव्ये यदुत्तमप्रकृते राजादेरुत्तमस्त्रीभिः सह ग्राम्यसंभोगवर्णनं तदसभ्यं तथैव दिव्यादिविषयम् । न च संभोगस्य सुरतलक्षण एवैकः प्रकारो यावत्, अन्येऽपि परस्परप्रेमदर्शनादयः प्रभेदाः संभवन्ति । त एव चोत्तमप्रकृतिविषये वर्णयितुमुचिताः । एवं

किं तु रतिः संभोगशृङ्गाररूपा उत्तमदेवताविषया न वर्णनीया । तद्वर्णनं हि पित्रोः संभोगवर्णनमिवात्यन्तमनुचितम् ।

यत्तु कुमारसंभवे हरगौरीसंभोगवर्णनं तत्कविशक्तितिरस्कृतत्वाद्ग्राम्यत्वेन न दोषत्वेन प्रतिभासते ।

क्रोधोऽपि भ्रुकुट्यादिविकारवर्जितः सद्यःफलदो निबद्धव्यः ।

यथा—

'क्रोधं प्रभो संहर संहरेति यावद्गिरः खे मरुतां चरन्ति ।
तावत्स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार ॥'

---

हासादिष्वप्यौचित्यं योज्यमिति । दिव्यादिषु रतेः संभोगविप्रलम्भोभयरूपाया वर्णनीयत्वेन सामान्येनाभिधाने उत्तमदेवताविषयत्वेनापि तथा प्रसक्तौ विशेषमाह—**किं त्विति** । संभोगः परस्परावलोकनप्रणयकलहसंगतकादिः । स चासौ शृङ्गारश्च तद्रूपा । **अनुचितमिति** । आस्वादयितॄणां हि यत्र चमत्काराविघातः तदेव रससर्वस्वम् । आस्वादयितृत्वात् उत्तमदेवतासंभोगपरामर्शे च पितृसंभोग इव लज्जातन्द्रादिना कश्चमत्कारावकाश इत्यर्थः ॥ **शक्तितिरस्कृतत्वादिति** । संभोगोऽपि ह्यसौ प्रतिभानवता कविना तथा वर्णितो यथा तत्रैव विश्रान्तं हृदयं पौर्वापर्यपरामर्शं कर्तुं न ददाति । यथा निर्व्याजपराक्रमस्य पुरुषस्याविषयोऽपि बुध्यमानस्य तावत्तस्मिन्नवसरे साधुवादो वितीर्यते, न तु पौर्वापर्यपरामर्शः । तथात्रापीति भावः । यदाह ध्वनिकारः—'अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः । यश्च[1] शक्तिकृतस्तस्य झगित्येवावभासते ॥' इति ॥ **अन्येष्विति** । दिव्यादिषु । तथा च केवलमनुष्यस्य[2] राजादेर्वर्णने सप्तार्णवलङ्घनादिलक्षणा व्यापारा उपनिबध्यमाना वर्णनामहिम्ना सौष्ठवभृतोऽपि नीरसा एव नियमेन भवन्ति[3] ॥ ननु नागलोकगमनादयः सातवाहनप्रभृतयः[4] श्रूयन्ते तदलोकसामान्यप्रभावातिशयवर्णने किमनौचित्यम् सर्वोर्वीभरक्षमाणां[5] भूभुजा-

---

१. 'स्त्वशक्तिकृतो दोषः स झटित्यव' ध्वन्यालोके. २. 'मानुषस्य' ध्वन्यालोके. ३. 'भान्ति' ध्वन्यालो०. ४. 'तीनाम्' ध्वन्यालो०. ५. 'क्षमा' ध्वन्यालो०.

स्वःपातालगमनसमुद्रलङ्घनादावुत्साहस्तु मानुषेभ्योऽन्येषु। मानुषेषु तु यावदवदानं प्रसिद्धम् उचितं वा, तावदेव वर्णनीयम्। अधिकं तु बध्यमानमसत्यप्रतिभासेन 'नायकवद्वर्तितव्यं न प्रतिनायकवत्' इत्युपदेशे न पर्यवस्येत्। एवमुक्तानां प्रकृतीनामन्यथावर्णनं व्यत्ययः।

तथा तत्रभवन् भगवन्निति उत्तमेन वाच्यम्, नाधमेन; मुनिप्रभृतौ, न राजादौ। भट्टारकेति न राजादौ। परमेश्वरेति न मुनिप्रभृतौ। प्रकृतिव्यत्ययापत्तेः।

यदाह—

'तत्रभवन्भगवन्निति नार्हत्यधमो गरीयसो वक्तुम्।
भट्टारकेति च पुनर्नैवैतानुत्तमप्रकृतिः॥
तत्रभवन्भगवन्निति नैवार्हत्युत्तमोऽपि राजानम्।
वक्तुं नापि कथंचन मुनिं च परमेश्वरेशेति॥'

---

मित्याशङ्क्याह—**मानुषेष्विति**। न वयं ब्रूमः यत्प्रभावातिशयवर्णनं न समुचितं राज्ञाम्, किं तु केवलम[1]नुष्याश्रयेण योत्पाद्यवस्तुकथा क्रियते तस्यां दिव्यादिकमौचित्यं न योजनीयम्। दिव्यमानुष्यां[2]दौ तु तद्योजनमविरुद्धमेव। यथा पाण्डवकथायाम्। सातवाहनादिषु तु येषु ह्य[4]वदानं श्रूयते तावदेवोपनिबद्धव्यमित्यर्थः॥ **अवदानमिति**। सातिशयं कर्म॥ **अधिकं त्विति**। अयमर्थः—यत्र च नेयानां प्रतीतिखण्डना न ज्ञायते तादृग्वर्णनीयम्। तत्र केवलमानुषस्य एकपदे सप्तार्णवलङ्घनसंभाव्यमानतया कृतमिति हृदये स्फुरदेषास्य चतुर्वर्गोपायस्याप्यलीकतां बुद्धौ निवेशयति। रामादेस्तु चरितं तथाविधमपि पूर्वप्रसिद्धपरम्परोचितसंप्रत्ययोपारूढं नासत्यतया चकास्ति। अत एव तस्यापि यदा प्रभावान्तरमुत्प्रेक्ष्यते तदा तादृशमेव न त्वसंभावनास्पदं वर्णनीयमिति॥

---

१. 'मनुचि' ध्वन्यालो०. २. 'मानुषा' ध्वन्यालो०. ३. 'षायां तु कथायामुभययोजन' ध्वन्यालो०. ४. 'यावदपदानम्' ध्वन्यालो०.

एवं देशकालवयोजात्यादीनां वेषव्यवहारादिसमुचितमेवोपनिबद्धव्यम् ।

---

देशकालवयोजात्यादीनामिति । तत्र जगदेकदेशश्च देशः । द्यावापृथिव्यात्मकमेकं जगदित्येके । 'हलमगु बलस्यैकोऽनड्वान्हरस्य न लाङ्गलं क्रमपरिमिता भूमिर्विष्णोर्न गौर्न च लाङ्गलम् । प्रभवति कृषिर्नाद्याप्येषां द्वितीयगवं विना जगति सकले नेदृग्दृष्टं दरिद्रकुटुम्बकम् ॥' दिवस्पृथिव्यौ द्वे जगती इत्यपरे । यथा—'रुणद्धि रोदसी चास्य यावत्कीर्तिरनश्वरी । तावत्किलायमध्यास्ते सुकृती वैबुधं पदम् ॥' स्वर्गमृत्युपातालभेदात्त्रीणि जगन्तीत्यपरे । यथा—'त्वमेव देव पातालमीशानां[1] त्वं निबन्धनम् । त्वं चामरमरुद्भूमिरेको लोकत्रयात्मकः[2] ॥' तान्येव भूर्भुवः स्वः इत्यन्ये । यथा—'नमस्त्रिभुवनाभोगधृतिखेदभरादिव । नाघनाघाङ्कपर्यङ्कशायिने[3] शार्ङ्गधन्विने ॥' महर्जनस्तपः सत्यमित्येतैः सह सप्तेत्यपरे । यथा—'संस्तम्भिनी पृथुनितम्बतटैर्धरित्र्याः संवाहिनी जलमुचां चलकेतुहस्तैः । हर्षस्य सप्तभुवनप्रथितोरुकीर्तेः प्रासादपङ्क्तिरियमुच्छिखरा विभाति ॥' तानि सप्तभिर्वायुस्कन्धैः सह चतुर्दशेति केचित् । यथा—'निरवधि च निराश्रयं च यस्य स्थितमनुवर्तितकौतुकप्रपञ्चम्[4] । प्रथम इह भवान्सर्वमूर्तिर्जयति[5] चतुर्दशलोकवल्लिकन्दः ॥' तानि सप्तभिः पातालैः सहैकविंशतिरिति केचित् । यथा—'हरहासहरावासहरहारनिभप्रभाः । कीर्तयस्तव लिप्सन्तु[6] भुवनान्येकविंशति ॥' सामान्यविवक्षा एकयति, विशेषविवक्षा त्वनेकयतीति सर्वमुपपन्नम् । तत्र भूर्लोकः पृथ्वी, तत्र च सप्त महाद्वीपाः 'जम्बूद्वीपः सर्वमध्ये ततश्च प्लक्षो नाम्ना शाल्मलोऽतः कुशोऽतः[7] । क्रौञ्चः शाकः[8] पुष्करश्चेत्यथैषां बाह्या बाह्या संस्थितिर्मण्डलीभिः ॥' 'लावणो रसमयः सुरोदकः[9] सार्पिषो दधिजलः पयःपयाः । स्वादुवारिरुदधिश्च सप्तमस्तान्परीत्य त इमे व्यवस्थिताः ॥' एक एवायं लावणः समुद्र इत्येके । यथा—'द्वीपान्यष्टादशात्र क्षितिरपि नवभिर्विस्तृतास्वाङ्ग[10]खण्डैरेकाम्भोधिर्दिगन्तप्रसृमरसलिलः प्राज्यमेतत्सुराज्यम् । [11]तस्मिन्न-

---

१. 'मा' का० प्र०. २. 'यसे' का० प्र०. ३. 'नागनाथाङ्क' स्यात्. ४. 'नि' का० प्र०. ५. 'न्स कूर्म' का० प्र०. ६. 'लिम्पन्तु' वा० का०. ७. 'कुशो' स्यात्. ८. 'शाकः' वा० का०. ९. 'दकः' वा० का०. १०. 'स्वा' वा० का०. ११. 'कस्मिन्नव्याज' वा० का०.

प्याजिकेलिव्यतिकरविजयोपार्जिते वीरवर्ये पर्याप्तं मे न दातुस्तदिदमिति धिया वेधसे यश्चुकोप ॥' त्रय इत्यन्ये । यथा—'आकम्पितक्षितिभृता महता निकामं हेलाभिभूतजलधित्रितयेन यस्य । वीर्येण संहतिभिदा विहितोन्नतेन कल्पान्तकालविसृतः पवनोऽनुचक्रे ॥' चत्वार इत्यपरे । यथा—'चतुःसमुद्रवेलोर्मिरचितैकावलीलतम् । मेरुमप्यद्रिमुल्लङ्घ्य यस्य क्वापि गतं यशः ॥' सप्तेत्यन्ये । यथा—'अगस्त्यचुलकोत्क्षिप्तसप्तवारिधिवारिणि । मुहूर्तं केशवेनापि तरता पूतरायितम् ॥' (?) कविप्रसिद्ध्या वा विमृष्टपरमार्थं सर्वमुपपन्नम् । 'मध्ये जम्बूद्वीपमाद्यो गिरीणां मेरुर्नाम्ना काञ्चनः शैलराजः । यो मूर्तानामौषधीनां निधानं यश्चावासः सर्ववृन्दारकाणाम् ॥' 'तमेनमवधीकृत्य ब्रह्मणा पुण्यकर्मणा । तिर्यगूर्ध्वमधस्ताच्च विश्वस्य रचना कृता ॥' मेरोश्चतुर्दिशमिलावृतं वर्षम् । तच्चोत्तरेण त्रयो वर्षगिरयः । नीलः श्वेतः शृङ्गवांश्च । रम्यकं हिरण्मयमुत्तराः कुरव इति च क्रमेण त्रीणि तेषां वर्षाणि । दक्षिणेनापि त्रय एव । निषधो हेमकूटो हिमवांश्च । हरिवर्षं किंपुरुषं तारतमिति[2] त्रीणि वर्षाणि । तत्रेदं भारतवर्षमन्त्यम् । अस्य च नवभेदाः—इन्द्रद्वीपः कसेरुमांस्ताम्रपर्णो गभस्तिमान् नगद्वीपः सौम्यो गन्धवो[3] वरुणः कुमारीद्वीपश्च । पञ्च शतानि जलं पञ्च स्थलमिति विभागेन प्रत्येकं योजनसहस्रावधेयो दक्षिणात्समुद्राद्धिमवन्तं यावत्परस्परमगस्य स्थानान्येतानि योजयति स सम्राडित्युच्यते । कुमारीपुरात्प्रभृति बिन्दुसरोवधि बीजनानां दशशती चक्रवर्तिक्षेत्रम् । तां विजयमानश्चक्रवर्ती भवति । चक्रवर्तिचिह्नानि तु—'चक्रं रथो मणिर्भार्या निधिरश्वो गजस्तथा । प्रोक्तानि सप्त रत्नानि सर्वेषां चक्रवर्तिनाम् ॥' कुमारीद्वीपाच्च—'विन्ध्यश्च पारियात्रश्च शुक्तिमानृक्षपर्वतः । महेन्द्रसह्यमलयाः सप्तैते कुलपर्वताः ॥' तत्र विन्ध्यादयः प्रतीतस्वरूपाः । मलयविशेषास्तु चत्वारः । तेषु प्रथमो यथा—'आ मूलयष्टेः फणिवेष्टितानां सचन्दनानां जननन्दनानाम् । कक्कोलकैलामरिचैर्वृतानां जातीतरूणां च स जन्मभूमिः ॥' द्वितीयः—'यस्योत्तमां मौक्तिककामधेनुरुपत्यकामर्चति ताम्रपर्णी । रत्नेश्वरो रत्नमहानिधानं कुम्भोद्भवस्तं मलयं पुनाति ॥' 'यत्र द्रुमा विद्रुमनामधेया वंशेषु मुक्ताफलजन्म तत्र । मदोत्कटैः केसरिकण्ठनादैः स्फुटन्ति तस्मिन्घनसारवृक्षाः ॥' तृतीयः—'विलासभूमिः सकलामराणां पदं नृणां गोर्मुनिपुंगवस्य । तदा फलैः पुष्पलतावितानैराश्चर्यमूलं मलयः स तत्र ॥' चतुर्थः—'सा तत्र चामीकररत्न-

१. 'वीरचर्ये' वा० का. २. 'भारत' स्यात्. ३. 'गन्धर्वो' स्यात्.

चित्रैः प्रासादमालावलभीविटङ्कैः । द्वारार्गलाबद्धसुरेश्वराङ्का लङ्केति या रावणराजधानी ॥' 'प्रवर्तते कोकिलनादहेतुः पुष्पप्रसूः पञ्चमजन्मदायी । तेभ्यश्चतुर्भ्योऽपि वसन्तमित्रमुदङ्मुखो दक्षिणमातरिश्वा ॥' पूर्वापरयोः समुद्रयोर्हि[1]मवन्ध्यद्वयोश्चान्तरमार्यावर्तः । तस्मिंश्चातुर्वर्ण्यं चातुराश्रम्यं च तन्मूलश्च सदाचारः । तत्रत्यो व्यवहारः प्रायेण कवीनाम् । तत्र वाराणस्याः परतः पूर्वदेशः । यत्राङ्गकलिङ्गकोसलतोसलोकै[2]लमगरमधकविदेहनेपालपुण्ड्रप्राग्ज्योतिषतौ[3]मलिप्तकमलै[4]जदमल्लवर्तकसुह्मब्रह्मोत्तरप्रभृतयो जनपदाः । बृहद्गेहलोहितगिरचकोरदर्दुरनेपालकामरूपादयः पर्वताः । शोणलौहित्यौ नदौ । गङ्गाकरतोयाकै[5]लपमाद्याश्च नद्यः । लवलीग्रन्थिपर्णि[6]कागुरुद्राक्षाकस्तूरिकादीनामुत्पादः । मै[7]हिष्मत्याः पुरतो दक्षिणापथः । यत्र महाराष्ट्रमाहिष्मकाश्मकवैदर्भकुन्तलक्रथकैशिकर्स्तर्षा[8]रककाञ्चिकीरं[9]लिकावेरमुरलवानवासकर्णिसिंहलवो[10]षंदण्डकपाण्ड्यपल्लवगाङ्गनासिक्यकोङ्कं[11]णगिरिवेल्लरप्रभृतयो जनपदाः । विन्ध्यदक्षिणपदे माहेन्द्रमलयमेकलपालमञ्जरसह्यश्रीपर्वतादयः पर्वताः। नर्मदातापीपयोष्णीगोदावरीकावेरीभैमर[12]थीवेणीवञ्ज[13]रातुङ्गभद्राताम्रपर्णीपलावतीरावणगङ्गाद्या नद्यः । तदुत्पत्तिर्मलयोत्पत्ति[14]र्व्याख्याता । वेसं[15]भायाः परतः पश्चाद्देशः । तत्र देशसभसुराष्ट्रदाशेरकत्रवणभृगुकच्छकच्छीयानर्तार्बुदब्राह्मणवाहं[16]जवनप्रभृतयो जनपदाः । गोवर्धनगिरिनगरदेवसभ्यमालशिखिरार्बुदादयः पर्वताः । सरस्वतीशुभ्रवतीवार्तघ्नीमहीहिण्डिवाद्यानद्यः । करीरपीलुगुग्गलुखर्जूरकरभादीनामुत्पादः । पृथूदकात्परत उत्तरापथः । यत्र शककेकयावोक्काणहूणवनायुजकम्बोजवाल्हीकबहूबलैं[17]स्यातकुलूतकीरतङ्गणतुवारतुर्[18]रक्कवर्वरहरहूरहुहुकसरुडहंसमार्गरमठकरकण्ठं[19]प्रभृतयो जनपदाः । हिमालयजालन्धरकलिन्द्रेन्द्रकीलचैं[20]ण्डाचलादयः पर्वताः । गङ्गासिन्धुसरस्वतीशतद्रुचन्द्रभागायमुनैरावतीवितस्ताविपाशाकुहूदेविकाद्या नद्यः । सरलदेवदारुद्राक्षाकुङ्कुमचमराजिनसौशीरस्रोतोञ्जनसैन्ध-

---

१. 'मवद्विन्ध्ययो' वा० का०. २. 'लोत्कलमगधमुद्गर' वा० का०. ३. 'ताम्र' वा० का०. ४. 'लदलमल्लर्तकसुब्रह्म' वा० का०. ५. 'कपिशाद्या' वा० का०. ६. 'पर्णायु' वा०का०. ७. 'मा' वा० का०. ८. 'सूर्पा' वा०का०. ९. 'केरल' वा० का०. १०. 'चोड' वा० का०. ११. 'कोल्ल' इति पाठोऽधिकः वा० का०. १२. 'भी' वा०का०. १३. 'जम्बुरा' वा०का० १४. 'त्या' वा०का० १५. 'देवसभा' वा० का०. १६. 'हययवन' वा० का०. १७. 'हहवलम्पाक' वा० का०. १८. 'तुरुष्क' वा० का०. १९. 'ण्ड' वा० का०. २०. 'चन्द्र' वा० का०.

ववैडूर्यतुरगाणामुत्पादः। तेषां मध्ये मध्यदेश इति व्यवहार इति। यदाहुः—'हिमवद्विन्ध्ययोर्मध्ये यत्प्राग्विनशनादपि। प्रत्यगेव प्रयागाच्च मध्यदेशः स कीर्तितः॥' तत्र ये देशाः पर्वताः सरितो द्रव्याणामुत्पादश्च तत्प्रसिद्धमिति न निर्दिष्टम्। 'द्वीपान्तराणां ये देशाः पर्वताः सरितस्तथा। नातिप्रयोज्याः कविभिरिति गाढं न चिन्तिताः॥' विनशनप्रयागयोर्गङ्गायमुनयोश्चान्तरमन्तर्वेदी। तदपेक्षया दिशो विभजेतेति केचित्। तत्रापि महोदयं मूलमवधीकृत्य दिशो विभजेत्। प्राच्यवाचीप्रतीच्युदीची चतस्रो दिश इत्येके। यथा—'चतसृष्वपि दिक्षु [1]राणद्विषतः प्रति येन चित्रचरितेन। विहितमपूर्वमदक्षिणमपश्चिममनुत्तरं कर्म॥' ऐन्द्र्याग्नेयी याम्या नैर्ऋती वारुणी वायवी कौबेर्यैशानी चाष्टौ दिश इत्यन्ये। यथा—'एकं ज्योतिर्दृशौ द्वे त्रिजगति गदितान्यब्जजास्यैश्चतुर्भिर्भूतानां पञ्चमं यान्यलमृतुषु तथा [2]षण्मुनीनां विधानि। युष्माकं तानि सप्तत्रिदशमुनिनुतान्यष्टदिग्[3]भाजि भानोर्यान्ति प्राह्णे नवत्वं दश दधतु शिवं दीधितीनां शतानि॥' ब्राह्मी नागीया च द्वे, ताभ्यां सह दशेत्यपरे। यथा—'दशदिकूटपर्यन्तसीमसंकटभूमिके। विषमास्थूलनक्षस्य (?) ब्रह्माण्डग्रामके स्थितिः॥' सर्वमस्तु विवक्षापरतन्त्रा हि दिशामियत्ता। तत्र चित्रास्वात्यन्तरे प्राची। तदनुसारेण प्रतीची। ध्रुवेण उदीची। तदनुसारेणापाची। अन्तरेषु विदिशः। ऊर्ध्वं ब्राह्मी। अधस्तान्नागीया चेति। द्विधा च दिग्व्यवहारः कवीनां प्राक् सिद्धो विशिष्टस्थानावधिसाध्यः। तत्र प्राक् सिद्धे प्राची—'द्वित्रैर्व्योम्नि पुराणमौक्तिकमणिच्छायैः स्थितं तारकैर्ज्योत्स्नापानभरालसेन वपुषा सुप्ताश्चकोराङ्गनाः। यातोऽस्ताचलचूलमुद्वसमधुच्छत्रच्छविश्चन्द्रमाः प्राची बालबिडाललोचनरुचां जाता च पात्रं ककुप्॥' दक्षिणा—'दक्षिणो दक्षिणामाशां जिज्ञासन्सोऽधिकं बभौ। जिहासन्दक्षिणामाशां भगवानिव भास्करः॥' पश्चिमा—'यस्य पश्चिमदिगन्तलम्बिना निर्मितं मितकषे विवस्वता। दीर्घया प्रतिमया सरोम्भसस्तापनीयमिव सेतुबन्धनम्॥' उत्तरा—अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः। पूर्वापरौ तोयनिधी वगाह्य स्थितः पृथिव्या इव मानदण्डः॥' विशिष्टस्थानावधौ तु दिग्विभागे पूर्वपश्चिमौ—'यादांसि हे चरत संगतगोत्रतन्त्रं पूर्वेण चन्दनगिरेरुत पश्चिमेन। नो चेन्निरन्तरधराधरसेतुसूतिराकल्पमेष न विरंस्यति वा वियोगः॥'

---

१. 'राग' इति स्यात्. २. 'षट्सु ननाङ्कि' का० का०. ३. 'भाजि' वा० का०.

दक्षिणोत्तरौ यथा—'काञ्च्याः पुरो दक्षिणदिग्विभागे तथोत्तरस्यां दिशि वारिराशेः। कर्णान्तवक्रीकृतपुष्पचापो रत्या समं साधु वसत्यनङ्गः ॥' उत्तरादावप्युत्तरदिगभिधानमनुत्तरादावप्युत्तरदिगभिधानं च। तयोः प्रथमम्—'तत्रागारं धनपतिगृहानुत्तरेणास्मदीयं दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेन। यस्योद्याने कृतकतनयः कान्तया वर्धितो मे हस्तप्राप्यस्तबकविनतो बालमन्दारवृक्षः ॥' द्वितीयम्—'सह्याद्रेरुत्तरे भागे यत्र गोदावरी नदी। पृथिव्यामिह कृत्स्नायां स प्रदेशो मनोरमः ॥' एवं दिगन्तरेष्वपि। तत्र देशपर्वतनद्यादीनां दिशां च यः क्रमस्तं तथैव निबध्नीयात्। साधारणं तूभयत्र लोकप्रसिद्धितश्च। तद्वद्वर्णनियमः। तत्र प्राच्यानां श्यामो वर्णः—'श्यामेष्वङ्गेषु गौडीनां सूत्रहारैकहारिषु। वक्रीकृत्य धनुः पौष्पमनङ्गो वल्गु वल्गति ॥' दाक्षिणात्यानां कृष्णो यथा—'इदं भासां भर्तुर्द्रुतकनकगोलप्रतिकृतिक्रमान्मन्दज्योतिर्गलति नभसो बिम्बवलयम्। अथैष प्राचीनः सरति मुरलीगण्डमलिनस्तरुच्छायाचक्रैः स्तबकित इव ध्वान्तविसरः ॥' पाश्चात्यानां पाण्डुर्यथा—'शाखास्मेरं मधुकवलना केलिलोलेक्षणानां भृङ्गस्त्रीणां बकुलमुकुलं कुन्तलीभावमेति। किं चेदानीं यवनतरुणीपाण्डुगण्डस्थलीभ्यः कान्तिः स्तोकं रचयति पदं नागवल्लीदलेषु ॥' उदीच्यां गौरो यथा—'काश्मीरीगात्रलेखासु लोलल्लावण्यवीचिषु। द्रावयित्वेव विन्यस्तं स्वर्णं षोडशवर्णिकम् ॥' मध्यदेश्यानां कृष्णः श्यामो गौरश्च। कृष्णो यथा—'युधिष्ठिरक्रोधवह्नेः कुरुवंशैकदाहिनः। पाञ्चालीं ददृशुः सर्वे कृष्णां धूमशिखामिव ॥' एवं श्यामोऽपि। नवकविमार्गे कृष्णश्यामयोः पाण्डुगौरयोर्वा महान् विशेष इति। गौरो यथा—'तव नवनवनीतपिण्डगौरे प्रतिफलदुत्तरकोसलेन्दुपुत्रि। अवगतमलिके मृगाङ्कबिम्बं मृगमदपत्रनिभेन लाञ्छनेन ॥' विशेषस्तु पूर्वदेशराजपुत्र्यादीनां गौरः पाण्डुर्वा वर्णः—'कपोले जानक्याः करिकलभदन्तद्युतिमुखि स्मरस्मेरं गण्डोड्डमरपुलकं वक्त्रकमलम्। मुहुः पश्यञ्छृण्वन् जनकवरसेनाकलकलं जटाजूटग्रन्थिं द्रढयति रघूणां परिवृढः ॥' यथा च—'तासां माधवपत्नीनां सर्वासां चन्द्रवर्चसाम्। शब्दविद्येव विद्यानां मध्ये जज्वाल रुक्मिणी ॥' एवमन्यदपि यथासंभवमूह्यम् ॥ **कालः** काष्ठादिभेदभिन्नः। तथा च—'काष्ठा निमेषा दश पञ्च चैव त्रिंशच्च काष्ठाः कथिताः कलास्तु। त्रिंशत्कलश्चैव भवेन्मुहूर्तस्तैस्त्रिंशता रात्र्यहनी समेते ॥' ते च चैत्राश्वयुजमासयोर्भवतः।

---

१ 'गच्छ' वा० का.

चैत्रात्परं प्रतिमासं मौहूर्तिकी दिवसवृत्तिर्निशाहानिश्च त्रिमास्याः । ततः परं मौहूर्तिकी निशावृद्धिर्दिवसहानिश्च । आश्वयुजात्परतः प्रसरे तदेव विपरीतम् । राशितो राश्यन्तसंक्रमणमुष्णभासो मासः । वर्षादि दक्षिणायनम् । शिशिराद्युत्तरायणम् । द्व्ययनः संवत्सरः इति सौरं मानम् । पञ्चदशाहोरात्रः पक्षः । वर्धमानसोमशुक्लिमा शुक्लः, वर्धमानसोमकृष्णिमा कृष्ण इति पित्र्यं मासमानम् । अधुना च वेदादितः कृत्स्नापि क्रिया कल्पः । पित्र्यमेव व्यत्ययितपक्षं चान्द्रमसम् । इदमार्यावर्तवासिनः कवयश्च मानमाश्रिताः । एवं द्वौ पक्षौ मासः । द्वौ मासावृतुः । षण्णामृतूनां परिवर्तः संवत्सरः । स च चैत्रादिरिति दैवज्ञाः । श्रावणादिरिति लोकयात्राविदः । तत्र नभानभस्यश्च वर्षाः । यथा—'गर्भं बलाकासु निवेशयन्तो वंशाङ्कुरास्त्वैर्निनदैर्व्रजन्तः । रजोम्बुदाः प्रावृषि मुद्रयन्तो यात्रोद्यमं भूमिभृतां हरन्ति ॥' 'सशल्लकीशालशिलीन्ध्रयूथीप्रसूनदः पुष्पितलाङ्गलीकः । दग्धोर्वरासुन्दरगन्धबन्धुरर्थ्यस्त्वयं वारिमुचामनेहा ॥' 'वनानि नीलीदलमेचकानि धाराम्बुधौता गिरयः स्फुरन्ति । पूराम्भसा भिन्नतटास्तटिन्यः सान्द्रेन्द्रगोपानि च शाड्वलानि ॥' 'चकोरहर्षी यतिचारचौरो वियोगिनीवीक्षितनाथवर्त्मा । गृहान्प्रति प्रस्थितपान्थसार्थः कालोऽयमाम्रातनभाः पयोदैः ॥' 'या केलियात्रा किल कामिनीभिर्या तुङ्गहर्म्याग्रविलासशय्या । चतुःसमं यन्मृगनाभिगर्भं सा वारिदर्तोः प्रथमातिथेयी ॥' 'चलच्चटुलचातकः कृतकुरङ्गरागोदयः सदर्दुररवोद्यमो मदभरप्रगल्भोरगः । शिखण्डिकुलताण्डवामुदितमुद्रकङ्काह्वयो वियोगिषु घनागमः स्मरविषं विषं मुञ्चति ॥' 'दलत्कुटजकुड्मलः स्फुटितनीपपुष्पोत्करो नवप्रसवबान्धवः प्रथितमञ्जरीकं जनः । कदम्बकलुषाम्बरः कलितकेतकीकोरकश्चलन्निचुलसंचयो हरति हन्त घर्मात्ययः ॥' तत्र पाश्चात्यः पौरस्त्यो वा वायुरिति समयः । यथा—'प्रावृष्यम्भोभृताम्भोदभरनिर्भरमम्बरम् । कदम्बकुसुमामोदा वायवो वान्ति वारुणाः ॥' यथा च—'पौरस्त्यस्तोयदर्तोः पवन इव पतत्पावकस्येव धूमो विश्वस्येवादिसर्गः प्रणव इव परं पावनं वेदराशेः । संध्यावृत्तोत्सवेच्छोरिव मदनरिपोर्नन्दिनान्दीनिनादः सौरस्याग्रे सुखं वो वितरतु वनितानन्दनः स्यन्दनस्य ॥' इष ऊर्षश्च शरत् । यथा—'प्रोन्मादयन्ती विमदान्मयूरान्प्रगल्भयन्ती कुररद्विरेफान् । शर-

१. 'राश्यन्तरसं' स्यात्. २. 'ऊर्जे' स्यात्. ३. 'मयूराणां मदापनोदः' वाग्भटकाव्यानुशासनात्; 'प्रोत्सारयन्ती' स्यात्.

त्समभ्येति विकाश्य पद्मानुन्मूलयन्ती कुमुदोत्पलानि ॥' 'सा भाति पुष्पाणि विशेषयन्ती बन्धूकबाणासनकुङ्कुमेषु। शेफालिकासप्तपलाशकाशभाण्डीरसौगन्धिकमालतीषु ॥' 'सखञ्जरीटा सपयःप्रसादा सा कस्य नो मानसमाच्छिनत्ति। कादम्बकारण्डवचक्रवाकससारसक्रौञ्चकुलानुयाता ॥' 'उपानयन्ती कलहंसयूथमगस्तिदृष्ट्या पुनती पयांसि। मुक्तासु शुभ्रं दधतीव गर्भं शरद्विचित्रैश्चरितैश्च कास्ति ॥' 'क्षितिं खनन्तो वृषभाः खुराग्रै रोधो विषाणैर्द्विरदा रदन्तः। शृङ्गं त्यजन्तो रुरवश्च जीर्णं कुर्वन्ति लोकानवलोकनोत्कान् ॥' 'अत्रावदातद्युतिचन्द्रिकाम्बुनीलावभासं च नभः समन्तात्। सुरेभवीथीदिवसावतारा जीर्णाभ्रखण्डानि च पाण्डुराणि ॥' 'महानवम्यां निखिलास्त्रपूजा नीराजना वाजिभटद्विपानाम्। दीपालिकायां विविधा विलासा यात्रोन्मुखैरत्र नृपैर्विधेयाः ॥' 'व्योम तारतरतारकोत्करं स्यन्दनप्रवरणक्षमा मही। भास्करः शरदि दीप्तदीधितिर्बुध्यते च सह माधवः सुरैः ॥' 'केदार एव कलमाः परिणामनम्राः प्राचीनमामलकमर्थति पाकनीलम्। एर्वारुकं स्फुटननिर्गतगर्भगन्धमम्लीभवन्ति च जरत्रपुसीफलानि ॥' 'गेहाजिरेषु नवशालिकणावपातगन्धानुभावसुभगेषु कृषीवलानाम्। आनन्दयन्ति मुसलोल्लसनावधूतपाणिस्खलद्वलयपद्धतयो वधूट्याः ॥' 'तीक्ष्णं रविस्तपति नीच इवाचिराढ्यः शृङ्गं रुरुस्त्यजति मित्रमिवाकृतज्ञः। तोयं प्रसीदति मुनेरिव धर्मचित्तं कामी दरिद्र इव शोषमुपैति मेघः ॥' 'नद्यो वहन्ति कुटिलक्रमयुक्तशुक्तिरेखाङ्कबालपुलिनोदरसुप्तकूर्माः। अस्यां तरङ्गितनुतोयपलायमानमीनानुसारिबकदन्तकरालफालाः ॥' 'अपङ्किलतटावटः शफरफाण्टफालोज्ज्वलः पतत्कुररकातरभ्रमदद‌भ्रमीनभ्रमः। लुठत्कमठसैकतश्चलबकोटवाचाटितः सरित्सलिलसंचयः शरदि मेदुरः सीदति ॥' वायुश्चात्रानियतदिक्कः। यथा—'उषःसु वधुरा(?)कृष्टा जडावश्यायशीकराः। शेफालीकलिकाकोशकषायामोदिनोऽनिलाः ॥' सह्यः सहस्यश्च हेमन्तः। यथा—'द्वित्रिमुचुकुन्दकलिकस्त्रिचतुरमुकुलः क्रमेण लवलीषु। पञ्चषफलिनीकुसुमो जयति हिमर्तुर्नवावतरः ॥' 'पुन्नागरोध्रप्रसवावतंसा वामभ्रुवः कञ्चुककुञ्चिताङ्गाः। वक्त्रोल्लसत्कुङ्कुमसिक्थकाढ्याः सगन्धतैलाः कबरीर्वहन्ति ॥' 'यथा यथा पुष्यति शीतकालस्तुषारचूर्णोत्करकीर्णवातः। तथा तथा यौवनशालिनीनां कवोष्णतामत्र कुचा लभन्ते ॥' 'वराहवध्राणि नवोदनानि दधीनि संनद्धरसानि चात्र। सुकोमलाः सर्षपकन्दलीश्च भुक्त्वा जनो निन्दति

---

१. 'विकास्य पद्मान्यु' स्यात्. २. 'लोध्र' इति स्यात्.

वैद्यविद्याम् ॥' 'अत्रोपचारः सलिलैः कवोष्णैर्यत्किंचिदत्र स्वदतेऽन्नपानम्। सुदुर्भगामत्र निपीड्य शेते स्वस्थस्तु नित्यं तु हिमर्तवेऽस्मै ॥' 'विमुक्तबर्हा विमदा मयूराः प्ररूढगोधूमयवा च सीमा। व्याघ्रीप्रसूतिः सलिलं सबाष्पं हेमन्तलिङ्गानि जयन्त्यमूनि ॥' 'सशमीधान्यपाकानि क्षेत्राण्यत्र हरन्ति च। त्रिशङ्कुतिलका रात्र्यः पच्यन्ते लवणानि च ॥' 'उद्यानानां मूकपुंस्कोकिलत्वं भृङ्गस्त्रीणां मौनमुद्रा मुखेषु। मन्दोद्योगा पक्षिणां व्योमयात्रा हेमन्ते स्यात्सर्पदर्पक्षयश्च ॥' 'कर्कन्धूनां नागरङ्गीफलानां पाकोद्रेकः खाण्डवोऽप्याविरस्ति। कृष्णेक्षूणां पुण्ड्रकाणां च गर्भे माधुर्यश्रीर्जायते चाप्यपूर्वा ॥' 'येषां मध्ये मन्दिरं तल्पसंपत्पार्श्वे दाराः स्फारतारुण्यसाराः। लीलावह्निर्निह्नुतोद्दामधूमस्ते हेमन्तं ग्रीष्मशेषं विदन्ति ॥' वायुरत्रोदीच्यः पाश्चात्यो वा। यथा—'लम्पाकीनां किरन्तश्चिकुरविरचनां रल्लकांल्लासयन्तश्चुम्बन्तश्चन्द्रभागां विचितसुमनसः कुङ्कमान्कम्पयन्तः। एते कस्तूरिकैणप्रणयसुरभयो वल्लभा बाह्लवीनां कौलूतीकेलिकाराः परिचयितहिमं वायवो वान्त्युदीच्याः ॥' यथा च—'भञ्जन्भूर्जद्रुमालीस्तुहिनगिरितटेषूद्गतत्वत्करालाः रेवाम्भःस्थूलवीचीचयचकितचलच्चातकं व्याधुनानः। पाश्चात्यो वाति वेगाद्द्रुततुहिनशिलाशीकरासारवर्षं मातङ्गक्षुण्णसान्द्रस्रुतसरलसरत्सारसारी समीरः ॥' तपस्तपस्यश्च शिशिरः। स च हेमन्तधर्म एव। विशेषस्तु—'रात्रिर्विचित्रसुरतोचितयामदैर्घ्या चण्डो मरुद्दहति कुङ्कमपङ्कसाध्यः। तल्पस्थितिर्द्विगुणतूलपटा किमन्यदर्थन्ति चात्र विततागुरुधूपधूमाः ॥' 'आश्लेषिताः पृथुरतक्लमपीतशीतमायामिनीं घनमुदो रजनीं युवानः। उर्वोर्मुहुर्वलनबन्धनसंधिलोलपादान्तसंवलिततूलपटाः स्वपन्ति ॥' 'पानेऽम्भसोः सुरसनीरसयोर्न भाति स्पर्शक्रियासु तुहिनानलयोर्न चात्र। नो दुर्भगासुभगयोः परिरम्भणे वा नासेवने च शशिभास्करयोर्विशेषः ॥' 'पुष्पक्रिया मरुबके जलकेलिनिन्दा कुन्दान्यशेषकुसुमेषु धुरि स्थितानि। सौभाग्यमेणतिलकाद्व्रजतेऽर्कबिम्बं काले तुषारिणि दहन्ति च चन्दनानि ॥' 'सिद्धार्थयष्टिषु यथोत्तरहीयमानसंतानभिन्नघनसूचिपरम्परासु। द्वित्रावशेषकुसुमासु जनिक्रमेण पाकक्रमः कपिशिमानमुपादधाति ॥' 'उदीच्यचण्डानिलताडितासु निलीनमीनासु जलस्य मूले। नालावशेषाब्जलतास्विदानीं विलासवापीषु न याति दृष्टिः ॥' 'माद्यन्मतङ्गः पृषतैकतोषी पुष्यद्वराहो धृतिमल्लुलायाः। दरिद्रनिन्द्यः सधनैकनिन्द्यः स एष कालः शिशिरः करालः ॥' 'अति-

१. 'रनिन्द्य' स्यात्.

नववधूरोषस्वादुः करीषतनूनपादसरलजनाश्लेषक्रूरस्तुषारसमीरणः। गलितविभवस्याज्ञेवाद्य द्युतिर्मसृणा रवेर्विरहिवनितावक्त्रौपम्यं बिभर्ति निशाकरः॥' 'स्त्रियः प्रकृतिपित्तलाः कथितकुङ्कुमालेपनैर्नितम्बफलकस्तनस्थलभुजोरुमूलादिभिः। इहाभिनवयौवनाः सकलरात्रिसंश्लेषितैर्हरन्ति शिशिरज्वरा रतिमतीव पृथ्वीमपि॥' मधुर्माधवश्च वसन्तः। यथा—'चैत्रे मदर्धिः शुकसारिकाणां हारीतदात्यूहमधुव्रतानाम्। पुंस्कोकिलानां सहकारबन्धुर्मदस्य कालः पुनरेष एव॥' 'मनोऽधिकं चात्र विलासलास्ये प्रेङ्खासु दोलासु च सुन्दरीणाम्। गीते च गौरीचरिता वसन्ते पूजाप्रपञ्चे च मनोभवस्य॥' 'पुंस्कोकिलः कूजति पञ्चमेन बलाद्विलासा युवतेः स्फुरन्ति। स्मरो वसन्तेऽत्र नवैः प्रसूनैः स्वचापयष्टेर्घटनां करोति॥' 'पिनद्धमाहारजतांशुकानां सीमन्तसिन्दूरजुषां वसन्ते। स्मरीकृते प्रेयसि भक्तिभाजां विशेषवेषः स्वदते वधूनाम्॥' 'अयं प्रसूनोद्धुरकर्णिकारः पुष्पप्रपञ्चाञ्चितकाञ्चनारः। विजृम्भणाकोविदकोविदारः कालो विकासोद्धतसिन्धुवारः॥' 'रोहीतकाम्रातककिंकिराता मधूकमोचा सह माधवीभिः। जयन्ति शोभां जनकश्च शाखी सशेखरः पुष्पभरैर्वसन्ते॥' 'यो माधवीमुकुलदृष्टिषु वेणिबन्धो यः कोकिलाकलरुतेः कथने च लाभः। पूजाविधिर्दमनकेन च यः स्मरस्य तस्मिन्मधुः स भगवान्गुरुरङ्गनानाम्॥' 'नालिङ्गितः कुरबकस्तिलको न दृष्टो नो ताडितश्च चरणैः सुदृशामशोकः। सिक्तो न वक्त्रमधुना बकुलश्च चैत्रे चित्रं तथापि भवति प्रसवावकीर्णः॥' 'चैत्रे चित्रौ रक्तनीलावशोकौ स्वर्णाशोकस्तत्तृतीयश्च पीतः। जैत्रं तन्त्रं तत्प्रसूनान्तरेभ्यश्चेतोयोनेर्भूर्भुवःस्वस्त्रयेऽपि॥' 'गूवाकानां नालिकेरीद्रुमाणां हिन्तालानां पाटलीकिंशुकानाम्। खर्जूरीणां तालताडीतरूणां पुष्पापीडन्यासहेतुर्वसन्ते॥ वायुश्चात्र दक्षिणः। यथा—'चुम्बंल्लङ्कावनालीर्मुहुरलकलता लासयन्केरलीनामान्ध्रीधम्मिल्लबन्धान्सपदि शिथिलयद्वेल्लयन्नागवल्लीः। उद्दामं दाक्षिणात्यो मलितमलयजः सारथिर्मीनकेतोः प्राप्तः सीमन्तिनीनां मधुसमयसुहृन्मानचौरः समीरः॥' शुक्रः शुचिश्च ग्रीष्मः। यथा—'विकासकारी नवमालिकानां दलच्छिरीषप्रभवाभिरामः। पुष्पप्रदः काञ्चनकेतकीनां ग्रीष्मोऽयमुल्लास···धातकीकः॥' 'खर्जूरजम्बूपनसाम्रमोचप्रियालपूगीफलनारिकेलैः। द्वन्द्वानि खेदालसतामपास्य रतानुबन्धानमिहाद्रियन्ते॥' 'स्रोतांस्यम्भांसि[1] सकूपकानि प्रपाः कठोरेऽहनि पान्थपूर्णाः। शुचौ समभ्यर्चितसक्तुधाने प्रागेव स्नायं

१. 'स्तनम्भांसि' स्यात्.

च वहन्ति मार्गाः ॥' 'यत्कायमानेषु दिनार्धनिद्रा यत्स्नानकेलिर्दिवसावसाने। यद्रात्रिशेषे सुरतावतारः स मुष्टियोगो घनघर्ममाथी ॥' 'या चन्द्रिका चन्दनपङ्कहृद्या या जालमार्गानिलवीचिमाला। या तालवृन्तैरुदबिन्दुदृष्टिर्जलाञ्जलिं सा शुचये ददाति ॥' 'कर्पूरचूर्णं सहकारभङ्गस्ताम्बूलमार्द्रक्रमुकोपक्लृप्तम्। हाराश्च तारास्तनुवस्त्रमेतन्महारहस्यं शिशिरक्रियायाः ॥' 'मुक्तालताश्चन्दनपङ्कदिग्धा मृणालहारानुसृता जलार्द्राः। स्रजश्च मौलौ स्मितचम्पकानां ग्रीष्मेऽपि सोऽयं शिशिरावतारः ॥' अत्र हि—'पच्यन्त इव भूतानि ताप्यन्त इव पांसवः। कथ्यन्त[1] इव तोयानि ध्मायन्त इव वाद्रयः ॥' 'एण्यः स्थलीषु मृगतृष्णिकया ह्रियन्ते स्रोतस्तनुत्वजनिता जलवेणिबन्धाः। ताम्यत्तिमीनि[2] सरांसि जलस्य शोषाद्बद्धारघट्टघटिकावलयश्च कूपाः ॥' 'करभाः शरभाः सरासभा मदमायान्ति भजन्ति विक्रियाम्। करवीरकरीरपुष्पिणीः स्थलभूमीरधिरुह्य रासते ॥' 'सहकाररसार्चिता रसाला जलभक्तं फलपानकानिमन्थाः (?)। मृगलावरसाश्रितं (?)...दुग्धं स्मरसंजीवनमौषधं निदाघे ॥' 'जडचन्दनचारवस्तरुण्यः सजलार्द्राः सहतारहारमालाः। कदलीदलतल्पकल्पनस्थाः स्मरमाहूय निवेशयन्ति पार्श्वे ॥' '[3]ग्रीष्मी चीरीनादवन्तो वनान्ताः पङ्काभ्यक्ताः सेरिताः (?) सेभकोलाः। लोलजिह्वाः सर्वसारङ्गवर्गा मूलस्रस्तैः पक्षिणश्चांशदेशैः ॥' 'हर्म्यं रम्यं चन्द्रिकाधौतपृष्ठं कान्तोच्छिष्टा वारुणी वारिमिश्रा। मालाः कण्ठे पाटलामल्लिकानां सद्यो ग्रीष्मं हन्त हेमन्तयन्ति ॥' वायुश्चात्र नैर्ऋतोऽनियतदिक्को वा। यथा—'सोऽयं करैस्तपति वह्निमयैरिवार्कः साङ्गारविस्तरभरेव धरा समग्रा। वायुः कुकूलमिव वर्षति नैर्ऋतश्च कार्शानवैरिव शरैर्मदनश्च हन्ति ॥' यथा च—'वात्याचक्रकचुम्बिताम्बरभुवः स्थूला रजोदण्डकाः संग्रन्थन्ति भविष्यदभ्रपटलस्थूणावितर्कं नभः। किं चान्यन्मृगतृष्णिकाम्बुविसरैः पात्राणि वीतार्णसां सिन्धूनामिह सूचयन्ति दिवसेष्वागामिनीं संपदम् ॥' चतुरवस्थश्च ऋतुः। संधिः शैशवं प्रौढिरनुवृत्तिश्च। ऋतुद्वयमध्यं संधिः। स शिशिरवसन्तयोर्यथा—'[4]च्युतसुमनसः कुन्दाः पुष्पेष्वलसा द्रुमे मनसि च गिरं ग्रथ्नन्ति मे कीरन्ति न कोकिला(?)। अथ च सवितुः शीतोल्लासं लुठन्ति मरीचयो नवजरठतामालम्बन्ते क्रमोदयदायिनीम् ॥' वसन्तस्य शैशवं यथा—'गर्भग्रन्थिषु वीरुधां सुमनसो मध्येऽङ्कुरं

---

१. 'क्थ्यन्त' स्यात्. २. 'नि च' स्यात्. ३. 'ग्रीष्मे' स्यात्. ४. अत्र श्लोके कीदृक् पाठ इति न ज्ञायते.

पल्लवाः वाञ्छामात्रपरिग्रहः पिकवधूकण्ठोदरे पञ्चमः । किं च त्रीणि जगन्ति जिष्णुदिवसैर्द्वित्रैर्मनोजन्मनो देवस्यापि चिरोज्झितं यदि भवेदभ्यासवश्यं धनुः ॥' प्रौढिर्यथा—'साम्यं संप्रति सेवते विचकिलं षाण्मासिकैर्मौक्तिकैः कान्तिं कर्षति काञ्चनारकुसुमं माञ्जिष्ठधौतात्पटात् । दूणीनां कुरुते मधूकमुकुलं लावण्यलुम्पाकतां लाटीनाभिनिभं चकास्ति च पतद्वृन्ताग्रतः केसरम् ॥' 'अतिक्रान्तर्तुलिङ्गं यत्कुसुमाद्यनुवर्तते । लिङ्गानुवृत्तिं तामाहुः सा ज्ञेया काव्यलोकतः ॥' वर्षासु ग्रीष्मलिङ्गाब्जविकासानुवृत्तिः । यथा—'खं वस्ते कलविङ्ककण्ठमलिनं कादम्बिनीकम्बलं चर्चां पारयतीव दर्दुरकुलं कोलाहलैरुन्मदम् । गन्धं चुम्बति सिक्तलाजसदृशं वर्षेण दग्धा स्थली दुर्लक्षोऽपि विभाव्यते कमलिनीहासेन भासां पतिः ॥' किं च—'ग्रैष्मिकसमयविकाशी कथितो धूलीकदम्ब इति लोके । जलधरसमयप्राप्तौ स एव धाराकदम्बः स्यात् ॥' यथा—"धूलीकदम्बपरिधूसरदिङ्मुखस्य रक्तच्छटासुरशरासनमण्डनस्य । दीप्तायुधाशनिमुचो ननु नीलकण्ठ नोत्कण्ठसे समदवारिधरागमस्य ॥' 'जलसमयजायमानां जातिं यां कर्दमेन जनयन्ति । सा शरदि महोत्सविनी गन्धान्वितषट्पदा भवति ॥' यथा—'स्थूलावश्यायबिन्दुद्युतिदलितबृहत्कोरकग्रन्थिभाजो जात्यं जालं लतानां जरठपरिमलप्लावितानां जजृम्भे । नानाहंसोपधानं सपदि जलनिधेश्चोत्ससर्पापरस्य ज्योत्स्नाशुक्लोपधानं शयनमिव शशी नागभोगाङ्कमम्भः ॥' स्तोकानुवृत्तिं केतक्या अपि केचिदिच्छन्ति । यथा—'असूच्यत शरत्कालः केतकीधूलिधूसरैः । पद्माताम्रैर्नवायातचरणैरिव वासरैः ॥' 'शरद्भवानामनुवृत्तिरत्र बाणासनानां सकुरण्टकानाम् । हेमन्तवक्त्रे यदि दृश्यतेऽपि न दृश्यते बन्धविधिः कवीनाम् ॥' हेमन्तशिशिरयोरैक्ये सर्वलिङ्गानुवृत्तिरेव । उक्तं च—द्वादशमासः संवत्सरः पञ्चर्तवो हेमन्तशिशिरयोः समासेन । 'मरुबकदमनकपुन्नागपुष्पलिङ्गानुवृत्तिभिः सुरभिः । रचनीयश्चित्रश्रीः किंचित्कुन्दानुवृत्त्या च ॥' यथा—'गेहे वाहीकयूनां वहति दमनको मञ्जरीकर्णपूरानुन्मादः पामरीणां मरुति मरुबकामोदिनि व्यक्तिमेति । सद्यो गन्धानुसारस्तुतसुरभिशिराः शीकरः साहकारः सर्पन्नम्भःशरावे रचयति च रसो रेचकीचक्रकाणि ॥' यथा—'कुन्दे मन्दस्तमाले मुकुलिनि विकलः कातरः किंकिराते रक्ताशोके सशोकश्चिरमपि विकचे चम्पके कुञ्चिताक्षः । पान्थः खेदालसोऽपि श्रवणकटुरटच्चक्रमभ्येति

१. 'वाञ्छायामात्र' वा० का० २. 'चिरेप्सितं वा० का०'

यदुक्तम्—

'अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा ॥'

इति।

---

धुन्वन्स्रोत्कण्ठः षट्पदानां नवमधुपटलीलम्पटं कर्पटेन ॥' एवमन्याप्यनुवृत्तिः। 'विचकलिकेसरपाटलि चम्पकपुष्पा वसन्तयो (?) ग्रीष्मे। तत्र च तुहिनर्तुभवं मरुबकमपि केचिदिच्छन्ति ॥' यथा—'अभिनवकुशसूचिस्पर्धि कर्णे शिरीषं मरुबकपरिवारं पाटलादामकण्ठे। स तु सरसजलार्द्रोन्मीलितः सुन्दरीणां दिनपरिणतिजन्मा कोऽपि वेषश्चकास्ति ॥' एवमन्यदपि कविप्रसिद्ध्याभ्यूह्यम्। 'शोभान्धौ गन्धरसौ फलार्चनाभ्यां च पुष्पमुपयोगि। षोढा दर्शितमेतत्सप्तममनुप···योगि तथा ॥' 'यत्प्राचिमासे कुसुमं निबद्धं तदुत्तरे बालफलं विधेयम्। तदग्रिमे प्रौढिधरं च कार्यं तदग्रिमे पाकपरिष्कृतं च ॥' 'द्रुमोद्भवानां विधिरेष दृष्टो वल्लीफलानां न महाननेहा। तेषां द्विमासावधिरेव कार्यः पुष्पे फले पाकविधौ च कालः ॥' 'अन्तर्व्याजं बहिर्व्याजं बाह्यान्तर्व्याजमेव च ॥' 'सर्वव्याजं बहुव्याजं निर्व्याजं च तथा फलम् ॥' 'लकुचाद्यन्तर्व्याजं तथा बहिर्व्याजमत्र मोचादि। आम्राद्युभयव्याजं सर्वव्याजं च ककुभादि ॥' 'पनसादि बहुव्याजं नीलकपिच्छादि भवति निर्व्याजम्। सकलफलानां षोढा ज्ञातव्यः कविभिरिति भेदः ॥' तदेवं देशकालौ व्याख्यातौ ॥ **वयः** शैशवादिकम् ॥ **जातिः** स्त्रीपुंसादिका ब्राह्मणत्वादिका वा। आदिग्रहणाद्विद्यावित्तकुलपात्रादयो लभ्यन्ते। **वेषः** कृत्रिमं रूपम्। **व्यवहारः**श्चेष्टा। आदिग्रहणादाकारवचनादयो ज्ञेयाः। वेषव्यवहारादीति देशादिभिः प्रत्येकमभिसंबध्यते। तेन देशे वेषस्य व्यवहारस्य आकारस्य वचनस्य वा औचित्येन निबन्धः करणीय इत्यर्थः। एवं कालादौ योज्यम्। यथा कान्यकुब्जाद्यार्यदेशे उद्धतो वेषः। दारुणो व्यवहारः। भयंकर आकारः। परुषं वचनमनुचितम्। म्लेच्छेषु त्वेतदेवोचितम्। तथा

---

१. 'औचित्योपनिबन्ध' का० प्र०.

---

१. 'विचकिल' स्यात्.

'भक्त्या शब्दार्थयोर्दोषाः' इत्युक्तम्। तत्र च शब्दस्य पदवाक्यरूपत्वात्प्रथमं द्वौ पददोषावाह—

**निरर्थकासाधुत्वे पदस्य।**

दोष इति वर्तते। कृतसमासयोर्भावप्रत्ययः। तेन निरर्थकत्वमसाधुत्वं च पदस्य दोषौ। एवमुत्तरत्रापि योज्यम्। तत्र चादीनां पूरणार्थत्वे निरर्थकत्वं यथा—

'मुह्यन्मुहुर्मुहुरहं चपलाकुलाक्षः
कृत्वा स्खलन्ति भवतोऽभिमुखं पदानि।
स्वामिन्भवच्चरणयोः शरणं प्रपन्नः
संसारदारुणदरेण हि कांदिशीकः॥'

पदैकदेशः पदमेव, तन्निरर्थकत्वं यथा—

'आदावञ्जनपुञ्जलिप्तवपुषां श्वासानलोल्लासित-
प्रोत्सर्पद्विरहानलेन च ततः संतापितानां दृशाम्।
संप्रत्येव निषेकमश्रुपयसा देवस्य चेतोभुवो
भल्लीनामिव पानकर्म कुरुते कामं कुरङ्गेक्षणा॥'

अत्र 'दृशाम्' इति बहुवचनमनर्थकम्। कुरङ्गेक्षणाया एकस्या एवोपादानात्॥

न च—

'अलसवलितैः प्रेमार्द्रार्द्रैर्मुहुर्मुकुलीकृतैः
क्षणमभिमुखैर्लज्जालोलैर्निमेषपराङ्मुखैः।
हृदयनिहितं भावाकूतं वमद्भिरिवेक्षणैः
कथय सुकृती कोऽयं मुग्धे त्वयाद्य विलोक्यते॥'

इत्यादिवद्व्यापारभेदाद्बहुत्वम्। व्यापाराणामनुपात्तत्वात्। न च व्यापारेऽत्र दृक्शब्दो वर्तते।

यमकादौ निरर्थकत्वं न दोष इति केचित्। यथा—

'योषितामतितरां नखलूनं गात्रमुज्ज्वलतया न खलूनम्।'

'बभौ मुखेनाप्रतिमेन काचन श्रियाधिका तां प्रति मेनका च न।'

शब्दशास्त्रविरोधोऽसाधुत्वम्। यथा—

'उन्मज्जन्मकर इवामरापगाया वेगेन प्रतिमुखमेत्य बाणनद्याः।
गाण्डीवी कनकशिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्षः॥'

अत्र हन्तेर्नाकर्मकत्वम्, न स्वाङ्गकर्मकत्वमित्यात्मनेपदाप्राप्तेः 'आजघ्ने'पदमसाधु॥

**'न दोषोऽनुकरणे'** इति वक्ष्यमाणत्वात् 'पश्यैष च गवित्याह—' इत्यत्र न दोषः।

अथ त्रयोदशवाक्यदोषानाह—

**विसंधिन्यूनाधिकोक्तास्थानस्थपदपतत्प्रकर्षसमाप्तपुनरात्ताविसर्गहतवृत्तसंकीर्णगर्भितभग्नप्रक्रमानन्वितत्वानि वाक्यस्य।**

दोषा इति वर्तते।

तत्र संधिः स्वराणां समवायः संहिताकार्येण द्रवद्रव्याणामिवैकीभावः, कवाटवत्स्वराणां व्यञ्जनानां च प्रत्यासत्तिमात्ररूपो वा। तस्य विश्लेषादश्लीलत्वात्कष्टत्वाच्च वैरूप्यं **विसंधित्वम्।**

विश्लेषाद्यथा—

'कमले इव लोचने इमे अनुबध्नाति विलासपद्धतिः।'

'लीलालकानुविद्धानि आननानि चकासति।'

संहितां न करोमीति स्वेच्छा सकृदपि दोषः। प्रकृतिस्थत्वविधाने

त्वसकृत् । '[1]संहितैकपदवत् पादे अर्धान्तवर्जम्' इति हि काव्यसमयः ।

अश्लीलत्वाद्यथा—

'विरेचकमिदं नृत्यमाचार्याभासयोजितम् ।'

अत्र 'विरेचकम्' इति जुगुप्सा । 'याभ' इति व्रीडा ।

तथा—

'चकाशे पनसप्रायैः पुरी षण्ढमहाद्रुमैः ।'

अत्र 'शेप' इति 'पुरीषम्' इति 'महाद्रुम' इति च 'व्रीडाजुगुप्सामङ्गलार्थस्मारकत्वादश्लीलाः ।

कष्टत्वाद्यथा—

'मञ्जर्युद्गमगर्भास्ते गुर्वाभोगा इमा बभुः ।'

वक्राद्यौचित्येति वक्ष्यमाणत्वाद्दुर्वचकादौ न दोषः ।

यदाहुः—

'शुकस्त्रीबालमूर्खाणां मुखसंस्कारसिद्धये ।
प्रहासासु च गोष्ठीषु वाच्या दुर्वचकादयः ॥'

अवश्यवाच्यस्यानभिधाने **न्यूनपदत्वम्** ।

---

नागरेषु यदुचितं तदेव ग्राम्येष्वनुचितमिति । यथा—'परिभ्रमन्मूर्धजषट्पदाकुलैः स्मितोदयादर्शितदन्तकेसरैः । मुखैश्चलत्कुण्डलरश्मिरञ्जितैर्नवातपामृष्टसरोजचारुभिः ॥' गोपीनां हि ग्राम्यत्वात्कनककुण्डलान्यनुचितानीति । एवं कालादावप्युन्नेयम् ॥ **विरेचकमिति** । विगतं ग्रीवादीनां रेचकं भ्रमणं यत्र । असम्यगाचार्येण योजितमिति प्रकृतोऽर्थः । विरेचकं प्रवर्तकमिति च ॥ **अवश्यवाच्यस्येति** । अवश्यंभावेनाभिधेयस्य अविनाभावेनौचित्येन वा प्रतीयमान-

---

१. 'नित्यं संहितैकपदवत्पादेष्वर्धा—' इति वामनकाव्यालंकारसूत्रम्.

यथा—'तथाभूतां दृष्ट्वा' इति । अत्रास्माभिरिति खिन्नमित्यस्मात्पूर्वमित्थमिति च नोक्तमिति न्यूनत्वम् ।

तथा—

'त्वयि निबद्धरतेः प्रियवादिनः प्रणयभङ्गपराङ्मुखचेतसः ।
किमपराधलवं मम पश्यसि त्यजसि मानिनि दासजनं यतः ॥'

---

स्या[1]भिधानेऽपि न दोषः । यथा—'कियन्मात्रं जलं विप्र जानुदघ्नं नराधिप । तथापीयमवस्था ते न सर्वत्र भवादृशाः ॥' 'यत्र ह्यन्यत्क्रियापदं नास्ति तत्रास्तिर्भवन्तीपरः प्रथमपुरुषे प्रयुज्यते' इति न्यायादस्तिर्लभ्यते । तथा च—'मा भवन्तमनलः पवनो वा वारणो मदकलः परशुर्वा । वज्रमिन्द्रकरविप्रसृतं वा स्वस्ति तेऽस्तु लतया सह वृक्ष ॥' अत्रौचित्याद्धाक्षीदित्यादिक्रिया गम्यते । तथा—'मा धाक्षीन्मा भाङ्क्षीन्मा छैत्सीज्जातुचिद्बत भवन्तम् । सुकृतैरध्वन्यानां मार्गतरो स्वस्ति तेऽस्तु सह लतया ॥' अत्रानल इत्यादीनि कर्तृपदान्यौचित्यात्प्रतीयन्ते ॥ एवं चानभिहितवाच्यत्वं पृथग्दोषत्वेन[2] वाच्यम् । धर्मिधर्मोभयात्मनो वस्तुनः प्रतिपत्तये पुनः स एव शब्दस्तत्पर्यायः सर्वनाम वावश्यं वाच्यमपि नोक्तं यत्र, तत्रापि न्यूनत्वमिति केचिद्वदन्ति । यथा—'द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।' इति । अत्र हि कपालिशब्दो धर्मधर्मोभयवृत्तिः संज्ञिमात्रं वा प्रत्याययेत् । कपालसंबन्धकृतं वा गर्हितत्वमुभयमपि वेति त्रयः पक्षाः । तत्र प्रथमपक्षे विशेषप्रतिपत्तये कपालिग्रहणमपरमपि कर्तव्यम्, येनास्य गर्हितत्वं प्रतीयेत । द्वितीयपक्षे तस्याश्रयप्रतिपत्तये तेनैव तत्पर्यायेण सर्वनाम्ना वा विशेष्यमवश्यमुपादेयं भवति, येन तस्य विवक्षितार्थसिद्धावार्थो हेतुभावोऽवकल्प्येत । तत्र तेनैवोपादाने यथा–'सततमनङ्गोऽनङ्गो न वेत्ति परदेहदाहदुःखमहो । यदयमदहं[3] दहति मामनलशरो ध्रुवमसौ न कुसुमशरः ॥' इति । पर्यायेण यथा—'कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये ।' अत्र हि हरस्येति पर्यायशब्देनोपात्तस्यार्थस्य पिनाकपाणित्वं धैर्यच्युतेरशक्यकरणीयतायामार्थो हेतुः । अन्यथा हरग्रहणस्य पौनरुक्त्यं

---

१. 'नभिधाने' स्यात्. २. 'षत्वेन न वाच्यम्' स्यात्. ३. 'मदयं' स्यात्.

अत्रापराधस्य लवमपीत्यर्थो वाच्यः।

तथा—

'नवजलधरः संनद्धोऽयं न दृप्तनिशाचरः
सुरधनुरिदं दूराकृष्टं न तस्य शरासनम्।
अयमपि पटुर्धारासारो न बाणपरम्परा
कनकनिकषस्निग्धा विद्युत्प्रिया न ममोर्वशी॥'

अत्र भ्रान्तौ निवृत्तायां तद्विषयभूतयोः सुरधनुर्धारासारयोरिव विद्युतोऽपीदमा परामर्शो वाच्यः।

---

स्यादिति। यथा च—'एकः शङ्कामहिवररिपोरत्यजद्वैनतेयात्' इति। सर्वनाम्ना यथा—'दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः। विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः॥' अत्रापि ता इति सर्वनामोपात्तस्यार्थस्य वामलोचनात्वं मनसिजदाहजीवनयोरन्योन्यविरुद्धयोरपि अभिन्नहेतुकत्वोपपत्तावार्थो हेतुः। इतरथा वामलोचनात्वस्य पुनरुपादानप्रसङ्गः। अत एव तृतीयः पक्षो न संभवत्येव। एकस्यैव शब्दस्यावृत्तिमन्तरेणानेकार्थप्रतिपादनसामर्थ्यासंभवात्। न चासावनिबन्धना शक्या कल्पयितुम्। न वैषामेकमप्यत्रोक्तमिति न्यूनपदत्वमिति। वयं तु ब्रूमः—न हि शब्दस्याभिधैव वृत्तिरिष्यते येनैकस्मिन्नेवार्थे उपक्षीणत्वात्तस्याः शब्दान्तरमर्थान्तरार्थं प्रयुज्येत तदावृत्तिनिबन्धनं वा किंचित्परिकल्प्येत। किंतु वृत्त्यन्तरमपि सहृदयैकसंवेद्यं व्यक्तिस्वभावमस्त्येव। एवं च वृत्त्यन्तरोपकल्पनायामेकस्मादेव शब्दाद्वाच्येन सहैव व्यङ्ग्यस्यापि प्रतीतिरनिवारितप्रसरैव। तथा हि—परमेश्वरवाचकसहस्रसंभवेऽपि 'कपालिनः' इति तद्वाचकतया प्रयुक्तं बीभत्सरसालम्बनविभावतां सूचयन् जुगुप्सास्पदत्वं ध्वनति। संप्रति द्वयं चेत्यतीव रमणीयम्। यत्किल पूर्वमेका सैव दुर्व्यसनदूषितत्वेन शोचनीया जाता। संप्रति पुनस्त्वया तस्यास्तथाविधदुरध्यवसायकमिवारब्धमित्युपहस्यते। प्रार्थनाशब्दोऽप्यतितरां रमणीयः। यस्मात्काकतालीययोगेन तत्समागमः कदाचिन्न वाच्यतावहः। प्रार्थना पुनरत्रात्यन्तकौलीनकलङ्ककारिणी। सा च त्वं चेति द्वयोरप्यनुभूयमानपरस्परस्पर्धिलावण्यातिशयप्रतिपादनपरत्वे-

यथा वा उपमायाम्—

'संहयवक्कायजुया वियसिअं कमलामुणालसंछन्ना ।
वावीबहुत्वरोयण विलित्तथणया सुहावेई ॥'

अत्र कमलमृणालप्रतिकृत्योर्मुखबाह्वोः केनापि पदेनानुपादानान्न्यूनपदत्वम् ।

क्वचिद्गुणः ।

यथा—

'गाढालिङ्गनवामनीकृतकुचप्रोद्भूतरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा ।
मा मा मानद माति मामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किम् ॥'

क्वचिन्न गुणो न दोषः ।

यथा—'तिष्ठेत्कोपवशात्—' इति ।

अत्र पिहितेत्यतोऽनन्तरं 'नैतत् यतः' इति एतैर्न्यूनैः पदैर्विशेषबुद्धेरकरणान्न गुणः । 'उत्तरा प्रतिपत्तिः पूर्वां प्रतिपत्तिं बाधते' इति न दोषः ।

अधिकपदत्वं यथा—

'स्फटिकाकृतिनिर्मलः प्रकामं प्रतिसंक्रान्तनिशातशास्त्रतत्त्वः ।
अनिरुद्ध[1]समन्वितोक्तियुक्तिः प्रतिमल्लास्तमयोदयः स कोऽपि ॥'

अत्र 'आकृति'शब्दोऽधिकः ।

तथा—

'[2]ताडीजङ्घो निजघ्ने कृततदुपकृतिर्यत्कृते गौतमेन ।'

अत्र 'तत्'शब्दः ।

---

१. 'वि' का० प्र०. २. 'नाडीजङ्घो' स्यात्.

यथा—

'दलत्कंदलभाग्भूमिः सनवाम्बुदमम्बरम् ।
वाप्यः फुल्लाम्बुजयुजो जाता दृष्टिविषं मम ॥'

अत्र भजिः सहशब्दो युजिश्चाधिकाः ।

तथा—'बिसकिसलयच्छेदपाथेयवन्तः' इति ।

'त्वगुत्तरा सद्भवतीमधीतिनीम्' इति च मत्त्वर्थीयस्याधिक्यम् । बहुव्रीहिसमाश्रयेणैव तदर्थावगतिसिद्धेः । यदाहुः—'कर्मधारयमत्वर्थीयाभ्यां बहुव्रीहिर्लघुत्वात्प्रक्रमस्य' ।

तथा—'वासो जाम्बवपल्लवानि जघने गुञ्जास्रजो भूषणम्' इति, 'तदीयमातङ्गघटाविघट्टितैः' इति, 'येनाकुम्भनिमग्नवन्यकरिणां यूथैः पयः पीयते' इत्यत्र तद्धितप्रत्ययस्याधिक्यम् । षष्ठीसमासाश्रयेणैव तदर्थावगतेः ।

यत्र त्वर्थान्तरे तद्धितस्योत्पत्तिः न तत्र समासात्प्रतीतिरिति न तस्याधिक्यम् ।

यथा—

'अथ भूतानिवार्त्रघ्नशरेभ्यस्तत्र तत्रसुः ।'

इति । अत्र हि अपत्यार्थे तद्धितो नेदमर्थे इति ।

तथा—

'किं पुनरीदृशे दुर्जाते जातामर्षनिर्भरे च मनसि नास्त्येवावकाशः शोकक्रियाकरणस्य ।'

इत्यत्र क्रियाकरणयोः ।

यथा वा उपमायाम्—

'अहिणवमणहरविरइयवलयविहूसा विहाइ नववहुया ।
कुन्दलयव्वसमुप्फुल्लगुच्छपरिच्छित्तभमरगणा ॥'

अत्रोपमेयस्य नीलरत्नादेरनिर्देशे भ्रमरगणपदमतिरिच्यते इत्यधिकपदत्वम् ।

तथा—

'अलिभिरञ्जनबिन्दुमनोहरैः कुसुमपङ्क्तिनिपातिभिरङ्कितः ।
न खलु शोभयति स्म वनस्थलीं न तिलकस्तिलकः प्रमदामिव ॥'

अत्र तिलकप्रमदयोरेकतरस्य समासोक्तित एवाक्षेपादन्यतरस्याधिकपदत्वम् ।

यथा वा रूपके—'शोकानलधूमसंभारसंभूताम्भोदभरितमिव वर्षति नयनवारिधाराविसरं शरीरम् ।'

अत्र शोकस्य केनचित्साधर्म्येणानलत्वेन रूपणमस्तु धूमस्य पुनर्न किंचिद्रूप्यमस्तीति अधिकपदत्वम् ।

तथा—'निर्मोकमुक्तिमिव गगनोरुगस्य[1] लीलाललाटिकामिव त्रिविष्टपस्य ।'

अत्र रूपकेणैव साम्यस्य प्रतिपाद्यमानत्वादिवशब्दस्याधिक्यम् ।

यथा वा समासोक्तौ—

'स्पृशति तिग्मरुचौ ककुभः करैर्दयितयेव विजृम्भिततापया ।
अतनुमानपरिग्रहया स्थितं रुचिरया चिरयापि दिनश्रिया ॥'

अत्र तिग्मरुचेः ककुभां च यथासदृशविशेषणवशेन व्यक्तिविशेषपरिग्रहेण च नायकतया[2] व्यक्तिस्तथा ग्रीष्मदिवसश्रियोऽपि प्रति नायिकात्वेन भविष्यतीति दयितयेत्यधिकम् ।

---

१. 'रगस्य' स्यात्. २. 'नायकतया नायिकात्वेन च व्यक्तिः' का० प्र०.

यथा वान्योक्तौ—

'आहूतेषु विहंगमेषु मशको नायान्पुरो वार्यते
मध्ये[1] वा धुरि वा वसंस्तृणमणिर्धत्ते मणीनां धुरम्[2] ।
खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनां
धिक्सामान्यमचेतनं[3] प्रभुमिवानामृष्टतत्त्वान्तरम् ॥'

अत्राचेतसः प्रभोरप्रस्तुतविशिष्टसामान्यद्वारेणाभिव्यक्तेः प्रभुमिवेत्यधिकम् ।

तथा—

'द्रविणमापदि भूषणमुत्सवे शरणमात्मभये निशि दीपकः ।
बहुविधार्थ्युपकारभरक्षमो भवति कोऽपि भवानिव सन्मणिः ॥'

अत्र भवदर्थस्यान्योक्तिबलेनैवाक्षेपाद्भवानिवेत्यधिकम् ।

क्वचिद्गुणः ।

यथा—

'यद्वञ्चनाहितमतिर्बहु चाटुगर्भं
कार्योन्मुखः खलजनः कृतकं ब्रवीति ।
तत्साधवो न न विदन्ति विदन्ति किं तु
कर्तुं वृथा प्रणयमस्य न पारयन्ति ॥'

अत्र विदन्तीति द्वितीयमन्ययोगव्यवच्छेदपरम् ।

**उक्तपदत्वं द्विःप्रयोगः । 'नैकं पदं द्विः प्रयोज्यं प्रायेण'** इति हि समयः ।

---

१. 'मध्येवारिधि वावस' का० प्र०.　२. 'रुचम्' का० प्र०.　३. 'सं' का० प्र०.

यथा—

'अधिकरतलतल्पं कल्पितस्वापलीला-
परिमलननिमीलत्पाण्डिमा गण्डपाली ।
सुतनु कथय कस्य व्यञ्जयन्त्यञ्जसैव
स्मरनरपतिलीलायौवराज्याभिषेकम् ॥'

अत्र लीलेति ।

क्वचिद्गुणः ।

यथा लाटानुप्रासे—

'जयति क्षुण्णतिमिरस्तिमिरान्धैकवल्लभः ।
वल्लभीकृतपूर्वाशः पूर्वाशातिलको रविः ॥'

क्वचिच्छब्दशक्तिमूले ध्वनौ ।

यथा—

'ताला जायन्ति गुणा जाला ते सहिअएहिं घिप्पन्ति ।
रविकिरणाणुगहियाइं हुन्ति कमलाइं कमलाइं ॥'

विहितस्यानुवाद्यत्वे यथा—

'जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते ।
गुणप्रकर्षेण जनोऽनुरज्यते जनानुरागप्रभवा हि संपदः ॥'

---

नोपात्तम् । कलावतः कान्तिमतीति च मतुप्प्रत्ययेन द्वयोरपि प्रशस्यता प्रतीयते ॥ **क्वचिद्गुण इति** । लाटानुप्रासव्यङ्ग्यविहितानुवाद्यत्वेषु । तिमिरान्धाः घूकवर्जाः पक्षिणः ॥ **तालेति** तदा । **जालेति** यदा । 'डेडाहेडालाइया काले'

---

१. 'स्वाप' का० प्र०.

२. 'तदा जायन्ते गुणाः यदा ते सहृदयैर्गृह्यन्ते ।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥' (इति च्छाया.)

---

१. 'डेर्डा' स्यात्.

**अस्थानस्थपदत्वं** यथा—

'प्रियेण संग्रथ्य विपक्षसंनिधौ निवेशितां वक्षसि पीवरस्तने ।
स्रजं न काचिद्विजहौ जलाविलां वसन्ति हि प्रेम्णि गुणा न वस्तुनि ॥'

अत्र 'स्रजं काचिन्न जहौ' इति वाच्यम् ।

तथा—

'द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥'

अत्र त्वंशब्दादनन्तरश्चकारो युक्तः ।

तथा—

'शक्तिर्निस्त्रिंशजेयं तव भुजयुगले नाथ दोषाकरश्री-
वंक्रे पार्श्वे तथैषा प्रतिवसति महाकुट्टिनी खड्गयष्टिः ।
आज्ञेयं सर्वगा ते विलसति च पुनः किं मया वृद्धया ते
प्रोच्येवेत्थं प्रकोपाच्छशिकरसितया यस्य कीर्त्या प्रयातम् ॥'

अत्रेत्थं प्रोच्येवेति न्याय्यम् ।

तथा—

'लग्नं रागावृताङ्ग्या सततमिह ययैवासियष्ट्यारिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती ।

---

इति यत्तद्भ्यां डेर्डोलादेशः ॥ त्वंशब्दादिति । समुच्चयद्योतको हि चकारः । समुच्चीयमानार्थादनन्तरमेव प्रयोक्तव्य इति हि क्रमः । एवं पुनःशब्दोऽपि व्यतिरिच्यमानार्थानन्तर्येणैव प्रयोगमर्हति । अन्यत्र तु प्रयुज्यमानोऽस्थानस्थ-

---

१. 'सुदृढ' का० प्र०.

---

१ 'डेर्डो' स्यात्.

तत्सक्तोऽयं न किंचिद्गणयति विदितं तेऽस्तु तेनास्मि दत्ता
भृत्येभ्यः श्रीनियोगाद्गदितुमिव गतेत्यम्बुधिं यस्य कीर्तिः ॥'

अत्र 'इति श्रीनियोगाद्' इति वाच्यम्।

तथा—

'तीर्थे तदीये गजसेतुबन्धात्प्रतीपगामुत्तरतोऽस्य गङ्गाम्।'

इत्यत्र परामर्शनीयमर्थमनुक्त्वैव यत्तस्य तदा परामर्शः सोऽस्थानस्थपदत्वं दोषः।

तथा—

'कष्टा वेधव्यथा कष्टो नित्यश्च वहनक्लमः।
श्रवणानामलंकारः कपोलस्य तु कुण्डलम् ॥'

---

पदत्वं प्रयोजयति। यथा—'उद्यता जयिनि कामिनी मुखे तेन साहसमनुष्ठितं पुनः।' अत्र हि पुनःशब्दस्तेनेत्यनन्तरं प्रयोज्यः ॥ **श्रीनियोगादितीति।** तथा चोक्तम्—'उक्तिस्वरूपावच्छेदफलो यत्रेतिरिष्यते। न तत्र तस्मात्प्राक्किंचिदुक्तेरन्यत्पदं वदेत् ॥ उपाधिभावात्स्वां शक्तिं स पूर्वत्रादधाति हि। न च स्वरूपावच्छेदः पदस्यान्यस्य संमतः ॥ इतिनैवेतरेषामप्यव्ययानां गतिः समा। ज्ञेयेत्थमेवमादीनां तज्जातीयार्थयोगिनाम् ॥ यतस्ते चादय इव श्रूयन्ते यदनन्तरम्। तदर्थमेवावच्छिन्द्युरासमञ्जसमन्यथा ॥' इति। एवं चाक्रमत्वं पृथग्दोषत्वेन न वाच्यम्। अस्थानस्थपद एवान्तर्भावात् ॥ **तदेति।** तच्छब्दस्य हि प्रक्रान्तोऽर्थो विषय इष्टो न प्रक्रंस्यमानः स्मृतिपरामर्शरूपत्वात्। स्मृतेश्चानुभूत एवार्थो विषयो नानुभविष्यमाणः। अत्र च प्रतीतिमात्रमनुभावोऽभिमतो नेन्द्रियविषयभावः। न च गङ्गार्थः प्रतीतपूर्वो यः परामृश्येत। न वात्र प्रमादजः पादयोः पौर्वापर्यविपर्यय इति शक्यते वक्तुम्। तत्रापि प्रतीतगमनहेतोः शब्दस्य तदीयतार्थाभिधानव्यवधाने सत्यन्यस्यास्थानस्थपदत्वदोषस्याविर्भावापत्तेः। तेन पादयोर्विपर्ययः शब्दस्य च, हेतोर्गङ्गाविशेषणमुखेनार्थत्वमित्युभय-

अत्र श्रवणानामिति पदं पूर्वार्धे निवेशयितुमुचितम् । 'नार्धे किंचिदसमाप्तं[1] वाक्यम्' इति हि कविसमयः ।

यथा वोत्प्रेक्षायाम्—

'पत्तनिअम्बप्फंसा[2] ण्हाणुत्तिन्नाए सामलङ्गीए ।
चिहुरा[3] रुयन्ति जलबिन्दुएहिं बन्धस्स व भएण ॥'

अत्र रोदनं बन्धनभयं चेत्युभयमुत्प्रेक्षितम् । तत्र प्राधान्याद्रोदनाभिधायिन एव पदादनन्तरमुत्प्रेक्षावाचि पदं प्रयोक्तव्यमिति यदन्यत्र प्रयुक्तं तदस्थानस्थपदम् । प्राधान्ये[4] ह्युत्प्रेक्षिते तदितरदर्थादुत्प्रेक्षितमेव भवति ॥

यदाह—

'एकत्रोत्प्रेक्षितत्वेन यत्रार्था बहवो मताः ।
तत्रेवादिः प्रयोक्तव्यः प्रधानादेव नान्यथा ॥'

इति ।

**पतत्प्रकर्षत्वं** यथा—

'कः कः कुत्र न घुर्घुरायितघुरीघोरो घुरेत्सूकरः
कः कः कं कमलाकरं विकमलं कर्तुं करी नोद्यतः ।

---

विपर्ययोऽत्र श्रेयान् ॥ **निवेशयितुमुचितमिति** । तेनार्थान्तरैकवाचकत्वं पृथग्दोषत्वेन न वाच्यमित्यर्थः ॥ **तदितरदिति** । तस्मात्प्रधानादितरप्रधानम् । यथा—'ज्योतीरसाश्मभवनाजिरदुग्धसिन्धुरत्युन्मिषत्प्रचुरतुङ्गमरीचिवीचिः । वातायनस्थितवधूवदनेन्दुबिम्बसंदर्शनादनिशमुल्लसतीव यस्याम् ॥' अत्र

---

१. 'माप्तप्रायं' काव्यालंकारसूत्रे.

२. 'प्राप्तनितम्बस्पर्शाः स्नानोत्तीर्णायाः श्यामलाङ्गयाः ।
चिकुरा रुदन्ति जलबिन्दुभिर्बन्धस्येव भयेन ॥' [इति संस्कृतम् ।]

३. 'जलबिन्दुएहिं चिहुरा रुअन्ति' गाथासप्तशत्याम् ६।५५. ४. 'प्रधाने' स्यात्.

के के कानि वनान्यरण्यमहिषा नोन्मूलयेयुर्यतः
सिंहीस्नेहविलासबद्धवसतिः पञ्चाननो विद्यते ॥'

अत्र क्रमात्क्रममनुप्रासो घनयितव्यः ।

पतन्निबन्धः क्वचिद्गुणः ।

यथा—

'प्रागप्राप्तनिशुम्भशांभवधनुर्द्वेधाविधाविर्भव-
त्क्रोधप्रेरितभीमभार्गवभुजस्तम्भापविद्धः क्षणम् ।
उज्ज्वालः परशुर्भवत्वशिथिलत्वत्कण्ठपीठातिथि-
र्येनानेन जगत्सु खण्डपरशुर्देवो हरः ख्याप्यते ॥'

अत्र क्रोधाभावे पतत्प्रकर्षत्वं नास्ति ।

**समाप्तपुनरात्तत्वं** यथा—

'ज्योत्स्नां लिम्पति चन्दनेन स पुमान्सिञ्चत्यसौ मालती-
मालां गण्डजलैर्मधूनि कुरुते स्वादून्यसौ फाणितैः ।
यस्तस्य प्रथितान्गुणान्प्रथयति श्रीवीरचूडामणे-
स्तारत्वं स च शाणया मृगयते मुक्ताफलानामपि ॥'

अत्र चूडामणेरिति समाप्ते वाक्ये तारत्वमित्यादि पुच्छप्रायं पुनरुपात्तं न चमत्करोति ।

क्वचिन्न गुणो न दोषः । यत्र न विशेषणमात्रदानार्थं पुनर्ग्रहणमपि तु वाक्यार्थान्तरमेव क्रियते । यथा—'प्रागप्राप्त–' इति ।

रोर्लोपे उत्वादिना उपहतौ च विसर्गस्याभावोऽ**विसर्गत्वम्** ।

यथा—

'धीरो विनीतो निपुणो वराकारो नृपोऽत्र सः ।
यस्य भृत्या बलोत्सिक्ता भक्ता बुद्धिप्रभान्विताः ॥'

१. 'वर्तते' का० प्र०.

हतं लक्षणच्युतं यतिभ्रष्टं वा लक्षणानुसरणेऽप्यश्रव्यमप्राप्तगुरुभावान्तलघु रसाननुगुणं च वृत्तं यत्र तद्भावो **हतवृत्तत्वम्** ।

यथा—

'अयि पश्यसि सौधमाश्रितामविरलसुमनोमालभारिणीम् ।'

अत्र वैतालीययुग्मपादे लघ्वक्षराणां षण्णां नैरन्तर्यं निषिद्धमिति लक्षणच्युतम् ।

'एतासां राजति सुमनसां दाम कण्ठावलम्बि ।'

'कुरङ्गाक्षीणां गण्डतलफलके स्वेदविसरः ।'

इत्यनयोश्[१]चतुर्थे षष्ठे च यतिर्न कृतेति यतिभ्रष्टम् ।

एतदपवादस्तु स्वच्छन्दोऽनुशासनेऽस्माभिर्निरूपित इति नेह प्रतन्यते ।

'अमृतममृतं कः संदेहो मधून्यपि नान्यथा
　मधुरमथ किं चूतस्यापि प्रसन्नरसं फलम् ।
सकृदपि पुनर्मध्यस्थः सन्रसान्तरविज्जनो
　वदतु यदिहान्यत्स्वादु स्यात्प्रियादशनच्छदात् ॥'

अत्र 'यदिहान्यत्स्वादु' इत्यश्रव्यम् ।

'अन्यास्ता गुणरत्नरोहणभुवो[२] धन्या मृदन्यैव सा
　संभाराः खलु[३] तेऽन्य एव विधिना यैरेष सृष्टो युवा ।
श्रीमत्कान्तिजुषां[४] द्विषां करतलात्स्त्रीणां नितम्बस्थला-
　द्दृष्टे यत्र पतन्ति मूढमनसामस्त्राणि वस्त्राणि च ॥'

अत्र 'वस्त्राण्यपि' इति पाठे लघुरपि गुरुत्वं भजते ।

'हा नृप हा बुध हा कविबन्धो विप्रसहस्रसमाश्रय देव ।
मुग्ध विदग्धसभान्तररत्न क्वासि गतः क्व वयं च तवैते[५] ॥'

---

१. चतुर्थे एकारोत्तरं षष्ठे गण्डपदे 'गं' इत्युत्तरं यतिर्भवति. २. 'वो धन्या' का० प्र०. ३. 'किल' प्रकाशे. ४. 'जुषां' प्रकाशे. ५. 'वैते' का० प्र०.

हास्यरसव्यञ्जकमेतद्वृत्तं करुणरसाननुगुणम् ।

वाक्यान्तरपदानां वाक्यान्तरपदैर्व्यामिश्रत्वं **संकीर्णत्वम्** ।

यथा—

'कांयं खाइइ च्छुहिओ कूरं घेत्तेइ निज्झरं रुद्धो ।
सुणयं गिन्हइ कण्ठे हक्केइ अ निअत्तयं थेरो ॥'

अत्र 'काकं क्षिपति कूरं खादति कण्ठे नप्तारं गृह्णाति श्वानं भषयति' इति वक्तुमुचितम् । एकवाक्यतायां क्लिष्टमिति क्लिष्टाद्भेदः ।

क्वचिदुक्तिप्रयुक्तौ गुणः ।

यथा—

'बाले नाथ विमुञ्च मानिनि रुषं, रोषान्मया किं कृतं,
खेदोऽस्मासु, न मेऽपराध्यति भवान्, सर्वेऽपराधा मयि ।
तत्किं रोदिषि गद्गदेन वचसा, कस्याग्रतो रुद्यते,
न त्वेतन्मम, का तवास्मि, दयिता, नास्मीत्यतो रुद्यते ॥'

वाक्यमध्ये वाक्यान्तरप्रवेशो **गर्भितत्वम्** ।

यथा—

'परापकारनिरतैर्दुर्जनैः सह संगतिः ।
वदामि भवतस्तत्त्वं न विधेया कदाचन ॥'

अत्र तृतीयः पादो वाक्यान्तरं मध्ये प्रविष्टम् ।

क्वचिद्गुणः ।

---

१. 'काकं खादति क्षिपति कूरं भषयति निष्ठुरं रुष्टः ।
शुनकं गृह्णाति कण्ठे आकारयति च नप्तारं स्थविरः ॥'

२. 'बुल्लेइ निठ्ठुरं रुट्ठो' वाग्भटकाव्यानुशासने. ३. 'अ निअत्तियं थेरो' वा० का०.

यथा—

'दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा सा च वदन्त एव हि वयं रोमाञ्चिताः पश्यत ।
विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो
यस्मादाविरभूत्कथाद्भुतमिदं यत्रैव चास्तं गतम् ॥'

अत्र वीराद्भुतरसवशाद् 'वदन्त एव' इत्यादि वाक्यान्तरं मध्ये प्रविष्टं गुणाय ।

प्रस्तुतभङ्गो **भग्नप्रक्रमत्वम्** ।

यथा—

'एवमुक्तो मन्त्रिमुख्यैः पार्थिवः प्रत्यभाषत ।'

अत्र 'उक्तः' इति प्रक्रान्ते 'प्रत्यभाषत' इति प्रकृतेर्भग्नप्रक्रमत्वम् । (यथा) 'प्रत्यवोचत' इति युक्तम् ।

यथा वा—

'ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य[1] च शूलिनम् ।
सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥'

अत्र 'अनेन विसृष्टाः' इति वाच्यम् ।

'धैर्येण विश्वास्यतया महर्षेस्तीव्रादरातिप्रभवाच्च मन्योः ।
वीर्यं च विद्वत्सु सुते मघोनः स तेषु न स्थानमवाप शोकः ॥' K. 3.34

अत्र स्यादेः प्रत्ययस्य । 'तीव्रेण विद्वेषिभुवागसा च' इति तु युक्तम् ।

---

प्रधाने उल्लसने उत्प्रेक्षितेऽप्रधानमिन्दुसंदर्शनमुत्प्रेक्षितमेव ॥ **प्रस्तुतभङ्ग इति** । स हि यथा । प्रक्रममेकरसप्रसृतां प्रतिपत्तृप्रतीतिं रुन्धान इव परिस्खलनखेददायी रसभङ्गाय पर्यवस्यतीत्यर्थः ॥ **प्रत्यवोचतेति युक्तमिति** । एवंविधस्य प्रक्रमभेदाख्यस्य शब्दौचित्यस्य विध्यनुवादभावप्रकारत्वोपगमात् ।

---

१. 'प्रेक्ष्य' का० प्र०.

'बभूव भस्मैव सिताङ्गरागः कपालमेवामलशेखरश्रीः।
उपान्तभागेषु च रोचनाङ्कः सिंहाजिनस्यैव दुकूलभावः॥'

अत्र 'मृगेन्द्रचर्मैव दुकूलमस्य' इति युक्तम्।

'सस्नुः पयः पपुरनेनिजुरम्बराणि
जक्षुर्बिसंघृतविकासिबिसप्रसूनाः।
सैन्याः श्रियामनुपभोगनिरर्थकत्व-
दोषप्रवादममृजन्वननिम्नगानाम्॥'

अत्र त्यादेः। 'विकचमस्य दधुः प्रसूनम्' इति तु युक्तम्।

'यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसंख्यामतिवर्तितुं वा।
निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः॥'

---

यथा 'ताला जायन्ति' इति। यथा वा—'ऍमे जाणातिस्सा देहकवोलोवमाइ-स्ससिविम्बम्। परमच्छविआरेउण चन्दो चन्दोच्चिअवेराउ॥'[1] अत्र ह्युत्कर्षापकर्षविवक्षया परिकल्पितभेदोऽप्येकस्मिन्नर्थे विधेयानुवाद्यविषयेणैकेनैवाभिधानेन विध्यनुवादभावो भणित इति प्रक्रमाभेदप्रकार एवायमिति मन्तव्यम्। केचन पर्यायप्रक्रमभेदनिवृत्तये चन्दणमिति पाठः परिणमयितव्यः। न चैवमुक्तपदत्वदोषप्रसङ्गः। यथान्ये मन्यन्ते—'नैकं पदं द्विः प्रयोज्यं प्रायेण' इति। उद्देश्यप्रतिनिर्देश्यव्यतिरिक्तो हि विषय उक्तपदत्वस्य, अयथोद्देशं प्रतिनिर्देशस्तु भग्नप्रक्रमस्येति भिन्नविषयत्वात्॥ **सस्नुरिति**। अत्र स्नो[2]दौ यः कालविशेषः प्रक्रान्तः, स ते[3]जनादावुपेक्षित इति कालस्याप्यत्र क्रमभेद इति केचिदाहुः। वयं तु ब्रूमः—कालविशेषस्य विवक्षामात्रभावितयानवच्छिन्नत्वाद्दोषोऽयमनुद्भावनीय एव। यदाहुः 'परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषये दर्शनयोग्यत्वात्परोक्षस्याविवक्षायां लिङ् भवत्येव'। 'अजयज्जर्तो (?) हूणाम्' इति। सतोऽपि वाविवक्षा भवति।

---

१. एतस्य संस्कृतं न विज्ञायते. २. 'स्नानादौ' स्यात्. ३. 'नेजना' स्यात्.

अत्र कृतः। 'सुखमीहितुं च' इति तु युक्तम्।

'उदन्वच्छिन्ना भूः स च निधिरपां योजनशतं
सदा पान्थः पूषा गगनपरिमाणं कलयति।
इति प्रायो भावाः स्फुरदवधिमुद्रामुकुलिताः
सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते॥'

अत्र पर्यायस्य। 'मिता भूः पत्यापां स च निधिरपां योजनशतम्' इति तु युक्तम्।

'विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः।
लघुता[1] नियता निरायतेरगरीयान्न पदं नृपश्रियः॥'

अत्रोपसर्गस्य पर्यायस्य च। 'तदभिभवः कुरुते निरायतिम्, लघुतां भजते निरायतिः, लघुताभाङ् पदं नृपश्रियः' इति तु युक्तम्।

'उत्फुल्लकमलकेसरपरागगौरद्युते मम हि गौरि।
अभिवाञ्छितं प्रसिध्यतु भगवति युष्मत्प्रसादेन॥'

---

यथा—'अनुदरा कन्या' इति॥ सुखमीहितुं चे[1]ति तु युक्तमिति। एवं च तुल्यकक्ष्यत्वेन विकल्पार्थवृत्तेर्वाशब्दस्य न विषयोऽयमित्यपि परिहृतं भवति। यथा च— 'रुदता कुत एव सा पुनर्भवता नानुमृतापि[2]वाप्यते। परलोकजुषां स्वकर्मभिर्गतयो भिन्नपथा हि देहिनाम्॥' अत्र हि 'कुत एव तु सा नु रोदनात्' इति युक्तः पाठः। इह तु न दोषः—'पृथ्वि स्थि[3]रीभव भुजङ्गम धारयैनां त्वं कूर्मराज तदिदं द्वितयं दधीथाः। दिक्कुञ्जराः कुरुत तत्त्रितये दिधीर्षां देवः करोति हरकार्मुकमाततज्यम्॥' अत्र हि पृथिव्यादिविषयः प्रैषलक्षणोऽर्थः कविना वक्तुं प्रक्रान्तः तस्य प्रत्ययभेदेऽपि निर्व्यूढत्वात्प्रैषार्थानां पादानामुद्देश्यप्रतिनिर्देश्य-

---

१. 'नियता लघुता' किराते, का० प्रकाशे च. २. 'वान्न' का० प्र०.

---

१. 'वेति' का० प्रकाशे. २. 'ऽप्यवाप्यते' स्यात्. ३. 'स्थिरा भव' इति तु स्मर्यते.

अत्रैकवचनेन भगवतीं संबोध्य प्रसादसंबन्धेन यस्तस्यां बहुत्वनिर्देशः स वचनस्य।

'कृतवानसि विप्रियं न मे प्रतिकूलं न च ते मया कृतम्।
किमकारणमेव दर्शनं विलपन्त्यै रतये न दीयते ॥'

अत्र कारकस्य। 'न च तेऽहं कृतवत्यसंमतम्' इति तु युक्तम्।

यथा च—

'चारुता वपुरभूषयदासां तामनूननवयौवनयोगः।
तं पुनर्मकरकेतनलक्ष्मीस्तां मदो दयितसंगमभूषः ॥'

अत्र शृङ्खलाक्रमेण कर्तुः कर्मभावः। कर्त्रन्तरं च यथोपक्रान्तं तथा न निर्व्यूढम्। 'तमपि वल्लभसङ्गः' इति युक्तम्।

'तव कुसुमशरत्वं शीतरश्मित्वमिन्दो-
र्द्वयमिदमयथार्थं दृश्यते मद्विधेषु।
विसृजति हिमगर्भैर्वह्निमिन्दुर्मयूखै-
स्त्वमपि कुसुमबाणान्वज्रसारीकरोषि ॥'

अत्र क्रमस्य।

यथा वा—

'अकलिततपस्तेजोवीर्यप्रथिम्नि यशोनिधा-
ववितथमदाध्माते रोषान्मुनावभिधावति।

---

भावेनोपादानं न कृतमिति नैतादृशः प्रत्ययक्रमभेददोषस्य विषयोऽवगन्तव्यः। 'मिताभूः पत्यापाम्—' इत्यपि। एवं च छिदिक्रियाकर्तुरुदन्वतो वक्ष्यमाणनयेन विधेयतया प्राधान्यात्समासानुपपत्तिदोषोऽपि परिहृतो भवति। यथा च— 'वरं कृतध्वस्तगुणादत्यन्तमगुणः पुमान्। प्रकृत्या ह्यमणिः श्रेयान्नालंकारच्युतोपलः ॥' एवम्—'खमिव जलं जलमिव खं हंस इव शशी शशीव खलु हंसः। कुमुदाकारास्तारास्ताराकाराणि कुमुदानि ॥' इत्यादौ द्रष्टव्यम् ॥ अकलितेति।

अभिनवधनुर्विद्यादर्पक्षमाय च कर्मणे
स्फुरति रभसात्पाणिः पादोपसंग्रहणाय च ॥'

यथा वा व्यतिरेकालंकारे—

'तरङ्गय दृशोऽङ्गणे पततु चित्रमिन्दीवरं
स्फुटीकुरु रदच्छदं व्रजतु विद्रुमः श्वेतताम्।
क्षणं वपुरपावृणु स्पृशतु काञ्चनं कालिका-
मुदञ्चय मनाङ्मुखं भवतु च द्विचन्द्रं नभः ॥'

अत्रोपमानानामिन्दीवरादीनां निन्दया नयनादीनामुपमेयानामतिशयो

---

अत्र 'पादोपसंग्रहणाय' इति पूर्वं वाच्यम्। एवमन्येऽपि भेदा अभ्यूह्याः। ननु कर्तृप्रक्रमभेदोऽपीह कस्मान्नोपदर्शितः। असंभवादिति ब्रूमः। यत्तु क्वचित्कविभिः प्रयुज्यमानो दृश्यते स कर्तृव्यत्यासो नाम गुण एव, न दोषः। तत्रैव चायं प्रक्रमभेदभ्रमो भवताम् (?)। युष्मदर्थस्य यथा—'यथाहं सप्तमो वैकुण्ठावतारः' इति। अत्र हि यथा त्वमिति युष्मदर्थस्य कर्तृत्वं प्रकृतमपहाय चारुत्वाय ततोऽन्यत्रारोप्यैवमुक्तम्। दाशरथिं रामं प्रति हि कस्यचित्समक्षमियमुक्तिः। अस्मदर्थस्य यथा 'नाभिवादप्रसाद्यो रेणुकापुत्रः। गरीयान् हि गुरुधनुर्भङ्गापराधः' इति। अत्रापि हि नाभिवादप्रसाद्योऽस्मीति वक्तव्ये पूर्ववच्चारुत्वायैवमुक्तम्। एषा हि भार्गवस्यात्मानमुद्दिश्योक्तिः। यथा वा—'अयं जनः प्रष्टुमनास्तपोधने न चेद्रहस्यं प्रतिगोप्तुमर्हसि।' इति। अत्रापि 'अहं प्रष्टुमनाः' इति वक्तव्ये अस्मदर्थस्य कर्तृत्वमन्यत्रारोप्यैवमुक्तम्। द्विविधो ह्यन्यशब्दार्थः। तत्र चेतनेऽन्यत्रारोपो निदर्शित एव। अचेतने तु यथा 'चापाचार्य—' इति। अत्र हि 'त्वं रेणुकाकण्ठबाधां कृतवान्' इति। 'त्वया बद्धस्पर्धोऽहं लज्जे' इति वक्तव्ये चारुत्वाय युष्मदस्मदर्थयोः कर्तृत्वमुभयोः परशुचन्द्रहासयोर्जडयोरारोप्यैवमुक्तम्॥ यथा च—'हे[1] लङ्केश्वर दीयतां जनकजा रामः स्वयं याचते

---

१. 'भो' प्रसिद्धः पाठः।

वक्तुं प्रक्रान्तः 'भवतु च द्विचन्द्रं नभः' इति सादृश्यमात्राभिधानेन निर्व्यूढ इति भग्नप्रक्रमत्वम्। 'भवतु तद्द्विचन्द्रं नभः' इति तु युक्तम्।

तथा—

'तद्वक्त्रं यदि मुद्रिता शशिकथा, तच्चेत्स्मितं का सुधा,
सा चेत्कान्तिरतन्त्रमेव कनकं, ताश्चेद्गिरो धिङ्मधु।
सा दृष्टिर्यदि हारितं कुवलयैः किं वा बहु ब्रूमहे
यत्सत्यं पुनरुक्तवस्तुविरसः सर्गक्रमो वेधसः॥'

अत्रोपमानादुपमेयस्यातिरेकलक्षणं वस्तु वक्तुमिष्टं तस्यार्थान्तरन्यासेन वस्तु सर्गपौनरुक्त्यस्य सादृश्यपर्यवसानाद्भग्नप्रक्रमत्वम्।

वक्त्राद्यौचित्ये न दोषः।

'व्रजतः क्व तात वजसीति परिचयगतार्थमस्फुटं धैर्यम्।
अभिनदुदितं शिशुना जननीनिर्भर्त्सनवृद्धमन्युना॥'

अत्र शिशुना व्रजतिरेव प्रयुक्तो न वजतिस्तत्रैव परिचयगतार्थास्फुटत्वधैर्यभेदित्वसंभवात्। केवलं शक्तिवैकल्याद्रेफोऽनेन नोच्चारितः।

पदार्थानां परस्परमसंबन्धोऽनन्वितत्वम्। यथा—

'दृढतरनिबद्धमुष्टेः कोषनिषण्णस्य सहजमलिनस्य।
कृपणस्य कृपाणस्य च केवलमाकारतो भेदः॥'

अत्र यद्याकारः संनिवेशलक्षणो विवक्षितस्तदा परस्परपरिहारस्थितिमतोरर्थयोः सिद्ध एवेत्यनुपादेयः।

---

कोऽयं ते मतिविभ्रमः स्मर नयं नाद्यापि किंचिद्गतम्। नैवं चेत्खरदूषणत्रिशिरसां कण्ठासृजा पङ्किलः पत्री नैष सहिष्यते मम धनुर्ज्याबन्धबन्धूकृतः॥' अत्राप्यहं न सहिष्ये पूर्ववदसदर्थस्य कर्तृत्वमचेतने पत्रिणि समारोप्यैवमुक्तम्।

अक्षरविशेषलक्षणस्तु शब्दनियतत्वादर्थयोर्न संभवत्येवेत्यनन्वितत्वम् ।

यथा वा—

'निर्घातोग्रैः कुञ्जलीनाञ्जिघांसुर्ज्यानिर्घोषैः क्षोभयामास सिंहान् ।
नूनं तेषामभ्यसूयापरोऽसौ वीर्योदग्रे राजशब्दे मृगाणाम् ॥'

अत्र सिंहानां न तावद्राजशब्दः संभवति, तेषां तद्वाच्यत्वाभावात्तत्संबन्धाभावाच्च । तत्पर्यायस्य मृगराजशब्दस्यास्तीति चेत्, न । तस्य प्रक्रान्तत्वाभावात् । मृगाणामित्यत्र मृगराजानामित्यनुक्तेश्च । किं च मृगेषु राजत्वं भवति सिंहानाम्, न तु शब्द इति वीर्योदग्रत्वं तद्विशेषणमनुपपन्नमेव तस्यार्थनिष्ठत्वेनोपपत्तेः । तेन सिंहानां मृगाणां वीर्योदग्रत्वस्य च न राजशब्देनान्वयः संगच्छते । तेन 'राजभावे' इति 'मृगेषु' इति वा पाठः श्रेयान् ।

यथा वा—

'येषां तास्त्रिदशेभदानसरितः पीताः प्रतापोष्मभि-
र्लीलापानभुवश्च नन्दनतरुच्छायासु यैः कल्पिताः ।
येषां हुंकृतयः कृतामरपतिक्षोभाः क्षपाचारिणां
किं तैस्त्वत्परितोषकारि विहितं किंचित्प्रवादोचितम् ॥'

'अङ्गाङ्गिनोरेव हि यत्तदर्थयोः संबन्धो न त्वङ्गानां यदर्थानामन्योन्यम्' इति नियमेन बहुभिर्यदर्थैर्नैक एवार्थो निर्दिश्यते इति यैरित्यत्र विशेषस्याप्रतीतिः[1] । 'क्षपाचारिभिः' इति तु पाठे युज्यते समन्वयः ।

---

इति ॥ अर्थयोरिति । कृपणकृपाणशब्दवाच्ययोः ॥ न त्वङ्गानामिति ।

---

१. 'विशेष्यस्या' का० प्र०.

यथा वा उपमायाम्—

'वापीव विमलं व्योम हंसीव विमलः शशी ।
शशिलेखेव हंसोऽयं हंसालिरिव ते यशः ॥'

यथा—

'सरांसीवामलं व्योम काशा इव सितः शशी ।
शशीव धवला हंसा हंसीव विशदा दिशः ॥'

अत्रोपमानोपमेययोः साधारणधर्माभिधायिपदं लिङ्गवचनाभ्यां वैसादृश्यादुपमानेन च संबध्यते इत्यनन्वितम् ।

यदि च लिङ्गवचसोर्विपरिणामादुपमानेनापि संबन्धः क्रियेत, तदाभ्यासलक्षणो वाक्यभेदः स्यात् ।

---

प्रधानानुयायित्वेन समत्वादित्यर्थः । **युज्यत इति** । यदि क्षपाचारिणामित्यस्य स्थाने क्षपाचारिभिरिति पच्यते[1] तथात्र योऽपि यच्छब्दार्थः समशीर्षकया धात्वित्वा-(?)अङ्गीभूतेन तैः क्षपाचारिभित्यनेन प्रतिस्वमाञ्जास्यानेव[2] संबन्धमनुभवतीत्यर्थः । यथा वा—'तेनावरोधप्रमदासखेन विगाहमानेन सरिद्वरां ताम् । आकाशगङ्गारतिरप्सरोभिर्वृतो मरुत्वाननुयातलीलः ॥' अत्रानुयातिक्रियापेक्षो राजमरुत्वतोः कर्तृकर्मभावोऽभिधातुमभिमतः कवेः । न चासौ तत्संबन्धयोः साक्षादुक्तः सजललीलासंबन्धमुखेन राजसंबन्धस्योक्तत्वात् । अतोऽत्र साक्षात्तत्संबन्धो वा वाच्यः । तदर्थमन्यत्क्रियान्तरं वा येन कर्तृकर्मत्वभावस्तयोर्घटनामियात् । न चोभयोरेकमप्युक्तमित्यनुचितत्वम् । तेन[3] च रस(?)मयमत्र पाठः—'आकाशगङ्गारतिरप्सरोभिर्वृतोऽनुयातो मघवा विलासैः ।' इति ॥ **अभ्यासलक्षण इति** । पौनःपुण्य[4]रूपः ॥ **वाक्यभेद इति** । द्वे वाक्ये स्यातामित्यर्थः ॥ **असदृश**

---

१. 'पठ्यते' स्यात्. २. 'सामञ्जस्येनैव' स्यात्. ३. 'तेन वरमयमत्र पाठः' स्यात्. ४. 'पुन्य' स्यात्.

एवं चाव्यवधानेन प्रकृतोऽर्थो न प्रतीयेत । विपरिणामश्च शास्त्रीयो न्यायः काव्येषु न युक्तः ।

यत्र तु नानात्वेऽपि लिङ्गवचसोः साधारणधर्माभिधायिपदं स्वरूपभेदं नापद्यते न तत्रैतद्दूषणम् । यथा—

'वाक्प्रपञ्चैकसारेण निर्विशेषाल्पवृत्तिना ।
स्वामिनेव नटत्वेन निर्विण्णाः सर्वथा वयम् ॥'
'चन्द्रमिव सुन्दरं मुखं पश्यति ।'
'तद्वेषोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरताभृतः ।
दधते स्म परां शोभां तदीया विभ्रमा इव ॥'

इति ।

यत्रापि गम्यमानं साधारणधर्माभिधायि पदम्, तत्रापि न दोषः । यथा 'चन्द्रमिव मुखम्, कमलमिव पाणिः, बिम्बमिवाधरः' इत्यादि ।

कालपुरुषविध्यादिभेदेऽपि न तथा प्रतीतिरस्खलितरूपा भवतीत्यसावपि अनन्वितस्यैव विषयः । यथा—

'अतिथिं नाम काकुत्स्थात्पुत्रमाप कुमुद्वती ।
पश्चिमाद्यामिनीयामात्प्रसादमिव चेतना ॥'

अत्र चेतना प्रसादमाप्नोति, न पुनरापेति कालभेदः ।

'प्रत्यग्रमज्जनविशेषविविक्तमूर्तिः
कौसुम्भरागरुचिरस्फुरदंशुकान्ता ।
विभ्राजसे मकरकेतनमर्चयन्ती
बालप्रवालविटपप्रभवा लतेव ॥'

---

इति । टगन्तत्वादेकवचनम्[1] । क्विबन्तत्वाद्बहुवचनं[2] च । मधुरतया भृतो धृतः । तां च बिभ्रति । दधते इति । 'दध धारणे' इत्यस्य दधातेश्चात्मनेपदैकवच-

---

१. 'कञन्त' पाणिनीयमते. २. 'क्विबन्त' पाणिनीयानाम्.

अत्र लता विभ्राजते, न तु विभ्राजसे इति [1]पुरुषभेदः।

'गङ्गेव प्रवहतु ते सदैव कीर्तिः' इत्यादौ च गङ्गा प्रवहति, न तु प्रवहतु इति अप्रवृत्त[2]प्रवृत्तात्मनो विधेः।

एवंविधस्य चान्यस्यार्थस्योपमानगतस्यासंभवाद्विध्यादिभेदः।

अथाष्टावुभयदोषानाह—

**अप्रयुक्ताश्लीलासमर्थानुचितार्थश्रुतिकट्वक्लिष्टाविमृष्टविधेयांशविरुद्धबुद्धिकृत्त्वान्युभयोः।**

उभयोरिति। पदस्य वाक्यस्य चेत्यर्थः। दोषा इति वर्तते।

कविभिरनादृतत्वादप्रयुक्तत्वम्। तच्च लोकमात्रप्रसिद्धत्वाच्छास्त्रमात्रप्रसिद्धत्वाच्च।

आद्यं यथा—

'कष्टं कथं रोदिति थूत्कृतेयम्'।

देश्यं चैतत्प्रायमेव। यदाह—

'प्रकृतिप्रत्ययमूला व्युत्पत्तिर्यस्य नास्ति देश्यस्य।
तन्मडहादि कथंचिन्न रूढिरिति संस्कृते रचयेत्॥'

---

बनहुवचनाभ्याम्॥ **लोकमात्रप्रसिद्धत्वादिति।** एतेन ग्राम्य[1]मयुक्तत्वान्न भिद्यत इत्याह॥ **शास्त्रमात्रप्रसिद्धत्वादिति।** शास्त्राणि योगशास्त्रधातुपाठाभिधानकोशादीनि। तेनाप्रतीतासमर्थनिहतार्थत्वानि न पृथग्लक्षणीयानि अप्रयुक्तत्व एवान्तर्भावादिति॥ **एतत्प्रायमेवेति।** लोकमात्रप्रसिद्धिप्रायम्। केवलं नियतदेशविषयत्वेन प्रसिद्धिरिति प्रायग्रहणम्। **मडहादीति।** मडहलडहाहारणकान्दाट्टएल्लहुक्कक्कुमालवाणबालादिकम्। यथाक्रमं सूक्ष्मश्रेष्ठवस्त्रोत्पलदरिद्राञ्जलिचौरशक्रादिवाचकम्। **रूढिरितीति।** रूढिभ्रान्त्या कश्चिद्वि[2]द्ध-

---

१. 'विभ्राजसे इति संबोध्यमाननिष्ठस्य परभागस्यासंबोध्यमानविषयतया व्यत्यासात् पुरुषभेदः' इत्येवं काव्यप्रकाशे पाठः. २. 'प्रवर्तनात्मनो' का॰ प्र॰.

---

१. 'अप्रयुक्त' स्यात्. २. 'विध्य' स्यात्.

क्वचिद्गुणो यथा—

'देव स्वस्ति वयं द्विजास्तत इतः स्नानेन निष्कल्मषाः
कालिन्दीसुरसिन्धुसङ्गपयसि स्नातुं समीहामहे।
तद्याचेमहि सप्तविष्टपशुचीभावैकतानव्रतं
संयच्छ स्वयशः सितासितपयोभेदाद्विवेकोऽस्तु नः॥'

अत्रामुग्धस्यापि मुग्धस्येव ब्राह्मणस्य वक्तृत्वे स्वस्तीति गुणः।

वाक्यस्य यथा—

'ताम्बूलभृतगल्लोऽयं भल्लं जल्पति मानुषः।
करोति खादनं पानं सदैव तु यथा तथा॥'

क्वचिद्गुणाः।

'फुंल्लुक्करं कलमकूरसमं वहन्ति
जे सिन्दुवारविडवा मह वल्लहा ते।
जे गालिदस्स महिसीदहिणो सरिच्छा
ते किं वि मुद्धवियइल्लपसूणपुञ्जा॥'

अत्र कलमभक्तमहिषीदधिशब्दानां लौकिकत्वेऽपि विदूषकोक्तौ गुणत्वम्।

---

देशप्रसिद्ध्या 'अस्यार्थस्य शब्दोऽयं सर्वत्र वाचकः' इति मन्यमानः प्रयुञ्जीत। व्युत्पत्तिर्यस्य नास्तीति वचनाच्च सव्युत्पत्तिकं देश्यं कदाचित्प्रयोज्यमेवेत्युक्तं भवति—यथा दूर्वायां छिन्नोद्भवाशब्दः, ताले भूमिपिशाचः, शर्वे महानटः, वृक्षे

---

१. 'पुष्पोत्करं कलमोदननिभं वहन्ति
ये सिन्दुवारविटपा मम वल्लभास्ते।
ये गालितस्य महिषीदध्नः सदृशा-
स्ते किं च मुग्धविचकिलप्रसूनपुञ्जाः॥' [इति संस्कृतम्।]

शास्त्रमात्रप्रसिद्धिर्यथा—

'यथायं दारुणाचारः सर्वदैव विभाव्यते ।
तथा मन्ये दैवतोऽस्य पिशाचो राक्षसोऽथ वा ॥'

अत्र दैवतशब्दः पुंलिङ्गे लिङ्गानुशासने प्रसिद्धः ।

यथा वा—

'सम्यग्ज्ञानमहाज्योतिर्गलिताशयताजुषः ।
विधीयमानमप्येतन्न भवेत्कर्म बन्धकम् ॥'

अत्राशयशब्दो वासनापरपर्यायो योगशास्त्र एव प्रसिद्धः ।

यथा वा—

'तीर्थान्तरेषु स्नानेन समुपार्जितसत्कृतः ।
सुरस्रोतस्विनीमेष हन्ति संप्रति सादरम् ॥'

अत्र हन्तीति गमनार्थं धातुपाठ एव प्रसिद्धम् ।

यथा वा—

'सहस्रगोरिवानीकं दुःसहं भवतः परैः ।'

अत्र गोशब्दस्याक्षिवाचकत्वमभिधानकोश एव प्रसिद्धम् ।

क्वचिद्गुणो यथा—

'सर्वकार्यशरीरेषु मुक्त्वाङ्गस्कन्धपञ्चकम् ।
सौगतानामिवात्मान्यो नास्ति मन्त्रो महीभृताम् ॥'

अत्राङ्गस्कन्धपञ्चकमित्यस्य तद्विध्यसंवादादौ गुणत्वम् ।

---

पशुभक्तः, चन्द्रामृतयोः समुद्रनवनीतम्, जले मेघक्षीरमित्यादि । **अङ्गेति ।** कर्मणामारम्भोपायः, द्रव्यपुरुषसंपत्, देशकालविभागः, विनिपातप्रतीकारः, कार्यसिद्धिश्चेति पञ्चाङ्गानि ॥ **स्कन्धेति ।** 'विज्ञानं वेदना संज्ञा संस्कारो रूप-

श्लेषे तु गुणो न दोषः। यथा—

'येन ध्वस्तमनोभवेन बलिजित्कायः पुराऽस्त्रीकृतो
यश्चोद्वृत्तभुजंगहारवलयोगङ्गां च योऽधारयत्।
यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामराः
पायात्स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः॥'

अत्र माधवपक्षे शशिमच्छब्दः क्षयशब्दश्चाप्रयुक्तः।

वाक्यस्य यथा—

'तस्याधिमात्रोपायस्य तीव्रसंवेगताजुषः।
दृढभूमिः प्रियप्राप्तौ यत्नः सफलितः सखे॥'

अत्राधिमात्रोपायादयः शब्दा योगशास्त्रे प्रसिद्धाः।

---

मेव च। भिक्षूणां शाक्यसिंहेन स्कन्धाः पञ्च प्रकीर्तिताः॥' **येन ध्वस्तेति।** माधवपक्षे—येन ध्वस्तं बालक्रीडायाम्। अनः शकटम्। अभवेन असंसारेण। बलिं जितवान्। यः कायः स पूर्वममृतहरणे स्त्रीत्वं नीतः। उद्वृत्तं भुजंगं कालियाख्यं पीडितवान्। रवे शब्दब्रह्मणि लयः समाप्तिर्यस्य। अगं गोवर्धनगिरिं गां च योऽधारयत्। शशिनं मथ्नाति यो राहुस्तस्य शिरोहरः। अन्धकानां वृष्णीनां क्षयं निवासं करोति यः स माधवः कृष्णः। उमाधवपक्षे—बलिजित्कायो विष्णुदेहस्त्रिपुरवधेऽस्त्रीकृतः शरतां नीतः। भुजंगाः सर्पाः। शशियुक्तं शिरो यस्य तथाभूतो हरः। यदि वा शशियुक्तं शिर आहुर्नाम च हर इति। अन्धकाख्यो दैत्यः॥ **तस्याधिमात्रोपायस्येति।** "तथा हि नव योगिनो भवन्ति। मृदूपायो मध्योपायोऽधिमात्रोपाय इति। तत्र मृदूपायस्त्रिविधः—मृदुसंवेगः, मध्यसंवेगः, तीव्रसंवेग इति। एवमितरावपि। तत्राधिमात्रोपायानां

---

१. 'ते खलु नवयोगिनो मृदुमध्याधिमात्रोपाया भवन्ति' इति पातञ्जलभाष्ये पाठः।

क्वचिद्गुणो यथा—

'अस्माकमद्य हेमन्ते देवाल्पत्वेन वाससः ।
अकितीव यजादीनां दुर्लभं संप्रसारणम् ॥'

अत्र प्रतिपाद्यप्रतिपादकयोस्तज्ज्ञतायां गुणः ।

अत्र व्रीडाजुगुप्सामङ्गलव्यञ्जकत्वेनाश्लीलत्वं त्रेधा ।

तत्र पदस्य यथा—

'साधनं सुमहद्यस्य यन्नान्यस्य विलोक्यते ।
तस्य धीशालिनः कोऽन्यः सहेतारालितां भ्रुवम् ॥'

'लीलातामरसाहतोऽन्यवनितानिःशङ्कदष्टाधरः
कश्चित्केसरदूषितेक्षण इव व्यामील्य नेत्रे स्थितः ।
मुग्धा कुड्मलिताननेन ददती वायुं स्थिता तस्य सा
भ्रान्त्या धूर्ततयाथ वा नतिमृते तेनानिशं चुम्बिता ॥'

'मृदुपवनविभिन्नो मत्प्रियाया विनाशा-
घनरुचिरकलापो निःसपत्नोऽस्य[1] जातः ।
रतिविलुलितबन्धे केशपाशे सुकेश्याः
सति कुसुमसनाथे कं हरेदेष बर्हीं ॥'

एषु साधनवायुविनाशशब्दा व्रीडादिव्यञ्जकाः ।

---

"तीव्रसंवेगानामासन्नः समाधिलाभः समाधिफलं च भवति ॥" "संपिपादयिषया चित्तवृत्तिनिरोधसाधनानुष्ठानं योऽभ्यासः "स[2] दीर्घकालनैरन्तर्येण सत्का-

---

१. 'ऽद्य' का० प्र०.

---

१. 'इदं सूत्रम् । शेषं भाष्यम्' इति वाचस्पत्यम्. २. इदं पातञ्जलसूत्रं समाधिपादे चतुर्दशम् । शेषं भाष्यम्.

वाक्यस्य यथा—

'भूपतेरुपसर्पन्ती कम्पना वामलोचना ।
तत्तत्प्रहणनोत्साहवती मोहनमादधौ ॥'

कम्पना सेना, वामं शत्रुं प्रति विरुद्धं वल्गु च । अत्रोपसर्पणप्रहणनमोहनशब्दा व्रीडादायित्वादश्लीलाः ।

'तेऽन्यैर्वान्तं समश्नन्ति परोत्सर्गं च भुञ्जते ।
इतरार्थग्रहे येषां कवीनां स्यात्प्रवर्तनम् ॥'

अत्र वान्तोत्सर्गप्रवर्तनशब्दा जुगुप्सादायिनः ।

'पितृवसतिमहं व्रजामि तां सह परिवारजनेन यत्र मे ।
भवति सपदि पावकान्वये हृदयमशेषितशोकशल्यकम् ॥'

पावकेन पवित्रेणाग्निना च । अत्र पितुर्गृहमित्यादौ विवक्षिते श्मशानादिप्रतीतावमङ्गलार्थत्वम् ।

क्वचिद्गुणो यथा—

सुरतगोष्ठ्यां 'द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु' इति कामशास्त्रस्थितिः ।

'करिहस्तेन संबाधे प्रविश्यान्तर्विलोलिते ।
उपसर्पन्ध्वजः पुंसः साधनान्तर्विराजते ॥'
'तर्जन्यनामिके श्लिष्टे मध्या पृष्ठस्थिता तयोः ।'

रासेवितो दृढभूमिः" । दीर्घकालेनासेवितो निरिछद्रासेवितस्तपसा ब्रह्मचर्येण विद्यया श्रद्धया संपादितः सत्कारवान् । दृढभूमिर्व्युत्थानसंस्कारेण द्रागित्येवान-

१. 'मध्यमा पृष्ठतस्तयोः' इत्युदाहरणचन्द्रिकायां पाठः.

[1]करिहस्तः.................. । संबाधः संघट्टो वराङ्गं च । ध्वजः पताकावच्चिह्नं पुंव्यञ्जनं च । साधनं सैन्यं स्त्रीव्यञ्जनं च ।

शमकथासु यथा—

'उत्तानोच्छूनमण्डूकपाटितोदरसंनिभे ।
क्लेदिनि स्त्रीव्रणे सक्तिरकृमेः कस्य जायते ॥'

'निर्वाणवैरदहनाः प्रशमादरीणां
नन्दन्तु पाण्डुतनयाः सह माधवेन ।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥'

अत्र भाव्यमङ्गलसूचनम् । रक्ताः सानुरागाः । प्रसाधिता अर्जिता भूर्यैः । रक्तेन मण्डिता भूश्च यैः । विग्रहो वैरं शरीरं च । स्वस्थाः कुशलिनः स्वर्गस्थाश्च ॥

अवाचकत्वात्कल्पितार्थत्वात्संदिग्धत्वाच्च विवक्षितमर्थं वक्तुमशक्तिरसमर्थत्वम् ।

पदस्य यथा—

'हा धिक्सा किल तामसी शशिमुखी दृष्टा मया यत्र सा,
तद्विच्छेदरुजान्धकारितमिदं दग्धं दिनं कल्पितम् ।
किं कुर्मः, कुशले सदैव विधुरो धाता, न चेत्तत्कथं
नादृग्यामवतीमयो भवति मे नो जीवलोकोऽधुना ॥'

---

भिभूतविषय इत्यर्थः ॥ अवाचकत्वादित्यनेनावाचकत्वप्रसिद्धिहततत्वयोः, कल्पितार्थत्वादित्यनेन नेयार्थत्वस्य, संदिग्धत्वादित्यनेन संदिग्धत्वस्यासमर्थत्वदोषेऽन्त-

---

१. 'करिहस्त इति प्रोक्तः कामशास्त्रविशारदैः' इति परिभाषितेन' इत्युदाहरणचन्द्रिकायां पाठदर्शनादत्र कियान्पाठस्त्रुटितः प्रतीयते.

अत्र दिनमिति प्रकाशमयमित्यर्थेऽवाचकम्। यथा वा—

'जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः।
भर्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापी-
संभूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः॥'

अत्र दधदित्यर्थे विदधदित्यवाचकम्। यथा वा—

'चापाचार्यस्त्रिपुरविजयी कार्तिकेयो विजेयः
शस्त्रव्यस्तः सदनमुदधिर्भूरियं हन्तकारः।
अस्त्येवैतत्किमु कृतवता रेणुकाकण्ठबाधां
बद्धस्पर्धस्तव परशुना लज्जते चन्द्रहासः॥'

अत्र विजित इत्यत्रार्थे विजेय इत्यवाचकः। यथा च—

'महाप्रलयमारुतक्षुभितपुष्करावर्तक-
प्रचण्डघनगर्जितप्रतिरुतानुकारी मुहुः।
रवः श्रवणभैरवः स्थगितरोदसीकन्दरः
कुतोऽद्य समरोदधेरयमभूतपूर्वः पुरः॥'

अत्र रवो मण्डूकादिषु प्रसिद्धो, न तूक्तविशेषणे सिंहनादे इत्यवाचकः। तथा च—

---

भीवमाह—**मण्डूकादिषु प्रसिद्ध इति**। मण्डूकादीनां शब्दो रवोऽभिधीयत इत्यर्थः। यथा च—'यमिन्द्रशब्दार्थनिसूदनं हरेर्हिरण्यपूर्वं कशिपुं प्रचक्षते।' अत्र हिरण्यकशिपुमिति वक्तव्ये हिरण्यपूर्वं कशिपुमित्यवाचकम्। यतोऽत्र हिरण्यशब्दः कशिपुशब्दश्चाभिधेयप्रधानौ वा स्याताम्, स्वरूपमात्रप्रधानौ वा। तत्र न तावदभिधेयप्रधानावनभ्युपगमात्। अर्थस्यासमुच्चयात्। नापि स्वरूपप्रधानौ, न ह्येवमसुरविशेषस्य हिरण्यकशिपोरभिधानानुकारः प्रख्यानक्रियाकर्मभावेनाभिहितो भवति। द्विविधो हि शब्दानुकारः। शाब्दत्वार्थत्वभेदात्। तत्रेतिना

'मञ्जीरादिषु रणितप्रायं, पक्षिषु च कूजितप्रभृति।
स्तनितमणितादि सुरते मेघादिषु गर्जितप्रभृति॥
दृष्ट्वा प्रयुज्यमानानेवंप्रायांस्तथा प्रयुञ्जीत।
अन्यत्रैतेऽनुचिताः शब्दार्थत्वे समानेऽपि॥'

क्वचिद्गुणो यथा—
'आशुलम्बितवतीष्टकराग्रैर्नीविमर्धमुकुलीकृतदृष्ट्या।
रक्तवैणिकहताधरतनू(?)मण्डलक्वणितचारु चुकूजे॥'

---

व्यवच्छेदे शाब्दः प्रसिद्ध एव। अर्थादवच्छेदावगतावार्थः। यथा—'महदपि परदुःखं शीतलं सम्यगाहुः।' इह चायमर्थोऽनुकार इति नानावच्छेदात्। केवलं यत्तस्याभिधानमनुकार्यं तन्नानुकृतम्। यच्चानुकृतं तत्तस्याभिधानमेव न भवति। लोके हि हिरण्यकशिपुरिति तस्याख्या न हिरण्यपूर्वः कशिपुरित्यतः तस्याऽवाचकम्॥ यथा वा—'क्षुण्णं यदन्तःकरणेन वृक्षाः फलन्ति कल्पोपपदास्तदेव।' इत्यत्र कल्पवृक्षा इति वक्तव्ये कल्पोपपदा वृक्षा इत्यवाचकम्। यतो विशेषणमिदमभिधानस्वरूपविषयमेवावकल्पते नाभिधेयविषयम्, सोपपदत्वनिरुपपदत्वयोरभिधानधर्मत्वात्। न चेतने विशेषितेन किंचित्प्रयोजनम्। अभिधानमात्रादनभिमतार्थसिद्धेः। अभिधेयविषयत्वे च तत्सिद्धिर्भवेत्, किं तु न तत्र यथोक्तविशेषणसंबन्धः संगच्छते। यत्र च संगच्छते न ततोऽभिमतार्थसिद्धिरिति अवाचकत्वादसमर्थमेवेति। तस्माद्वरमयमत्र पाठः श्रेष्ठः—'क्षुण्णं यदन्तःकरणेन नाम तदेव कल्पद्रुमकाः फलन्ति।' अस्मिंश्च पाठे क्षुण्णस्यार्थस्य कल्पद्रुमाणां वावगतौ गुणान्तरलाभः। एवम् 'दशपूर्वरथं यमाख्यया दशकण्ठारिगुरुं प्रचक्षते।' इत्यादावपि द्रष्टव्यम्॥ **मञ्जीरादीति**। आदिग्रहणं रशनाघण्टाभ्रमराद्यर्थम्। प्रायग्रहणं सदृशार्थवृत्तिकणिसिञ्जि[1]गुञ्जीत्याद्यर्थम्। प्रभृतिग्रहणं वेश्येत्याद्यर्थम्[2]। पुनरादिग्रहणं सिंहमृगाद्यर्थम्। प्रायग्रहणमपि ध्वनत्याद्यर्थम्। **एवंप्रायानिति**। ये शास्त्र[3]सामान्येन पच्यन्ते[4], अथ च विशेष एव दृश्यन्ते तानित्यर्थः। तद्यथा—हेषतिरश्वेषु, भणतिः पुरुषेषु, कणतिः पीडितेषु, वातिर्वायौ,

---

१. 'शिञ्जि' स्यात्. २. 'तिरश्चां रुतवाशिते' इत्यभिधानात् 'वाशिताद्यर्थम्' स्यात्. ३. 'शास्त्रे' स्यात्. ४. 'पठ्यन्ते' स्यात्.

अत्र कूजितस्य पक्षिषु प्रसिद्धत्वेऽपि कामशास्त्रे प्रसिद्धत्वाद्गुणः। यथा वा उपमायाम्—

'पतिते पतङ्गमृगराजि निजप्रतिबिम्बरोषित इवाम्बुनिधौ।
अथ नागयूथमलिनानि जगत्परितस्तमांसि परितस्तरिरे॥'

अत्र नागयूथेन धर्मिणा साम्यं तमसो वक्तुमभिमतं कवेर्न तद्धर्मेण मलिनत्वमात्रेण, मृगपतौ पतिते तस्यैव निः[1]प्रतिपक्षतया स्वेच्छाविहारोपपत्तेः न तद्वन्मलिनानां तमसाम्, पतङ्गस्य मृगपतिरूपणावैयर्थ्यप्रसङ्गात्। न च तत्साम्यं सुन्दरहारिसदृशसुभगसंनिभादिशब्दा इव मलिनादिशब्दाः शक्नुवन्ति वक्तुम् इत्यवाचकत्वम्।

यथा वा उत्प्रेक्षायाम्—

'उद्ययौ दीर्घिकागर्भान्मुकुलं मेचकोत्पलम्।
नारीलोचनचातुर्यशङ्कासंकुचितं यथा॥'

अत्र ध्रुवेवादिशब्दवद्यथाशब्दः संभावनं प्रतिपादयितुं नोत्सहते इत्यवाचकः।

यथा वार्थान्तरन्यासे—

'किमपेक्ष्य फलं पयोधरान्ध्वनतः प्रार्थयते मृगाधिपः।
प्रकृतिः खलु सा महीयसः सहते नान्यसमुन्नतिं यया॥'

अत्र महीयस इत्येकवचनं न सामान्यमर्थरूपं व्यक्तमभिधातुं क्षमते इत्यवाचकत्वम्। बहुवचनस्यैव वीप्सासमानफलस्य स्फुटत्वेन तदभिव्यक्तिक्षमत्वात्। यथा—

'यावदर्थपदां वाचमेवमाधाय माधवः।
विरराम महीयांसः प्रकृत्या मितभाषिणः॥'

---

१. 'निष्प्रति' स्यात्.

सर्वादिशब्दोपादाने त्वेकवचनस्यापि न दोषः । यथा—

'छायामपास्य महतीमपि वर्तमाना-
मागामिनीं जगृहिरे जनतास्तरूणाम् ।
सर्वोऽपि नोपनतमप्यपचीयमानं
वर्धिष्णुमाश्रयमनागतमभ्युपैति ॥'

वाक्यस्य यथा—

'विभजन्ते न ये भूपमालभन्ते न ते श्रियम् ।
आवहन्ति न ते दुःखं प्रसरन्ति न ये प्रियाम् ॥'

अत्र विभजतिर्विभागार्थः सेवने, आलभतिर्विनाशार्थो लाभे, आवहतिः करोत्यर्थो धारणे, सरतिर्विसरणार्थः सरणेऽवाचकः ।

कल्पितार्थत्वाद[1]समर्थम् ।

पदस्य यथा—

'किमुच्यतेऽस्य भूपाल मौलिमालामहामणेः ।
सुदुर्लभवचोबाणैस्तेजो यस्य विभाव्यते ॥'

अत्र वचःशब्देन गीःशब्दो [2]लक्षित इति कल्पितार्थत्वम् । [3]अत्र न केवलं पूर्वपदम्, यावदुत्तरपदमपि पर्यायपरिवर्तनं न क्षमते । जलध्यादौ तूत्तरपदमेव, वडवानलादौ तु पूर्वपदमेव । यथा[4]ह—

'निरूढा लक्षणाः काश्चित्सामर्थ्यादभिधानवत् ।
क्रियन्ते सांप्रतं काश्चित्काश्चिन्नैव त्वशक्तितः ॥'

इति ।

---

१. 'दसमर्थत्वम्' स्यात्. २. 'लक्ष्यते' का० प्र०. ३. 'अत्र खलु न' प्रकाशे. ४. कुमारिलभट्टः.

वाक्यस्य यथा—

'सपदि पङ्क्तिविहंगमनामभृत्तनयसंवलितं बलशालिना ।
विपुलपर्वतवर्षिशितैः शरैः प्लवगसैन्यमुलूकजिता जितम् ॥'

पङ्क्तिरिति दशसंख्या लक्ष्यते। विहंगमोऽत्र चक्रस्तन्नामभृतो रथाः। दश रथा यस्य, तत्तनयौ रामलक्ष्मणौ उलूकजिता इन्द्रजिता कौशिकशब्देनेन्द्रोलूकयोरभिधानमिति कौशिकशब्दवाच्यत्वेनेन्द्र उलूक उक्तः।

संदिग्धत्वादसमर्थत्वम् ।

पदस्य यथा—

'आलिङ्गितस्तत्र भवान्संपराये जयश्रिया ।
आशीःपरम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु ॥'

अत्र वन्द्यां किं हठहृतमहेलायां[1] किं नमस्यामिति संदेहः। यथा वा—

'कस्मिन्कर्मणि सामर्थ्यमस्य नोत्तपतेतराम् ।
अयं साधुचरस्तस्मादञ्जलिर्बध्यतामिह ॥'

अत्र 'भूतपूर्वे चरट्' इति चरट्प्रत्यये किं पूर्वं साधुः, उत साधुषु चरतीति संदेहः ।

क्वचिद्गुणो यथा—

'पश्याम्यनङ्गजातङ्कलङ्घितां तामनिन्दिताम् ।
कालेनैव कठोरेण ग्रस्तां किं नस्तदाशया ॥'

अत्र विरहातुराया ग्रीष्मकाल उपनते किं ग्रीष्मवाची कालशब्दः उत मृत्युवाचीति संदेहकारीदं वचनं युवानमाकुलीकर्तुं प्रयुक्तमिति ।

वाक्यस्य यथा—

'सुरालयोल्लासपरः प्राप्तपर्याप्तकम्पनः ।
मार्गणप्रवणो भास्वद्भूतिरेष विलोक्यते ॥'

---

१. 'महिलायां' प्रकाशे.

अत्र किं सुरादिशब्दा देवसेनाशरविभूत्यर्थाः, उत मदिराद्यर्था इति संदेहः ।

क्वचिद्गुणो यथा—

'पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ।
विलसत्करेणुगहनं संप्रति सममावयोः सदनम् ॥'

अत्र वाच्यमहिम्ना नियतार्थप्रतिपत्तिकारित्वे व्याजस्तुतिपर्यवसायित्वाद्गुणत्वम् ।

**अनुचितार्थत्वं** पदस्य यथा—

'तपस्विभिर्या सुचिरेण लभ्यते प्रयत्नतः सत्रिभिरिष्यते च या ।
प्रयान्ति तामाशु गतिं यशस्विनो रणाश्वमेधे पशुतामुपागताः ॥'

अत्र पशुपदं कातरतामभिव्यनक्तीत्यनुचितार्थम् ।

यथा वा उपमायाम्—

'क्वचिदग्रे प्रसरता क्वचिदापत्य निम्नता ।
शुनेव सारङ्गकुलं त्वया भिन्नं द्विषां बलम् ॥'

तथा—

'वह्निस्फुलिङ्ग इव भानुरयं चकास्ति ।'
'अयं पद्मासनासीनश्चक्रवाको विराजते ।
युगादौ भगवान्ब्रह्मा विनिर्मित्सुरिव प्रजाः ॥'
'पातालमिव नाभिस्ते स्तनौ क्षितिधरोपमौ[1] ।
वेणीदण्डः पुनरयं कालिन्दीपातसंनिभः ॥'

---

न त्वन्यत्र । न हि भवति पुरुषो वातीति । एवमन्यदपि बोद्धव्यम् ॥ **पृथुकार्तस्वरेति** । पृथुकानां बालानां ये आर्ताः स्वरास्तेषां पात्रम्, पृथूनि कार्तस्वरस्य स्वर्णस्य भाजनानि च यत्र । भुवि उषितो भूषितः, अलंकृतश्च । विलसत्करेणुगर्त-

---

१. 'क्षिति' प्रकाशोक्तं स्यात्.

एषु श्वाद्युपमानानां जातिप्रमाणगता हीनताधिकता चेत्यनुचितार्थत्वम्।

निन्दायां प्रोत्साहने च न दोषः। यथा—

'चतुरसखीजनवचनैरतिवाहितवासरां विनोदेन।
निशि चण्डाल इवायं मारयति वियोगिनीश्चन्द्रः॥'

इति।

'विशन्तु वृष्णयः शीघ्रं रुद्रा इव महौजसः।'

इति च।

यथा वा उत्प्रेक्षायाम्—

'दिवाकराद्रक्षति यो गुहासु लीनं दिवा भीतमिवान्धकारम्।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैःशिरसां सतीव॥'

अत्राचेतनस्य तमसस्तात्विकेन रूपेण दिवाकरात्रास एव न संभवति, कुत एव तत्प्रयोजितमद्रिपरित्राणम्। संभावितेन तु रूपेण प्रतिभासमानस्य न काचिदनुपपत्तिरवतरतीत्यनुचितैव तत्समर्थना।

वाक्यस्य यथा—

'कुविन्दस्त्वं तावत्पटयसि गुणग्राममभितो
यशो गायन्त्येते दिशि दिशि वनस्थास्तव विभो।
जरज्ज्योत्स्नागौरस्फुटविकटसर्वाङ्गसुभगा
तथापि त्वत्कीर्तिर्भ्रमति विगताच्छादनमिह॥'

अत्र कुविन्दादिशब्दास्तन्तुवायादिमभिदधाना उपश्लोक्यमानस्य तिरस्कारं व्यञ्जयन्तीत्यनुचितार्थम्।

परुषवर्णत्वं **श्रुतिकटुत्वम्।**

पदस्य यथा—

'अनङ्गमङ्गलगृहापाङ्गभङ्गितरङ्गितैः।
आलिङ्गितः स तन्वङ्ग्या कार्तार्थ्यं लभते कदा॥'

अत्र कार्तार्थ्यमिति।

वाक्यस्य यथा—

'अचूचुरच्चण्डि कपोलयोस्ते कान्तिद्रवं द्राग्विशदं शशाङ्कः।'

अत्र चण्डिद्रागादीनि पदानि श्रुतिकटूनि।

वक्राद्यौचित्ये गुणो यथा—

'दीधीङ्वेवीङ्समः कश्चिद्गुणवृद्ध्योरभाजनम्।
क्विप्प्रत्ययनिभः कश्चिद्यत्र संनिहिते न ते॥'

अत्र वैयाकरणो वक्ता।

'यदा त्वामहमद्राक्षं पदविद्याविशारदः।
उपाध्यायं तदास्मार्षं समस्प्राक्षं च संमदम्॥'

अत्र वैयाकरणः प्रतिपाद्यः।

'मातङ्गाः किमु वल्गितैः किमफलैराडम्बरैर्जम्बुकाः
सारङ्गा महिषा मदं व्रजत किं शून्येषु शूरा न के।
कोपाटोपसमुद्भटोत्कटसटाकोटेरिभारेः शनैः[2]
सिन्धुध्वानिनि हुंकृते स्फुरति यत्तद्गर्जितं गर्जितम्॥'

अत्र सिंहे वाच्ये परुषाः शब्दाः।

'अन्त्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कङ्कण-
प्रायप्रेङ्खितभूरिभूषणरवैराघोषयत्यम्बरम्।
पीतच्छर्दितरक्तकर्दमघनप्राग्भार[3]घोरोल्लल-
द्व्यालोलस्तनभारभैरववपुर्दर्पोद्धतं धावति॥'

---

संधिभिः पांसुभिर्गहनम्, विलसन्तीभिः करेणुभिः व्याप्तं च॥ प्राघारः सेकः॥

---

१. 'दस्रू' प्रकाशे. २. 'पुरः' प्रकाशे. ३. 'प्राग्भारघोरोल्लस-' प्रकाशे.

अत्र बीभत्से व्यङ्ग्ये।

'रक्ताशोक कृशोदरी क नु गता त्यक्त्वानुरक्तं जनं
नो दृष्टेति मुधैव चालयसि किं वाताभिभूतं शिरः।
उत्कण्ठाघटमानषट्पदघटासंघट्टदष्टच्छद-
स्तत्पादाहतिमन्तरेण भवतः पुष्पोद्गमोऽयं कुतः॥'

अत्र शिरोधूननेन कुपितस्य वचसि प्रक्रान्ते॥

क्वचिन्नीरसे न गुणो न दोषः। यथा—

'शीर्णघ्राणाङ्घ्रिपाणीन्व्रणिभिरपघनैर्घर्घराव्यक्तघोषा-
न्दीर्घाघ्रातानघौघैः पुनरपि घटयत्येक उल्लाघयन्यः।
घर्मांशोस्तस्य वोऽन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्ते-
र्दत्तार्घाः सिद्धसंघैर्विदधतु घृणयः शीघ्रमंहोविघातम्॥'

व्यवहितार्थप्रत्ययजनकत्वं **क्लिष्टत्वम्**।

पदस्य यथा—

'दक्षात्मजादयितवल्लभवेदिकानां
ज्योत्स्नाजुषां जललवास्तरलं पतन्ति।'

दक्षात्मजास्तारास्तासां दयितश्चन्द्रस्तस्य वल्लभाः कान्तास्तद्वेदिकानामिति।

झगित्यर्थप्रतीतौ गुणः। यथा—

'काञ्चीगुणस्थानमनिन्दितायाः'।

---

उल्लङ्घयन् स्वास्थ्यं नयन्। **दक्षात्मजेति**। अत्रैकपदप्रत्याय्योऽप्यर्थश्चन्द्रकान्तलक्षणो दक्षात्मजेत्याद्यनेकपदप्रत्यायितार्थपर्यालोचनाव्यवहिततया क्लिश्यमानो वाचकस्य क्लिश्यतामावहति॥ **काञ्चीगुणस्थानमिति**। अत्र रूढत्वादवान्तर-

१. 'उल्लाघय' स्यात्. २. 'क्लिष्टता' स्यात्.

वाक्यस्य यथा—

'धम्मिल्लस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः।

रज्यत्यपूर्वबन्धव्युत्पत्तेर्मानसं शोभाम्॥'

अत्र धम्मिल्लस्य शोभां प्रेक्ष्य कस्य मानसं न रज्यति इति संबन्धे क्लिष्टत्वम्॥

अविमृष्टः प्राधान्येनानिर्दिष्टो विधेयोंऽशो यत्र तस्य भावोऽविमृष्टविधेयांशत्वम्।

पदस्य यथा—

'वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु।

वरेषु यद्बालमृगाक्षि मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने॥'

अत्रालक्षितत्वं नानुवाद्यम्, अपि तु विधेयमिति 'अलक्षिता जनिः' इति वाच्यम्। यथा—

'स्रस्तां नितम्बादवलम्बमानां पुनः पुनः केसरपुष्पकाञ्चीम्।

न्यासीकृतां स्थानविदा स्मरेण द्वितीयमौर्वीमिव कार्मुकस्य॥'

अत्र 'मौर्वीं द्वितीयामिव' इति द्वितीयात्वमात्रमुत्प्रेक्ष्यम्। यथा च—

'तं कृपामृदुरवेक्ष्य भार्गवं राघवः स्खलितवीर्यमात्मनि।

स्वं च संहितममोघसायकं व्याजहार हरसूनुसंनिभः॥'

अत्र सायकानुवादेनामोघत्वं विधेयम्। 'अमोघमाशुगम्' इति तु युक्तः पाठः। यथा च—

'मध्येव्योम त्रिशङ्कोः शतमुखविमुखः स्वर्गसर्गं चकार।'

इत्यत्र हि व्योमैव प्राधान्येन विवक्षितम्, न तन्मध्यम् । तेन 'मध्ये व्योम्नः' इति युक्तम् । यथा वा—

'वाच्या वैचित्र्यरचनाचारुवाचस्पतेरपि ।
दुर्वचं वचनं तेन बहु तत्रास्म्यनुक्तवान् ॥'

अत्र नोक्तवानिति निषेधो विधेयः । यथा—

'नवजलधरः संनद्धोऽयं न दृप्तनिशाचरः'

इत्यादौ । न चानुक्तवत्त्वानुवादेनान्यदत्र किंचिद्विहितम् । यथा—

'जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः ।
अगृध्नुराददे सोऽर्थानसक्तः सुखमन्वभूः ॥'

अत्रात्रस्त इत्यनुवादेनात्मनो गोपनादि ।

---

पदार्थप्रत्ययमन्तरेणैव एकपदवदर्थप्रतीतिरिति नैतत्क्लिष्टम् ॥ **व्योमैव प्राधान्येनेति** । अत्र विश्वामित्रस्य तपःप्रभावप्रकर्षः प्रस्तुतः । स च तस्य निरुपकरणस्य सतः शून्यो व्योमनि स्वर्गसर्गसामर्थ्येनैव प्रतिपादितो भवतीति व्योमैव प्राधान्येन विवक्षितम्, न तन्मध्यम् ॥ **निषेधो विधेय इति** । प्रसज्यविषयत्वादित्यर्थः । यदुक्तम्—'अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता । प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ॥' नञ्समासस्त्वनुपपन्नः । तस्य हि पर्युदास एव विषयस्तत्रैव विशेषणत्वान्नञ्स्याद्यन्तेनोत्तरपदेन संबन्धोपपत्तेः । यदाह—'प्रधानत्वं विधेर्यत्र प्रतिषेधे प्रधानता । पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥' न च पर्युदासाश्रयणं युक्तम्, अर्थस्यासंगतिप्रसङ्गात् । उक्तवत्त्वप्रतिषेधो ह्यत्राभिमतः, नानुक्तवत्त्वविधिः । तस्मादस्य नञो विधेयार्थनिष्ठतया प्राधान्यस्यानूद्यमानार्थपरतया तद्विपरीतवृत्तिना उक्तवच्छब्देन सह सदाचारनिरतस्येव पतितेन वृत्तिर्नेष्यत एवेति स्थितम् । यदाह—'नञर्थस्य विधेयत्वे

---

१. 'मुक्तानु' प्रकाशे.

---

१. 'शून्ये' स्यात्. २. 'ञः स्याद्यन्ते' स्यात्.

वाक्यस्य यथा—

'शय्या शाड्वलमासनं शुचिशिला सद्म द्रुमाणामधः
शीतं निर्झरवारि पानमशनं कन्दाः सहाया मृगाः ।
इत्यप्रार्थितसर्वलभ्यविभवे दोषोऽयमेको वने
दुष्प्रापार्थिनि यत्परार्थघटनावन्ध्यैर्वृथा स्थीयते ॥'

अत्र शाड्वलानुवादेन[1] शय्यादीनि विधेयानि । अत्र च शब्दरचना विपरीता कृतेति वाक्यस्यैव दोषः, न वाक्यार्थस्य । एवं विध्यनुवादौ कर्तव्यौ—

'वक्तारवी[2] निवसनं मृगचर्म शय्या
गेहं[3] गुहा विपुलपत्रपुटा घटाश्च[4] ।

---

निषेधस्य विपर्यये । समासो नेष्यतेऽर्थस्य विपर्यासप्रसङ्गतः ॥' इति ॥ **शय्यादीनि विधेयानीति** । यदाहुः—'अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत् । न ह्यलब्धास्पदं किंचित्कुत्रचित्प्रतितिष्ठति ॥ विधेयोद्देश्यभावोऽयं रूप्यरूपकभावः[1] । न तत्र विधेयोक्तिरुद्देश्यात्पूर्वमिष्यते ॥' न[2] तु 'शाड्वलं शय्या शुचिशिला आसनम्' इत्येवं विपर्ययेणात्र संबन्धः करिष्यते, तस्य पुरुषाधीनत्वात् । तथा च न यथोक्तदोषावकाशो भविष्यतीति । सत्यम् । स[3] सर्वविषयोऽयं संबन्धस्य पुरुषाधीनत्वोपगमः । तस्य हि विशेषणविशेष्यभाव एव विषयोऽवगन्तव्यो यत्र स्वसौन्दर्यादेव तयोरन्योन्याक्षेपः, न विध्यनुवादभावः । तदाह—**एवं[4] चेति** । विध्यनुवादयोर्यथाश्रुतपदार्थसंबन्धनिबन्धनोऽर्थप्रतीतिक्रम इति पदार्थपौर्वापर्यनियमोऽवगन्तव्य इत्यर्थः । ततश्च यदनूद्यते तस्यादावुपादानमनुपपन्नम् । यस्तु विधीयते तस्य पश्चात् । 'विलिखने विलेपो भवति' इत्यादौ च तथैव दृष्टम् ।

---

१. 'शाड्वलाद्यनु' स्यात्. २. 'त्वक् तारवी नि' इति पाठो भवेत्. ३. छन्दोनुरोधेन विधेयस्य गेहस्य प्राक्प्रयोगः प्रतिभाति. ४. कुम्भा इत्यर्थः.

---

१. 'कभावतः । न हि तत्र' स्यात्. २. 'ननु' स्यात्. ३. 'न' स्यात्. ४. 'एवं वीति' स्यात्.

मूलं दलं च कुसुमं च फलं च भोज्यं
पुत्रस्य जातमटवीगृहमेधिनस्ते ॥'

यथा वा—

'संरम्भः करिकीटमेघशकलोद्देशेन सिंहस्य यः
सर्वस्यापि स जातिमात्रविहितो हेवाकलेशः किल ।
इत्याशाद्विरदक्षयाम्बुदघटाबन्धेऽप्यसंरब्धवा-
न्योऽसौ कुत्र चमत्कृतेरतिशयं यात्वम्बिकाकेसरी ॥'

अत्र योऽसाविति पदद्वयमनुवाद्यविधेयार्थतया विवक्षितमनुवाद्य-मात्रप्रतीतिकृदिति यद्ः प्रयोगोऽनुपपन्नः । तथा हि । यत्र यत्तदोरेकतर-निर्देशेनोपक्रमस्तत्र तत्प्रत्यवमर्शिना तदितरेणोपसंहारो न्याय्यः । तयो-

---

तथा 'वृद्धिरादैच्' इत्यत्र भगवता महाभाष्यकारेणावस्थापितम्—यदत्र मङ्गल-द्योतनार्थमादौ वृद्धिशब्दस्योपादानं क्षमणीयम् ॥ अन्यथा दैजनुवादेन वृद्धिसंज्ञा-विधानात्पश्चादभिधानं कार्यं स्यात्, यथा 'अदेङ्गुणः' इत्येवमादौ ॥ 'प्रमाणम-विसंवादि ज्ञानम्' इत्यत्रापि 'यत्प्रमाणमिति लोके प्रसिद्धम्, तदविसंवादि ज्ञान-मेवेति विज्ञेयम्' इति तात्पर्यार्थः । काव्येऽपि एषैव शैली । यथा—'इयं गेहे लक्ष्मीः' इत्यादि ॥ **संरम्भ इति** । अत्र करिणां कीटव्यपदेशेन तिरस्कारः, तोयदानां च शकलशब्दाभिधानेनादरः । **सर्वस्येति** । अस्य कस्यचित्तुच्छ-प्रायस्येति अवहेला । जातेश्च मात्रशब्दविशिष्टत्वेनावलेपः हेलाशब्दाभिधाने-नाल्पताप्रतिपत्तिरित्येतत्साधनतया कविनोपनिबद्धम् । असंरब्धवानित्यत्र त्ववि-मृष्टत्वविधेयांशत्वं प्रामादिकं तच्चानन्तरमेव दर्शितम् । पुनरविमृष्टविधेयांशत्व-मेवाह—**अत्र योऽसाविति** । (एतदेव द्रढयितुं निदर्शयति—**त्वत्कारवी-**

---

१. 'एतदेकमाचार्यस्य मङ्गलार्थं मृष्यताम्' इति हि महाभाष्ये पाठः. २. अयं धनुश्चिह्नान्तर्गतपाठः 'संरम्भ इति' इत्यादि ग्रन्थात्प्राक्तनो भवेत्. ३. त्वक् तारवी नि' इति भवेत्.

रप्यनुवादविधेयार्थविषयत्वेनेष्टत्वात्, तयोश्च परस्परापेक्षया संबन्धस्य नित्यत्वात्। अत एवाहुः—'यत्तदोर्नित्यमभिसंबन्धः' इति।

स चायमनयोरुपक्रमो द्विविधः—शब्दश्चार्थश्चेति।

तयोरुभयोरुपादाने सति शाब्दो यथा—

'यदुवाच न तन्मिथ्या यद्ददौ न जहार तत्।'

तथा च—

'स दुर्मतिः श्रेयसि यस्य नादरः स पूज्यकर्मा सुहृदां शृणोति यः।' इति।

एकतरस्योपादाने सत्यार्थः, तदितरस्यार्थसामर्थ्येनाक्षेपात्।

तत्र तदः केवलस्योपादाने आर्थः प्रसिद्धानुभूतप्रक्रान्तविषयतया त्रिविधः।

तत्र प्रसिद्धार्थविषयो यथा—'द्वयं गतम्–' इत्यादि।

अनुभूतविषयो यथा—'ते लोचने प्रतिदिशं विधुरे क्षिपन्ती' इति।

प्रक्रान्तविषयो यथा—

'कातर्यं केवला नीतिः शौर्यं श्वापदचेष्टितम्।
अतः सिद्धिं समेताभ्यामुभाभ्यामन्वियेष सः॥'

यदः पुनरुत्तरवाक्यार्थगतत्वेनैवोपात्तस्यार्थसंबन्धः संभवति, पूर्ववाक्यगतस्य तच्छब्दस्यार्थादाक्षेपात्।

यथा—

'साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके।
उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः॥'

प्रागुपात्तस्य यच्छब्दस्य तच्छब्दोपादानं विना साकाङ्क्षतैव। यथात्रैव श्लोके आद्यपादयोर्विपर्यये।

क्वचिदनुपात्तमपि द्वयं सामर्थ्याद्गम्यते ।

यथा—

'ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान्प्रति नैष यत्नः ।
उत्पत्स्यते[1] तु मम कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥'

अत्र स कोऽप्युत्पत्स्यते यं प्रति यत्नो मे सफलो भविष्यतीत्युभयोरपि अर्थादाक्षेपः ॥ एवं च स्थिते तच्छब्दानुपादानेऽत्र साकाङ्क्षत्वम् ।

---

**निवसनमिति)** ॥ **ये नाम केचिदिति** । नामशब्दोऽक्षमायाम् । यदुक्तम्—'नाम कुत्साप्रश्नविषादामर्षप्रीतिसंख्यानृतानयसंभावनासु ।' ये केचिदिह प्रबन्धे देशकाले वास्माकमवज्ञां कुर्वन्ति, ते किमपि स्वल्पं किंचिल्लोकोत्तरं वा जानन्ति, तान् प्रति नैष प्रकरणनिर्माणविषयो यत्नः, तेषां स्तोकदर्शित्वात् । लोकोत्तरं यं[1]जानन्तीति व्याख्यातं(?)तत्तेषामुपहासाय । कान्प्रति तर्हीत्याह—**उत्पत्स्यते त्विति** । सारेतरविभागज उत्पत्स्यते कश्चिदिति संभाव्यते ॥ **एवमिति** । तथा हि—सर्वेषामेव तावत्समासानां प्रायेण विशेषणविशेष्याभिधायिपदोपरचितशरीरत्वं नाम सामान्यं लक्षणमाचक्षते । इतरथा तेषां समर्थतानुपपत्तेः । स च विशेषणविशेष्यभावो द्विधैव संभवति—समानाधिकरणो व्यधिकरणश्चेति । तत्राद्यः कर्मधारयस्य विषयः । यत्र तु द्वे बहूनि वा पदान्यन्यस्य पदस्यार्थे विशेषणभावं भजन्ति सा बहुव्रीहेः सरणिः । तत्रैव यदा संख्यायाः प्रतिषेधस्य च विशेषणभावो भवेत्तदा द्विगोर्नञ्समासस्य च गोचरः । द्वितीयः प्रकारः कारकाणां संबन्धस्य च विशेषणत्वाद्बहुविधः स तत्पुरुषस्य पन्था । तत्रापि यदाव्ययार्थस्य विशेषणता स्यात्तदाव्ययीभावस्य परामर्शः । तदेवं समासानां विशेषणविशेष्यो-

---

१. 'तेऽस्ति' इति मालतीमाधव-काव्यप्रकाशयोः.

---

१. 'ये जानन्ति' इति स्यात्.

न [1]चासावित्यस्य तच्छब्दार्थत्वं युक्तम्। यथा—

'असौ मरुच्चुम्बितचारुकेसरः प्रसन्नताराधिपमण्डलाग्रणीः।
वियुक्तरामातुरदृष्टिवीक्षितो वसन्तकालो हनुमानिवागतः॥'

अत्र हि न तच्छ[2]ब्दार्थे प्रतीतिः। प्रतीतौ वा—

'यस्य प्रकोपशिखिना परिदीपितोऽभू-
दुत्फुल्लकिंशुकतरुप्रतिमो मनोभूः।
योऽसौ जगत्त्रयलयस्थितिसर्गहेतुः
पायात्स वः शशिकलाकलितावतंसः॥'

अत्र स इति पौनरुक्त्यं स्यात्।

---

भयांशसंस्पर्शत्वेऽपि यदा विशेषणांशः स्वाश्रयोत्कर्षाधानमुखेन वाक्यार्थचमत्कारकारणतया प्राधान्येन विवक्षितौ विधेयधुरामधिरोहेदितरस्त्वनूद्यमानकल्पतया न्यग्भावमिव भजते तदासौ न वृत्तेर्विषयो भवितुमर्हति। तस्यां हि स प्रधानेतरभावस्तयोरस्तमियात्। तच्चैतद्विशेषणमेकमनेकं वास्तु नानयोर्विशेषः कश्चित्। नन्वत्र विशेषणत्वमवच्छेदकत्वाद्गुणभावो विधेयत्वं च विवक्षितत्वात्प्राधान्यं तत्कथं तयोर्भावाभावयोरिवान्योन्यविरोधादेकत्र समावेश उपपद्यते येनैकत्र नियमेन समासो निषिध्येतान्यत्र च विकल्प्येत। नैष दोषः। विरोधस्योभयवस्तुनिष्ठत्वात् शीतोष्णादिवत्। न चेह वस्तुत्वमुभयोः संभवति। एकस्यैव वास्तवत्वादन्यस्य वैवक्षिकत्वेन विपर्ययात्। न च वस्तुवस्तुनोर्विरोधः। न हि सत्यहस्तिनः कल्पना केसरिणश्च कश्चिदन्योन्यं विरोधमवगच्छति। फलभेदस्त्वनयोर्निर्विवाद एव। एकस्य हि सकलजगद्गम्यं शाब्दिकैकविषयपदार्थसंबन्धमात्रम्। अपरस्य पुनः कतिपयसहृदयसंवेदनीयः सत्कवीनामेव गोचरो वाक्यार्थचमत्कारातिशय इति। अत्र क्रमेणोदाहरणानि। तत्र कर्मधारये यथा—'उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा धृत्वा चान्येन वासो विगलितकबरीभारमंसं वहन्त्याः। भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु॥' अत्र विगलितकब-

१. 'योऽसौ कुत्र चम—' इत्युदाहृतश्लोक इति. २. 'ब्दार्थप्रतीतिः' प्रकाशे.

रीभारत्वमलसलसद्वाहुत्वं चांसवपुषोर्विशेषणे रतेरुद्दीपनविभावतापादनेन वाक्यार्थस्य काममपि कमनीयतामावहत इति प्राधान्येन विवक्षितत्वान्न ताभ्यां सह समासे कविना न्यग्भावं गमिते । यथा चात्रैव तत्कालकान्तिद्विगुणितसुरतप्रीतित्वं हेतुभावगर्भं विशेषणं शौरेरुचिताचरणलक्षणमतिशयमादधद्विधेयतया प्राधान्येन विवक्षितमिति न तेन सह समासे निमीलितम् । 'पदमेकमनेकं वा यद्विधेयार्थतां गतम् । न तत्समासमन्येन न चाप्यन्योन्यमर्हति ॥' तत्रैकमुदाहृतमेव । अनेकं यथा—'अवन्तिनाथोऽयमुदग्रबाहुर्विशालवक्षास्तनुवृत्तमध्यः । आरोप्य चक्रभ्रममुष्णतेजास्त्वष्ट्रेव यन्त्रोल्लिखितो विभाति ॥' यथा च—'विद्वान्दारसखः परं परिणतो नीवारमुष्टिंपचः सत्यज्ञाननिधिर्दधत्प्रहरणं होमार्जनीहेतुतः । रे दुःक्षत्रिय किं त्वया मम पिता शान्तं मया पुत्रवान्नीतः कीर्त्यवशेषतां तदिह ते धिक् धिक् सहस्रं भुजाम् ॥' यथा वा—'राज्ञो मानधनस्य कार्मुकभृतो दुर्योधनस्याग्रतः प्रत्यक्षं कुरुबान्धवस्य मिषतः कर्णस्य शल्यस्य च । पीतं तस्य मयाद्य पाण्डववधूकेशाम्बराकर्षिणः कोष्णं जीवत एव तीक्ष्णकरजक्षुण्णादसृग्वक्षसः ॥' यथा च—'हे हस्त दक्षिण मृतस्य शिशोर्द्विजस्य जीवातवे विसृज शूद्रमुनौ कृपाणम् । भो रामपाणिरसनिर्भरगर्भखिन्नदेवीप्रवासनपटोः करुणा कुतस्ते ॥' एवम्—'अङ्गराजसेनापते राजवल्लभ द्रोणापहासिन्, रक्ष भीमाद्दुःशासनम्' इत्यादौ द्रष्टव्यम् । विशेषणविशेष्यभावतुल्यफलो विध्यनुवादोऽपीति । तत्रापि तद्वदेव समासाभावोऽवगन्तव्यः । यथा—'चापाचार्यस्त्रिपुरविजयी' इति । प्रत्युदाहरणं त्वेतेषामेव कृतसमासवै······कल्पनीयम् । बहुव्रीहौ यथा—'येन स्थलीकृतो विन्ध्यो येनाचान्तः पयोनिधिः । वातापिस्तापितो येन स मुनिः श्रेयसेऽस्तु वः ॥' अत्रापि विन्ध्यादिविषयत्वेन स्थलीकरणादि यद्विशेषणतयोपात्तं तत्कर्तुर्मुनेरतिदुष्करकारितया कमपि तपःप्रभावप्रकर्षमेव द्योतयति । विन्ध्यस्य प्रतिदिवसमुच्छ्र्याच्छादितार्कप्रकाशस्य जगदान्ध्यविधायित्वात्पयोनिधेरगाधत्वादपारत्वाच्च वातापेश्च मायापरिग्रहग्रस्तसमस्तलोकत्वात्ततस्तत्प्राधान्येन विवक्षितमिति न तैः सह समासे निर्जीवीकृतम् । प्रत्युदाहरणं यथा—'यः स्थलीकृतविन्ध्योऽद्रिराचान्तापारवारिधिः । यश्च तापितवातापिः स मुनिः श्रेयसेऽस्तु वः ॥' केचित्पुनरनयोरुदाहरणप्रत्युदाहरणयोरर्थस्योत्कर्षापकर्षप्रतीतिभेदो न कश्चिदुपलभ्यत इति मन्यन्ते । ते इदं(एवं) प्रष्टव्याः—'किं भोः, सर्वेष्वेव समासेषु इयं तदप्रतीतिरुत बहुव्री-

द्वावेवायं शापः' इति। तत्र यदि सर्वेष्वेवेत्यभ्युपगमस्तर्हि सहृदयाः साक्षिणः पृच्छयन्ताम्। वयं तावन्महदन्तरमेतयोः प्रतीत्योः पश्यामः। अथ बहुव्रीहावेवेत्युच्यते, तदयुक्तम्। न हि प्रतीतिभेदहेतौ प्रतीतसामर्थ्ये सत्यकस्मात्तदसंभवो भवितुं न्याय्यः। एवं हि क्षित्यादिसामग्र्यामविकलायामङ्कुरादिकार्योत्पादाभावाभ्युपगमोऽपि प्रसज्यते। सर्वत्रैवायं प्रतीतिभेदोऽभ्युपगन्तव्यो नैव वा कुत्रचिन्न पुनरिदमर्धजरतीयं लभ्यते। इह प्रतीतिवैचित्र्यं स्पष्टमवधारयतु मतिमान्। यत्र विध्यनुवादभावाभिधित्सयैव पदार्थानामुपनिबन्धस्तत्रापि हि प्रधानेतरभावविवक्षानिबन्धनौ समासस्य भावाभावावुपगतावेव। यथा—'सूर्याचन्द्रमसौ यस्य मातामहपितामहौ। स्वयं वृतः पतिर्द्वाभ्यामुर्वश्यावनुवाद्य यः॥' अत्र हि त्रैलोक्यालंकारभूतौ चराचरस्य जगतो जीवितायमानौ भगवन्तौ सूर्याचन्द्रमसौ प्रसिद्धावनूद्य यन्मातामहपितामहभावो विहितस्तत्तस्य पुरूरवसस्तौ लोकोत्तरभयाभिजनजनितमभिमानं कामपि काष्ठामधिरोपयतो विशेषणविशेष्यभावाभिहितेनैव नयेनात्राप्यनूद्यमानगतोऽतिशयो विधीयमानाकारसंक्रमणक्रमेण तत्संबन्धिनः पर्यवस्यति। तयोर्हि स्वरूपमात्रं भिन्नं फलं पुनः पारम्पर्येण वाक्यार्थोत्कर्षलक्षणमेकमेवेति प्राधान्येन विवक्षितत्वान्न तौ ताभ्यां सह समासे म्लानिमानीतौ। इह च—'जनको जनको यस्या याता तस्योचिता वधूः। आर्यस्य गृहिणी या च स्तुतिस्तस्यास्त्वपास्पदम्॥' इति। द्विगौ यथा—'उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे। दैवीनां मानुषीणां च प्रतिकर्ता त्वमापदाम्॥' इत्यत्र संख्यायाः संख्येयेष्वङ्गेषु निरवशेषताप्रतिपत्तिफलमतिशयमादधानायाः प्राधान्येन विवक्षा। तत एव हि तेषु द्विविधापत्प्रतीकारेण राज्ञः शिवोपपत्तिः परिपुष्यतीति तस्यास्तैः सह समासो न विहितः। यथा च—'निग्रहात्स्वसुराप्तानां वधाच्च धनदानुजः। रामेण निहितं मेने पदं दशसु मूर्धसु॥' प्रत्युदाहरणमेतदेवोदाहरणम्, कृतसमासवैशसं(षम्यं) द्रष्टव्यम्। नञ्समासविषयस्तु पूर्वमेव वितत्योपदर्शित उपपादितश्च। तत्पुरुषे कर्तुर्यथा—'देशः सोऽयमरातिशोणितजलैर्यस्मिन्ह्रदाः पूरिताः क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहः। तान्येवाहितश[१]स्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति [२]नो यद्रामेण कृतं तदेव कुरुते द्रोणात्मजः क्रोधनः॥' रामेणेति रामस्य कर्तृभावेन करणं प्रति यद्विशेषणत्वं तत्तस्य दारुणतातिरेकात्मकमुत्कर्षं रौद्ररसपरिपोषपर्यवसायिनं सम-

१. 'शस्त्रं' प्रकाशे. २. 'मे' प्रकाशे.

र्पयति । तस्य निरतिशयशौर्यशौण्डीर्यशालित्वेन घोरतरनैर्घृण्यनिघ्नतया च प्रसिद्धेः । तेन तत्प्राधान्यान्न विशेष्येण सह समासे गुणतां नीतं कर्त्रादेः कारकस्यानेकस्य समशीर्षकया विशेषणभावेन यदुपादानं स द्वन्द्वस्य विषय इति तत्स्वरूपनिरूपणावसर एव तस्य प्राधान्यमप्राधान्यं चाभिधास्यत इति न तदुदाहरणमिहोपदर्शितम् । नापि विध्यनुवादभावोदाहरणं तस्य विशेषणविशेष्यभावतुल्यफलतया तत्समानवृत्तान्तत्वोपपादनात् । प्रत्युदाहरणं यथा—'यस्यावमत्य गुरुदत्तमिमं कुठारं डिम्भोऽपि राम इति नामपदस्य हन्ता' इति । कर्मणो यथा—'कृतककुपितैर्बाष्पाम्भोभिः सदैन्यविलोकितैर्वनमसि गता यस्य प्रीत्या मृतापि तथा त्वया । नवजलधरश्यामाः पश्यन्दिशो भवतीं विना कठिनहृदयो जीवत्येव प्रिये स तव प्रियः ॥' अत्र वनमिति यद्गमनक्रियायाः सीताविशेषणभूतायाः कर्मभावेन विशेषणं तत्तस्या रामप्रीतिप्रकर्षयुक्ताया अन्यकुलमहेलादुर्लभं दुष्करकारित्वं नामोत्कर्षमर्पयति । वनवासदुःखस्यातिकष्टत्वात् । स चोत्कर्षो रामस्य रतेरुद्दीपनतां प्रतिपद्यत इति प्रधानं न गतेत्यनेन सह समासे कविना तिरस्कृतम् । यथा च—'गुर्वर्थमर्थी श्रुतपारदृश्वा रघोः सकाशादनवाप्य कामम् ।' इत्यत्र गुर्वर्थमित्यर्थिनोऽर्थक्रियामुखेन यद्विशेषणं तत्तस्य श्लाघ्यतातिशयाधानद्वारेण रघोरुत्साहपरिपोषे पर्यवस्यतीति प्राधान्येन विवक्षितत्वान्नार्थिना सह समासे सताममतामवमतां गमितम् । संवर्धितानां सुतनिर्विशेषमिति । प्रत्युदाहरणं यथा—'प्रदक्षिणक्रियातीतस्तस्याः कोपमजीजनत् ।' इति । 'तमभ्यनन्दत्प्रथमं प्रबोधितः प्रजेश्वरः शासनहारिणा हरेः ।' इति । 'यथाकामार्चितार्थिनाम्' इति । 'यथाकालप्रबोधिनाम्' इति च । करणस्य यथा—'आलोकमार्गं सहसा' इति । अत्र करणेति यत्केशहस्तकर्मकस्य संभाविता ·········स्पारोधानस्य करणभावेन विशेषणं तत्तस्याः कस्याश्चिद्रभसौत्सुक्यप्रहर्षप्रकर्षरूपमतिशयं प्रतिपादयद्वधूवरयोरुपसंपदमसाधारणीमभिव्यनक्ति । यदवलोकनाधानव्यवधानाधायिनीं तावतीमपि कालकलां विघ्नायमानां मन्यमानया सततस्वाधीनेनैकेन करकमलेन रोधोऽप्यस्य न कृतस्तेन तत्प्रधानमिति न रुद्ध इत्यनेन समासेऽस्तमुपनीतम् । यथा च—'कर्तुमक्षमया मानं प्राणेशः प्रत्यभेदि यत् । सोऽयं सखि स्वहस्तेन समाकृष्टस्त्वयानलः ॥' इति । प्रत्युदाहरणं यथा—'धात्रा स्वहस्तलिखितानि ललाटपट्टे को वाक्षराणि परिमार्जयितुं समर्थः ।' इति । संप्रदानस्य यथा—'पौलस्त्यः स्वयमेव याचत इति श्रुत्वा मनो मोदते देयो

नैष हरप्रसादपरशुस्तेनाधिकं ताम्यति । तद्वाच्यः स दशाननो मम गिरा दत्वा द्विजेभ्यो महीं तुभ्यं ब्रूहि रसातलत्रिदिवयोर्निर्जित्य किं दीयताम् ॥' अत्र द्विजेभ्य इति निर्जयपूर्वकस्य भार्गवकर्तृकस्य महीदानस्य संप्रदानत्वेन यद्विशेषणं तन्मह्याः पात्रसात्करणेनोत्कर्षमादधद्भार्गवशौर्यातिरेकाभिव्यञ्जनेन दशाननस्य क्रोधोद्दीपनपर्यवसायि भवतीति प्राधान्येन विवक्षितत्वान्न दत्त्वेत्यनेन सह समासे कविना विच्छायीकृतम् । प्रत्युदाहरणमेतदेव पूर्ववद्द्रष्टव्यम् । अपादानस्य यथा—'ताताज्जन्म वपुर्विलङ्घितवियत्क्रौर्यं कृतान्ताधिकं शक्तिः कृत्स्नसुरासुरोष्मशमनी नीता तथोच्चैः पदम् । सर्वं वत्स भवातिशायि निधनं क्षुद्रात्तु यत्तापसात्तेनाहं त्रपया शुचा च विवशः कष्टां दशामागतः ॥' अत्र तातादिति क्षुद्रात्तु यत्तापसादिति च ये जन्मनिधनयोरपादानभावेन विशेषणे ते तातस्य [पितामह]पितामहतया महामुनिपुलस्त्यापत्यतया च क्षुद्रतापसस्य च गणनानर्हतया तयोरुत्कर्षापकर्षद्वारेण तद्वतः कुम्भकर्णस्य कामपि कुलीनतां शौर्यापकर्षं चादधाने भ्रातुर्दशाननस्य शोकत्रपापावकेन्धनत्वभावेन परिणमत इति प्राधान्येन विवक्षितेन ताभ्यां सह समासे गुणतां गमिते । प्रत्युदाहरणं यथा—अत्रैव 'क्रौर्यं कृतान्ताधिकम्' इति । यथा च 'आसमुद्रक्षितीशानाम्' इति । अधिकरणस्य यथा—'शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम् । वार्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ॥' अत्र शैशव इत्यादीनि यान्यभ्यस्तविद्यात्वादीनामधिकरणभावेन विशेषणानि तानि तेषामितरान्वयवैलक्षण्यलक्षणमतिशयमादधानानि रघूणां यथौचित्यं नयविनयादिसंपदमुन्मीलयन्तीति प्राधान्येन विवक्षितत्वान्न तैः सह समासे समशीर्षिकां नीतानि । प्रत्युदाहरणं यथा—'रेणुरक्तविलिप्ताङ्गो विकृतो व्रणभूषितः । कदा दुःप्रत्यभिज्ञातो भवेयं रणभूषितः ॥' संबन्धस्य यथा—'द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः ॥' इति । यत्समागमप्रार्थनायाः शोचनीयतां गतौ हेतुत्वेनोपात्तायाः संबन्धिद्वारेण विशेषणं तत्तस्यास्तत्र यत्सामर्थ्यं तत्सुतरामुपबृंहयति । तस्य सकलामङ्गलनिलयतया निन्दिताचारनिरततया च दर्शनस्पर्शनसंभाषणादीनामपि प्रतिषिद्धत्वात् । अतो विधेयार्थतया प्राधान्येन विवक्षितं न विशेष्येण सह समासे प्रत्यरीकृतम् । यथा च 'स्कन्दस्य मातुः पयसां रसज्ञः' इति । 'कः क्षमेत तवानुजम्' इति । प्रत्युदाहरणं तु 'किं लोभेन विलङ्घितः–' इति दर्शितमेव । यथा च—'जयाशा यत्र चास्माकं प्रतिघातोत्थितार्चिषा । हरिचक्रेण तेनास्य कण्ठे निष्क इवार्पितः ॥'

इति। अत्र हि हरेः संबन्धित्वेन चक्रस्य जयाशास्पदत्वमिति हरेरेव प्राधान्यविवक्षा न चक्रमात्रस्य। तच्च तस्य समासेऽस्तमुपगतम्। विभक्त्यन्वयव्यतिरेकानुविधायिनी हि विशेषणानां विधेयतावगतिः। तत एव चैषां विशेष्ये प्रमाणान्तरसिद्धत्वोत्कर्षापकर्षाधायिनां शाब्दे गुणभावेऽप्यार्थं प्राधान्यम्। विशेष्याणां च शाब्दे प्राधान्येऽप्यार्थो गुणभावोऽप्यनूद्यमानत्वात्, समासे च विभक्तिलोपान्नोत्कर्षापकर्षावगतिरिति न तन्निबन्धना रसाभिव्यक्तिरिति तदात्मनः काव्यस्येदमविमृष्टविधेयांशत्वं दोषतयोक्तमिति। अव्ययीभावे यथा—'सा दयितस्य समीपे नावस्थातुं न चलितुमुत्सहते। ह्रीसाध्वसरसविवशा स्पृशति दशां कामपि नवोढा॥' इत्यत्र दयितस्येति संबन्धितया यत्समीपस्य विशेषणं तत्तस्य सुकृतशतलभ्यतालक्षणमुत्कर्षमादधद्रतेरुद्दीपने पर्यवस्यतीति प्राधान्येन विवक्षितत्वान्नोपदयितमितिवत्समीपार्थेनाव्ययेन सह समासेऽवसादं गमितम्। प्रत्युदाहरणं तु 'मध्ये व्योम–' इत्यादि प्रदर्शितमेव। अनेनैव न्यायेन कृत्तद्धितवृत्त्योरपि प्रतिषेधोऽवगन्तव्यः। तत्राप्युक्तक्रमेण प्राधान्येन रसभावविवक्षाविशेषात्। तयोरुदाहरणं यथा—'यः सर्वं कषति खलो बिभर्ति यः कुक्षिमेव सत्यतिथौ। यस्तु विधुं तुदति सदा शीर्षच्छेदं त्रयोऽपि ते हंसी(?)॥' इत्यत्र सर्वादीनां कषणादिषु कर्मभावेन विशेषणतयोपात्तानामुत्कर्षाभिधायितया प्राधान्येन विवक्षितत्वान्न तैः सह वृत्तौ न्यग्भावो विहितः। सर्वार्थस्य भुवनाभयदानदीक्षाबद्धकक्षाणां बोधिसत्त्वानामपि चरितस्य तदन्तःपातित्वात्। खलाः खलु दम्भादिदोषारोपेण तदपि तेषां कषन्त्येव। कायोपलक्षणस्य कुक्षेः कायस्य सर्वाशुचिनिधानत्वाद्विनश्वरत्वाच्च। विधोश्च सकलजगदानन्दहेतुत्वात्कषणादिष्वकार्यकारितयापराधातिरेकलक्षणमुत्कर्षमादधतां प्राधान्येन विवक्षा शीर्षच्छेदस्य च शरीरेषु निग्रहेषु तदतिरिक्तस्यान्यस्यासंभवात्। यथा च—'रामोऽस्मि सर्वं सहे' इति। उचितकारित्वं प्रति किमुच्यते। रामभद्रस्य दशरथप्रसूतिरसाविति च। प्रत्ययोत्पत्तिः पुनर्न्यग्भूतसर्वादिकर्मभावः कषणादिषु कर्त्रंश एवोन्मग्नतया प्रकाशेत न कर्मांशस्तत्रैव प्रत्ययोत्पत्तेः। वाक्ये तु यद्यपि शब्दवृत्तेन क्रियायाः प्रधानभावेन प्रतीतिः तथापि तत्रान्या विवक्षा कृता साधनानामपि सा प्रतीयत एव। न चैकस्मिन्नेव वाक्ये द्वयोः साध्यसाधनयोर्युगपत्प्रधानभावोऽनुपपन्न इति शक्यं वक्तुम्। शब्दार्थसामर्थ्यविवक्षाकृतानां त्रयाणामप्येकस्यैव विवक्षाकृतस्य प्राधान्यस्य बलीयस्तया तयोः समशीर्षिकाभावात्। तदिदमत्र तात्पर्यम्।

यत्कथंचिदपि प्रधानतया विवक्षितं न तन्नियमेनेतरेण सह समासमर्हतीति। इतरच्च विशेष्यमन्यद्वास्तु न तत्र नियमः, तेन द्वन्द्वपदानां स्वरूपाणां च पदानामर्थस्यान्योन्यं विशेषणविशेष्यभावाभावेऽपि यदा प्रत्येकं क्रियासंबन्धोपगमलक्षणं प्राधान्यं विवक्ष्यते तदा तेषामपि समास एकशेषश्च नेष्यत एव। यथा—'किमञ्जनेनायतलोचनाया हारेण किं पीनपयोधरायाः। पर्याप्तमेतन्ननु मण्डनं ते रूपं च कान्तिश्च विदग्धता च ॥' अत्र रूपादीनां प्रत्येकं मण्डनक्रियाभिसंबन्धकृतं प्राधान्यं रत्युद्दीपनपर्यवसायि विवक्षितमिति न तत्तेषां समासेऽवसादितम्। यथा च—'यान्त्या मुहुर्वलितकंधरमाननं तदावृत्तवृन्तशतपत्रनिभं वहन्त्या। दिग्धामृतेन च विषेण च पक्ष्मलाक्ष्या गाढं निखात इव मे हृदये कटाक्षः ॥' इति। एकशेषे यथा—'प्राप्तावेकरथारूढौ पृच्छन्तौ त्वामितस्ततः। कश्च कश्च स कर्णारिः स च क्रूरो वृकोदरः ॥' इति। प्रत्युदाहरणमेतदेव कृतैकशेषमवगन्तव्यम् ॥ अत्र पुनरेष प्रधानेतरभावो न विवक्षितः, स्वरूपमात्रप्रतिपत्तिफलश्च विशेषणविशेष्यभावस्तत्र समासासमासयोः कामचारः। यथा—'स्तनयुगमश्रुस्नातं समीपतरवर्ति हृदयशोकाग्नेः। चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रीणाम् ॥' इत्यत्र भवत इति रिपुस्त्रीणामिति च रिपुस्त्रीणां स्तनयुगस्य च संबन्धित्वेन यद्विशेषणं न ततस्तेषामुत्कर्षयोगः कश्चिद्विवक्षितः। अपि तु तत्संबन्धप्रतीतिमात्रं तच्च व्रतमिव भवदरिवधूस्तनद्वयमित्यतः समासादपि तुल्यमेव। यथा चात्रैव रिपुस्त्रीणामिति रिपुसंबन्धमात्रप्रतीतिः स्त्रीणामिति। 'विनोत्कर्षापकर्षाभ्यां स्वदन्तेऽर्था न जातुचित्। तदर्थमेव कवयोऽलंकारं पर्युपासते ॥ तौ विधेयानुवाद्यत्वविवक्षैकनिबन्धनौ। सा समासेऽस्तमायातीत्यसकृत्प्रतिपादितम् ॥ अत एव हि वैदर्भी रीतिरेकैव शस्यते। यतः समाससंस्पर्शस्तत्र नैवोपपद्यते। संबन्धमात्रमर्थानां समासो ह्यवबोधयेत् ॥' नोत्कर्षापकर्षं वा। यथा—'ऊर्ध्वाक्षितापगलितेन्दुसुधालवत्के जीवत्कपालचयमुक्तमहाट्टहासम्। संत्रस्तमुग्धगिरिजावलिताङ्गसङ्गहृष्टं वपुर्जयति हारि पिनाकपाणेः ॥' वाक्यात्तूभयमप्यदः। यथा—'न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः। धिक् धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥' इति। तथा हि। मम अरय इति बहुवचनेन शत्रुशत्रुमद्भावो ममानुचित इति संबन्धानौचित्यं क्रोधविभावो व्यज्यते। तपो विद्यते यस्येति पौरुषकथाहीनत्वं तद्वि-

अथ—

'योऽविकल्पमिदमर्थमण्डलं पश्यतीश निखिलं भवद्वपुः।
आत्मपक्षपरिपूरिते जगत्यस्य नित्यसुखिनः कुतो भयम् ॥'

इत्यादौ इदमदःप्रभृतयः शब्दाः तच्छब्दार्थमभिदधतीत्युच्यते। तर्हि यथादर्शनं व्यवहितानामेवोपादानं युज्यते। अव्यवहितत्वे हि प्रत्युत तदितराकाङ्क्षा भवत्येव। यथा—

---

तेन मत्त्वर्थीयेनाभिव्यक्तम्। तत्रापिशब्देन निपातसमुदायेन तापसस्य सतः शत्रुताया अत्यन्तासंभाव्यमानत्वमभिव्यक्तम्। मत्कर्तृका यदि जीवनक्रिया तावदनुचिता तस्यां च स कर्ता। अपिशब्देन मानुषमात्रकः। अत्रैवेति मदधिष्ठितो देशोऽधिकरणम्। निःशेषेण हन्यमानतया राक्षसबलं च कर्मेति। तदिदमसंभाव्यमुपनतमिति पुरुषकारासंपत्तिर्ध्वन्यते। रावण इति। येन इन्द्रपुरविमर्दनादि किं किं न कृतमिति। धिग्धिगितिनिपातेन शक्रजितमित्युपपदसमासेन सह कृता च शक्रं जितवानित्याख्यायिकेयमिति व्यज्यते। स्वर्गेत्यादिसमासस्य स्वपौरुषानुस्मरणं प्रति व्यञ्जकत्वम्। ग्रामटिकेति स्वार्थिकतद्धितप्रयोगेण स्त्रीप्रत्ययसहितेनाबहुमानास्पदत्वं व्यज्यते। विलुण्ठनशब्दे विशब्दस्योपसर्गस्य निर्दयावस्कन्दव्यञ्जकत्वं वृथाशब्देन स्वात्मपौरुषनिन्दा व्यज्यते। भुजैरिति बहुवचनेन प्रत्युत भारमात्रमेतदिति व्यज्यते इति। किं तु प्रवृत्तिरेतस्य रसाभिव्यक्त्यपेक्षया शान्तशृङ्गारकरुणानन्तरेण प्रशस्यते। 'यतः समासो वृत्तं च वृत्तयः काकवस्तथा। वाचिकाभिनयात्मत्वाद्रसाभिव्यक्तिहेतवः॥ स चार्धान्तावधिः कार्यो नाधिको गद्यतास्थितः। गद्ये हि वृत्तवैकल्यान्न्यूना तद्व्यक्तिहेतुता॥' यथानन्तरोक्ते उदाहरणे—'तस्याभिन्नः पदार्थानां संबन्धश्चेत्परस्परम्। न विच्छेदोऽन्तरा कार्यो रसभङ्गकरो हि सः॥' यथा—'माद्यद्दिग्गजगण्डभित्तिकषणैर्भग्नस्रवच्चन्दनः' इति। अत्र हि 'क्षुण्णस्रवच्चन्दनः' इति युक्तः पाठः। विधेयत्वं चैतत्प्राधान्यापलक्षणमव्यभिचारात्। ततश्च प्रधानाविमर्शोऽपि दोषतयावगन्तव्यः। यथा—'स्नेहं समादिशति कज्जलमादधाति सर्वान्गुणान्दहति पात्रमधः करोति। योऽयं कृशानुकणसंचयसंभृतात्मा दीपः प्रकाशयति तत्तमसो मह-

'यदेतच्चन्द्रान्तर्जलदलवलीलां प्रकुरुते
तदाचष्टे लोकः—'

इत्यत्र।

'सोऽयं वटः श्याम इति प्रसिद्धस्त्वया पुरस्तादुपयाचितो यः।'

इत्यादौ च।

अथ—

'स्मृतिभूः स्मृतिभूर्विहितो येनासौ रक्षतात्क्षताद्युष्मान्।'

इत्यादावव्यवहितत्वेऽपि दृश्यते। तर्हि अत्रैव भिन्नविभक्तिकानां सोऽस्त्वित्यलम्।

यथा वा—

'किं लोभेन विलङ्घितः स भरतो येनैतदेवं कृतं
मात्रा स्त्रीलघुतां गता किमथ वा मातैव मे मध्यमा।
मिथ्यैतन्मम चिन्तितं द्वितयमप्यार्यानुजोऽसौ गुरु-
र्माता तातकलत्रमित्यनुचितं मन्ये विधात्रा कृतम्॥'

---

त्वम्॥' अत्र हि प्रकाशनक्रियाया एव प्राधान्यविवक्षा नान्यासामिति तासां सत्सप्तमीशीर्षिकया निर्देशो दोष एव। स च तत्र शत्रादिभिरेव वक्तुं न्याय्यो नाख्यातेन। यथा—'बिभ्राणः शक्तिमाशु प्रशमितबलवत्तारकौर्जित्यगुर्वी कुर्वाणो लीलयाधः शिखिनमपि लसच्चन्द्रकान्तावभासम्। आधिक्यादन्धकारे रतिमतिशयिनीमावहन्वीक्षणानां बालो लक्ष्मीमपारामपर इव गुहोऽहर्पतेरातपो वः॥' इत्यादौ सर्वासां पुनः प्राधान्यविवक्षायां नाख्यातवाच्यत्वं दोषः। यथा—'सौधादुद्विजते त्यजत्युपवनं द्वेष्टि प्रभामैन्दवीं द्वारान्नश्यति चित्रकेलिसदसो वेषं विषं मन्यते। आस्ते केवलमब्जिनीकिसलयप्रस्तारशय्यातले संकल्पोपनतत्वदाकृतिरसायत्तेन चित्तेन सा॥' 'यत्रैककर्तृकानेका प्राधान्येतरभाक्क्रिया। तत्राख्यातेन वाच्याद्या शत्राद्यैरपरा पुनः॥' इत्यन्तरश्लोकः। अयं च समासासमासविषयः सूक्तरत्नपरीक्षाव्यसनैकरसिकतया पदवाक्यविवेकानवधारणेन प्रदर्शि-

अत्रार्यस्येति तातस्येति च वाच्यम्। न त्वनयोः समासे गुणीभावः कार्यः। एवं समासान्तरेष्वप्युदाहार्यम्॥

**विरुद्धबुद्धिकृत्त्वं** पदस्य यथा—

'गोरपि यद्वाहनतां प्राप्तवतः सोऽपि गिरिसुतासिंहः।
सविधे निरहंकारः पायाद्वः सोऽम्बिकारमणः॥'

अत्राम्बिकाया गौर्या रमण इति विवक्षितम्, मातृरमण इति विरुद्धां धियमुत्पादयति।

यथा—

'सहस्राक्षैरङ्गैर्नमसितरि नीलोत्पलमयी-
मिवात्मानं मालामुपनयति पत्यौ दिविषदाम्।
जिघृक्षौ च क्रीडारभसिनि कुमारे सह गणै-
र्हसन्वो भद्राणि द्रढयतु मृडानीपरिवृढः॥'

अत्र मृडानीपरिवृढ इति मृडान्याः पत्यन्तरे प्रतीतिं करोति।

'चिरकालपरिप्राप्तिलोचनानन्ददायिनः।
कान्ता कान्तस्य सहसा विदधाति गलग्रहम्॥'

अत्र कण्ठग्रहमिति वाच्यम्।

वाक्यस्य यथा—

'अनुत्तमानुभावस्य परैरपिहितौजसः।
अकार्यसुहृदोऽस्माकमपूर्वास्तव कीर्तयः॥'

अत्रापकृष्टश्छादितमकार्येषु मित्रम्। अः पूर्वो यासां ता अकीर्तय इति विरुद्धा प्रतीतिः। क्वचिद्गुणो यथा—

१. आर्यानुज इत्येतत्स्थाने 'आर्यस्यानुजः' इति, तातकलत्रमित्यस्य स्थाने 'तातस्य कलत्रम्' इति वाच्यमित्यर्थः.

'अभिधाय तदातदप्रियं शिशुपालोऽनुशयं परं गतः ।
भवतोऽभिमनाः समीहते सरुषः कर्तुमुपेत्य माननाम् ॥'

अत्रानुशयमिति पश्चात्तापं कोपं च । अभिमना इति प्रसन्नमना निर्भयचित्तश्च । माननामिति पूजां निबर्हणं च । अत्र विपरीतार्थकल्पनाद्विरुद्धत्वेऽपि संध्यर्थविग्रहार्थयोः स्फुटभिन्नार्थत्वेनाभिधानाद्गुणत्वम् ॥

अथार्थदोषाः—

**कष्टापुष्टव्याहतग्राम्याश्लीलसाकाङ्क्षसंदिग्धाक्रमपुनरुक्तभिन्नसहचरविरुद्धव्यङ्ग्यप्रसिद्धिविद्याविरुद्धत्यक्तपुनरात्तपरिवृत्तनियमानियमविशेषसामान्यविध्यनुवादत्वान्यर्थस्य ।**

दोषा इति वर्तते ।

कष्टादगम्यत्वात्कष्टत्वमर्थस्य । यथा—

'सदामध्ये यासाम[1]मृतरसनिःस्यन्दसरसं
सरस्वत्युद्दामा वहति बहुमार्गा परिमलम् ।
प्रसादं ता एता [2]घनपरिचयाः के न महतां
महाकाव्यव्योम्नि स्फु[3]रितरुचिरा यान्तु रुचयः ॥'

यासां कविरुचीनां प्रतिभारूपाणां प्रभाणां मध्ये बहुमार्गा सुकुमारविचित्रमध्यमात्मकत्रिमार्गा सरस्वती भारती परिमलं चमत्कारं वहति, ताः कविरुचयो महाकाव्यव्योम्नि सर्गबन्धलक्षणे परिचयगताः कथमभिनेयकाव्यवत्प्रसादं यान्तु । तथा यासामादित्यप्रभाणां मध्ये त्रिपथगा वहति, ता मेघपरिचिताः कथं प्रसन्ना भवन्तीति संक्षेपार्थः ॥

---

१. 'मियममृतनिष्यन्दसुरसा' प्रकाशे. २. 'घनपरिचिताः केन' प्रकाशे. ३. स्फुरितमधुरा' प्रकाशे.

प्रकृतानुपयोगोऽपुष्टार्थत्वम् । यथा—

'तमालश्यामलं क्षारमत्यच्छमतिफेनिलम् ।
फालेन लङ्घयामास हनूमानेष सागरम् ॥'

अत्र तमालश्यामलादयोऽनुपादानेऽपि प्रकृतमर्थं न बाधन्ते इत्यपुष्टाः ।

यथा वानुप्रासे—

'भण तरुणि रमणमन्दिरमानन्दस्यन्दिसुन्दरेन्दुमुखि ।
यदि सल्लीलोल्लापिनि गच्छसि तत्किं त्वदीयं मे ॥'

'अनणुरणन्मणिमेखलमविरतसिञ्जानमञ्जुमञ्जीरम् ।
परिसरणमरुणचरणे रणरणकमकारणं कुरुते ॥'

अत्र वर्णसावर्ण्यमात्रं न पुनर्वाच्यवैचित्र्यकणिका काचिदस्तीत्यपुष्टार्थत्वम् ॥

पूर्वापरव्याघातो व्याहतत्वम् । यथा—

'जहि शत्रुकुलं कृत्स्नं जय विश्वंभरामिमाम् ।
न च ते कोऽपि विद्वेष्टा सर्वभूतानुकम्पिनः ॥'

अत्र शत्रुवधो विद्वेष्यभावेन व्याहतः ॥

अवैदग्ध्यं ग्राम्यत्वम् । यथा—

'स्वपिति यावदयं निकटे जनः, स्वपिमि तावदहं, किमपैति ते ।
इति निगद्य शनैरनुमेखलं मम करं स्वकरेण रुरोध सा ॥'

व्रीडादिव्यञ्जकत्वमश्लीलत्वम् । यथा—

'हन्तुमेव प्रवृत्तस्य स्तब्धस्य विवरैषिणः ।
यथाशु जायते पातो न तथा पुनरुन्नतिः ॥'

---

तोऽपि सहृदयैः स्वयमेव तद्विवेकेन परामर्शनीयः ॥ स्वपितीति । निद्राति ॥

---

१. 'ऽस्य' प्रकाशे.

एतद्वाक्यं खलेषु प्रयुज्यमानं शेफसि प्रतीतिं जनयति । इहान्वय-व्यतिरेकाभ्यामर्थस्यैवाश्लीलत्वं पूर्वत्र तु पदवाक्ययोरिति विवेकः ॥

साकाङ्क्षत्वम् । यथा—

'अर्थित्वे प्रकटीकृतेऽपि न फलप्राप्तिः प्रभोः, प्रत्युत
द्रुह्यन्दाशरथिर्विरुद्धचरितो युक्तस्तया कन्यया ।
उत्कर्षं च परस्य, मानयशसोर्विस्रंसनं चात्मनः,
स्त्रीरत्नं च जगत्पतिर्दशमुखो देवः कथं मृष्यते ॥'

अत्र स्त्रीरत्नमुपेक्षितुमित्याकाङ्क्षति न हि परस्येत्यनेन संबन्धो योग्यः ।

यथा च—

'गृहीतं येनाशीः[1] परिभवभयान्नोचितमपि,
प्रभावाद्यस्याभून्न खलु तव कश्चिन्न विषयः ।
परित्यक्तं तेन त्वमसि सुतशोकान्न तु भया-
द्विमोक्ष्ये शस्त्र त्वामहमपि यतः स्वस्ति भवते ॥'

यत इति तत इत्यत्रार्थे । अत्र शस्त्रमोचनं हेतुमाकाङ्क्षति । यत्र त्वाकाङ्क्षा नास्ति तत्र न दोषः । यथा—

'चन्द्रं गता पद्मगुणान्न भुङ्क्ते, पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखं तु प्रतिपद्य लोला द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥'

अत्र रात्रौ पद्मस्य संकोचः, दिवा चन्द्रमसश्च निष्प्रभत्वं लोकप्रसिद्धमिति 'न भुङ्क्ते' इति हेतुं नापेक्षते ॥

---

स्वपिमीति । कामये ॥ हेतुमाकाङ्क्षतीति । तेन निर्हेतुः पृथङ्न वाच्यः

---

१. 'सीः' प्रकाशे.

संशयहेतुत्वं **संदिग्धत्वम्** । यथा—

'मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमुदाहरन्तु ।
सेव्या नितम्बाः किमु भूधराणामुत स्मरस्मेरविलासिनीनाम् ॥'

अत्र प्रकरणाद्यभावे संदेहः, (शान्तशृङ्गार्यन्यतराभिधाने तु निश्चयः) ॥

प्रधानस्यार्थस्य पूर्वं निर्देशः क्रमस्तदभावोऽ**क्रमत्वम्** । यथा—

'तुरगमथ वा मातङ्गं मे प्रयच्छ मदालसम्—'

अत्र मातङ्गस्य प्राङ्निर्देशो न्याय्यः । यदा तूदारसत्त्वो गुर्वादिर्बलाद्ग्राह्यमाणस्तुरगमित्यादि च वक्ति तदा न दोषः ।

क्रमानुष्ठानाभावो वाऽ**क्रमत्वम्** । यथा—

[1]'कोराविऊण खउरं गामउडो मज्जिऊण जिमिऊण[2] ।
नक्खत्तं तिहिवारे जोइसिओ पुच्छिओ चलिओ ॥'

क्वचिदतिशयोक्तौ गुणः । यथा—

'पश्चात्पर्यस्य किरणानुदीर्णं चन्द्रमण्डलम् ।
प्रागेव हरिणाक्षीणामुदीर्णो रागसागरः ॥'

तत्र तद्देशिनामनुद्देशिनां च क्रमभ्रंशोऽ**क्रमत्वम्** । यथा—

'कीर्तिप्रतापौ भवतः सूर्याचन्द्रमसोः समौ ।'

इति । तत्र पदरचना विपरीतेति भग्नप्रक्रमत्वलक्षणो वाक्यस्यैव दोषो न वाक्यार्थस्येति ॥ द्विरभिधानं **पुनरुक्तम्** । यथा—

---

१. 'कारयित्वा क्षौरं ग्रामवृद्धो मज्जित्वा भुक्त्वा च ।
नक्षत्रं तिथिवारौ ज्यौतिषिकं प्रष्टुं चलितः ॥' इति छाया.

२. 'जेमिअ अ' प्रकाशे.

'प्रसाधितस्याथ मधुद्विषोऽभूदन्यैव लक्ष्मीरिति युक्तमेतत् ।
च पुष्पशेषेऽखिललोककान्ता सानन्यकाम्या ह्युरसीतरा नु ॥'

इत्युक्त्वैकार्थमेवाह ।

'कपाटविस्तीर्णमनोरमोरःस्थलस्थितश्रीललनस्य तस्य ।
आनन्दिताशेषजना बभूव सर्वाङ्गसङ्गिन्यपरैव लक्ष्मीः ॥'

यथा वा—'अश्वीयसंहतिभिरुद्धतमुद्धुराभिः ।' अश्वीयेति समूहार्थायाः प्रकृतेः संहतेश्च **पौनरुक्त्यम्** । यथा—

'छायामपास्य महतीं परिवर्तमाना-
मागामिनीं जगृहिरे जनतास्तरूणाम् ।'

अत्र जनता इति तद्धितार्थस्य बहुवचनार्थस्य च । तथा—'पायात्स शीतकिरणाभरणो भवो वः ।' अत्र विशेषणाद्विशेष्यप्रतिपत्तौ भव इत्यस्य । यत्र तु विशेषणान्न विशेष्यमात्रस्य प्रतीतिरपि तु तद्विशेषस्य तत्र पौनरुक्त्यमेव नास्ति । यथा—

'तव प्रसादात्कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा ।
कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं किं मम धन्विनोऽन्ये ॥'

अत्र हरशब्दस्य । यथात्र कुसुमायुधोऽपीत्यस्माद्विशेष्योपादानमन्तरेणाप्युभयार्थप्रतिपत्तिस्तद्वदत्रापि भविष्यति । नैवम् । सप्तम्युत्तमनिर्देशेनैवास्मदर्थस्य विशेषस्य प्रतिपादितत्वात् ।

एवं धनुर्ज्यादिपदेष्वपि विशेषप्रतिपत्तौ न पौनरुक्त्यम् । यदाह—**'धनुर्ज्याशब्दे धनुःश्रुतिरारूढेः प्रतिपत्त्यै'** इत्यादि । यथा—

'धनुर्ज्याकिणचिह्नेन दोष्णा विस्फुरितं तव ।'

अत्र धनुःशब्दादारूढेः प्रतिपत्तिः।

'दोलाविलासेषु विलासिनीनां कर्णावतंसाः कलयन्ति कम्पम्।'

'लीलाचलच्छ्रवणकुण्डलमापतन्ति।'

'अपूर्वमधुरामोदप्रमोदितदिशस्ततः।
आययुर्भृङ्गमुखराः शिरःशेखरशालिनः॥'

एषु कर्णश्रवणशिरःशब्देभ्यः संनिधानस्य प्रतिपत्तिः।

'प्राणेश्वरपरिष्वङ्गविभ्रमप्रतिपत्तिभिः।
मुक्ताहारेण हसता[1] हसतीव स्तनद्वयम्॥'

अत्र मुक्ताशब्दाच्छुद्धिप्रतीतिः।

'प्रायशः पुष्पमालेव कन्यका कं न लोभयेत्।' अत्र पुष्पशब्दादुत्कर्षप्रतीतिः। 'त्यज करिकलभ प्रेमबन्धं करिण्याः।' अत्र करिशब्दत्वात्ताद्रूप्यावगतिः। यत्र तु न विशेषप्रतिपत्तिर्यथा—'ज्याबन्धनिष्पन्दभुजेन यस्य' इति, 'अदादिन्द्राय कुण्डले' इति, 'पाण्ड्योऽयमंसार्पितलम्बहारः' इति, 'मालाकार इवारामः' इति, 'लब्धेषु वर्त्मसु सुखं कलभाः प्रयान्ति', इति च, तत्र केवला एव ज्यादिशब्दाः, न च

---

लाकाङ्क्षा एवान्तर्भावादिति॥ **धनुःशब्दादिति**। अन्यथा ज्याकिणचिह्नेन दोष्णेत्युक्तेऽनवरतदृढाकर्षणाहितकिणमण्डितत्वं दोष्णो न प्रतीयेत। वेष्ट्यमानेऽप्यमानया ज्यया कृतकिणचिह्नस्य संभवात्॥ **कर्णेति**। विलासनिर्वाहार्थं प्रतिनियतस्वदेशसंनिहितैराभरणैः प्रयोजनमिति तदर्थं प्रयुक्तेभ्य इत्यर्थः॥ **मुक्ताशब्दादिति**। उत्प्रेक्ष्यमाणस्य स्तनद्वयकर्तृकस्य हासस्य सातिशयधवलताप्रतिपत्तये साधकतमस्य हारस्य केवलमुक्तालतावेष्टितत्वप्रतीत्यर्थं प्रयुक्तात्॥ **पुष्पशब्दादिति**। विदग्धजनमनोविलोभनक्षमकन्यारत्नोपमानभावेन मालाया उपादानादुत्कृष्टपुष्पग्रथितत्वागमनाय प्रयुक्तादित्यर्थः॥ **धांश इति**। धैवतांश

---

१. 'लसता' प्रकाशे.

नितम्बकाञ्च्योष्ठकरभादिषु तथा प्रसङ्गः । तेषां कविभिरप्रयुक्तत्वात् । संकेतव्यवहाराभ्यां हि शब्दार्थनिश्चय इति । क्वचिद्गुणो यथा—

'प्राप्ताः श्रियः सकलकामदुघास्ततः किं
दत्तं पदं शिरसि विद्विषतां ततः किम् ।
संप्रीणिताः[1] प्रणयिनो विभवैस्ततः किं
कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ॥'

अत्र हि निर्वेदपारवश्येन वक्तुरियमुक्तिः प्रत्युत रसपोषाय । यदाह—

'वक्ता हर्षभयादिभिराक्षिप्तमनास्तथा स्तुवन्निन्दन् ।
यत्पदमसकृद्ब्रूते तत्पुनरुक्तं न दोषाय ॥'

इति ।

उचितसहचारिभेदो **भिन्नसहचरत्वम्** । यथा—

'श्रुतेन बुद्धिर्व्यसनेन मूर्खता, मदेन नारी, सलिलेन निम्नगा ।
निशा शशाङ्केन, धृतिः समाधिना, नयेन चालंक्रियते नरेन्द्रता ॥'

अत्र श्रुतबुद्ध्यादिभिरुत्कृष्टैः सहचरैर्व्यसनमूर्खतयोर्निकृष्टयोर्भिन्नत्वम् ।

विरुद्धं व्यङ्ग्यं यस्य तद्भावो **विरुद्धव्यङ्ग्यत्वम्** । यथा—

'इदं ते केनोक्तं कथय कमलातङ्कवदने
यदेतस्मिन्हेम्नः कटकमिति धत्से खलु धियम् ।
इदं तद्दुःसाधाक्रमणपरमास्त्रं स्मृतिभुवा
तव प्रीत्या चक्रं करकमलमूले विनिहितम् ॥'

अत्र कामस्य चक्रं लोकेऽप्रसिद्धम् । 'लग्नं रागावृताङ्ग्या—' इति । अत्र विदितं तेऽस्त्वित्यनेन श्रीस्तस्मादपसरतीति विरुद्धं व्यज्यते ॥

---

१. 'संतर्पिताः' प्रकाशे.

प्रसिद्ध्या विद्याभिश्च विरुद्धत्वम्, तत्र **प्रसिद्धिविरुद्धत्वम्** । यथा—

'उपपरिसरं गोदावर्याः परित्यजताध्वगाः
सरणिमपरो मार्गस्तावद्भवद्भिरवेक्ष्यताम् ।
इह हि विहितो रक्ताशोकः कयापि हताशया
चरणनलिनन्यासोदञ्चन्नवाङ्कुरकञ्चुकः ॥'

अत्र पादाघातेनाशोकस्य पुष्पोद्गम एव कविषु प्रसिद्धो नाङ्कुरोद्गमः ।

यथा वानुप्रासे—

'चक्री चक्रारपङ्क्तिं हरिरपि च हरीन्धूर्जटिर्धूर्ध्वजान्ता-
नृक्षं नक्षत्रनाथोऽरुणमपि वरुणस्तुम्बराग्रं कुबेरः ।
रंहःसंघः सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य
स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः सोऽवतात्स्यन्दनो वः ॥'

अत्र कर्तृकर्मप्रतिनियमेन स्तुतिरनुप्रासानुरोधेनैव कृतः न पुराणादिषु तथा प्रतीता । कदाचिच्चक्रिणश्चक्रारप्रियत्वं संभाव्येतापि तु उत्तराणि तु न तथा संगच्छन्ते इति प्रसिद्धिविरोधः ।

यथा वोपमायाम्—'ग्रथ्नामि काव्यशशिनं विततार्थरश्मिम् ।' अत्र काव्यस्य शशिना अर्थानां च रश्मिभिः साधर्म्यं न प्रसिद्धम् । तथा—

'चकास्ति वदनस्यान्तः स्मितच्छाया विकासिनः ।
उन्निद्रस्यारविन्दस्य मध्यगा चन्द्रिका यथा ॥'

अत्र मध्यगतचन्द्रिकयारविन्दस्योन्निद्रत्वमसंभवमिति **प्रसिद्धिविरुद्धत्वम्** ।

कलाचतुर्वर्गशास्त्राणि विद्या । कलाश्च गीतनृत्यचित्रकर्मादिकाः । तत्र **गीतविरुद्धत्वम्** । यथा—

'श्रुतिसमधिकमुच्चैः पञ्चमं पीडयन्तः
सततमृषभहीनं भिन्नकीकृत्य षड्जम्।
प्रणिजगदुरकाकि श्रावकस्निग्धकण्ठाः
परिणतिमिति रात्रेर्मागधा माधवाय॥'

श्रुतिसमधिकमिति। श्रुत्या समधिकं पञ्चश्रुतिकमित्यर्थः। पीडयन्त इति श्रुतिह्रासेनाल्पीकुर्वन्त इत्यर्थः। भिन्नकीकृत्य षड्जमिति। भिन्नषड्जं कृत्वेत्यर्थः। प्रातःकाले भिन्नषड्जो गेय इत्याम्नायात्। अत्र भिन्नषड्जेन माधवी(गधी)गीतिरुपनिबद्धा तस्यां च पञ्चमस्य ऋषभवदसंभव एव दूरे पुनः श्रुतिसमधिकत्वम्। यतो भिन्नषड्जस्येदं लक्षणम्—'धांशस्तु धैवतन्यासः पञ्चमर्षभवर्जितः। षड्जोदीच्यवती जातेर्भिन्नषड्ज उदाहृतः॥' एवं कलान्तरेष्वप्युदाहार्यम्।

चतुर्वर्गे धर्मशास्त्रविरुद्धत्वं यथा—

'सततं स राजसूयैरीजे विप्रोऽश्वमेधैश्च।'

अत्र विप्र इति। क्षत्रियस्य हि तत्राधिकारः।

---

इत्यर्थः। **षड्जोदीच्यवती जातेरिति**। जातयो ह्यष्टादश। तथा हि मुनिः—'षाड्जी चैवार्षभी चैव धैवत्यथ निषादिनी। षड्जोदीच्यवती चैव तथा स्यात्षड्जकैशिकी॥ स्यात्षड्जमध्यमावेव षड्जग्रामसमाश्रयाः। अत ऊर्ध्वं प्रवक्ष्यामि मध्यमग्रामसंश्रयान्॥ गान्धारी मध्यमा चैव गान्धारोदीच्यकी तथा। पञ्चमी रक्तगान्धारी तथा गान्धारपञ्चमी॥ मध्यमोदीच्यका चैव नन्दयन्ती तथैव च। कार्मीरवी च विज्ञेया तथान्ध्री कैशिकी मता॥' इत्येतासां मध्या या षड्जोदीच्यवती जातिस्तस्याः सकाशादित्यर्थः॥ **कलान्तरेष्वप्युदाहार्यमिति**। तत्र चित्रकलाविरोधो यथा—'कालिङ्गं लिखितमिदं वयस्य पत्रं पत्रैरपतितकोटिकण्टकश्रि।' 'कालिङ्गं पतिताग्रकण्टकम्' इति पत्रविदामाम्नायः। एवं कलान्तरेष्वप्यूह्यम्॥ **क्षत्रियस्य हीति**। तथा च स्मृतिः—

अर्थशास्त्रविरुद्धत्वं यथा—

'अहंकारेण जीयन्ते द्विषन्तः किं नयश्रिया ।'

द्विषज्जयस्य हि नयमूलत्वं स्थितं दण्डनीतौ ।

कामशास्त्रविरुद्धत्वं यथा—

'तवोत्तरोष्ठे बिम्बोष्ठि दशनाङ्को विराजते ।'

उत्तरोष्ठमन्तर्मुखं नयनान्तं च मुक्त्वा चुम्बनवद्दशनस्थानानि इति हि कामशास्त्रे स्थितम् ।

मोक्षशास्त्रविरुद्धत्वं यथा—

'देवताभक्तितो मुक्तिर्न तत्त्वज्ञानसंपदः ।'

एतस्यार्थस्य मोक्षशास्त्रेऽस्थितत्वाद्विरुद्धत्वम् ॥

**त्यक्तपुनरात्तत्वम्** । यथा—'लग्नं रागावृताङ्ग्या—' इति । अत्र विदितं तेऽस्त्वित्युपसंहृतोऽपि तेनेत्यादिना **पुनरुपात्तः** ।

क्वचिद्गुणः—

'शीतांशोरमृतच्छटा यदि कराः कस्मान्मनो मे भृशं
संपुष्पत्यथ कालकूटपटलीसंवाससंदूषिताः ।
किं प्राणान्न हरन्त्यतिप्रियतमासंजल्पमात्राक्षरै-
रक्ष्यन्ते किमु मोहमेमि हहहा नो वेद्मि का मे गतिः ॥'

अत्र ससंदेहालंकारस्त्यक्त्वा त्यक्त्वा **पुनरुपात्तो** रसपरिपोषाय ॥

परिवृत्तौ विनियोजितौ नियमानियमौ सामान्यविशेषौ विध्यनुवादौ च यत्र तद्भावस्तत्त्वम् ।

---

'राजा राजसूयेन स्वाराज्यकामो यजेत । राजा सर्वतोऽविजिती अश्वमेधेन यजेत' इति। देवताभक्तित इति । 'चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन । आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ । तेषां ज्ञानि नित्ययुक्त एकभ-

तत्र **परिवृत्तो नियमोऽनियमेन** । यथा—

'यत्रानुल्लिखितार्क्षमेव[1] निखिलं निर्माणमेतद्विधे-
रुत्कर्षप्रतियोगिकल्पनमपि न्यक्कारकोटिः परा ।
याताः प्राणभृतां मनोरथगतीरुल्लङ्घ्य यत्संपद-
स्तस्याभासमणीकृताश्मसु मणेरश्मत्वमेवोचितम् ॥'

अत्र 'च्छायामात्रमणीकृताश्मसु मणेस्तस्याश्मतैवोचिता' इति नियमे वाच्ये तस्याभासेत्यनियम उक्तः ।

**परिवृत्तौ नियमोऽनियमेन** । यथा—

'[2]वक्त्राम्भोजे सरस्वत्यधिवसति सदा, शोण एवाधरस्ते,
बाहुः काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः ।
वाहिन्यः पार्श्वमेताः क्षणमपि भवतो नैव मुञ्चन्त्यभीक्ष्णं,
स्वच्छेऽन्तर्मानसेऽस्मिन्कथमवनिपते तेऽम्बुपानाभिलाषः ॥'

अत्र शोण इत्यनियमे वाच्ये शोण एवेति नियम उक्तः ।

**परिवृत्तं सामान्यं विशेषेण** । यथा—

'कल्लोलवेल्लितदृषत्परुषप्रहारै
रत्नान्यमूनि मकराकर[3] मावमंस्थाः ।
किं कौस्तुभेन विहितो भवतो न नाथ[4]
याच्ञाप्रसारितकरः पुरुषोत्तमोऽपि ॥'

---

क्त्रिर्विशिष्यते ॥' इत्युक्तनीत्या ज्ञानित्वेन एका भक्तिः । सा नात्र विवक्षिता । अपि त्वार्तत्वादिभिस्त्रिरूपा ॥ **अनुल्लिखितार्क्षमिति**[1] । अनभिव्यक्ताकारम् ॥

इति **श्रीहेमचन्द्राचार्य**विरचिते विवेके तृतीयोऽध्यायः ।

---

१. 'तार्थमे' प्रकाशे. २. 'वक्त्राम्भोज स' प्रकाशे. ३. 'मकरालय' प्रकाशे. ४. 'नाम' प्रकाशे.

---

१. 'तार्थमे' प्रकाशे.

अत्र 'एकेन किं न विहितो भवतः स नाम' इति सामान्ये वाच्ये कौस्तुभेनेति विशेष उक्तः ।

**परिवृत्तौ विशेषः सामान्येन** । यथा—

'श्यामां श्यामलिमानमानयत भोः सान्द्रैर्मषीकूर्चकै-
मैन्त्रं तन्त्रमथ प्रयुज्य हरतश्वेतोत्पलानां स्मितम् ।
चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके
येन द्रष्टुमहं क्षमो दश दिशस्तद्वक्त्रमुद्राङ्किताः ॥'

अत्र ज्योत्स्नामिति विशेषे वाच्ये श्यामामिति सामान्यमुक्तम् ।

**परिवृत्तौ विधिरनुवादेन** । यथा—

'अरे रामाहस्ताभरण मधुपश्रेणिशरण
स्मरक्रीडाव्रीडाशमन विरहिप्राणदमन ।
सरोहंसोत्तंस प्रचलदल नीलोत्पल सखे
सखेदोऽहं मोहं श्लथय कथय क्वेन्दुवदना ॥'

अत्र विधौ वाच्ये विरहिप्राणदमनेति अनुवाद उक्तः ।

**परिवृत्तोऽनुवादो विधिना** । यथा—

'प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशा-
मकेशवमपाण्डवं भुवनमद्य निःसोमकम् ।
इयं परिसमाप्यते रणकथाद्य दोःशालिना-
मपैतु रिपुकाननातिगुरुरद्य भारो भुवः ॥'

अत्र शयित इत्यनुवादे वाच्ये शेषे इति विधिरुक्तः । प्रयत्नेन परिबोध्यसे इति विधौ वाच्ये परिबोधित इत्युक्तमिति परिवृत्तविधित्वमपि । अत्र चान्वर्थबलादेवाधिगतेः पदादिदोषाणां विशेषलक्षणं न प्रणीतम् ॥

१. 'हरत श्वेतो' प्रकाशे.

अथापवादानाह—

**नानुकरणे ।**

दोषा इत्यनुवर्तते । अनुकरणविषये निरर्थकादयः शब्दार्थदोषा न भवन्ति । उदाहरणं प्रागेव प्रदर्शितम् ॥

**वक्त्राद्यौचित्ये च ।**

वक्तृप्रतिपाद्यव्यङ्ग्यवाच्यप्रकरणादीनां महिम्ना न दोषो न गुणः । तथोदाहृतम् ॥

**क्वचिद्गुणः ।**

वक्त्राद्यौचित्ये क्वचिद्गुण एव । तथैवोदाहृतम् ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायामलंकारचूडामणिसंज्ञस्वोपज्ञकाव्यानुशासनवृत्तौ दोषविवेचनो नाम तृतीयोऽध्यायः।

---

चतुर्थोऽध्यायः।

**सगुणौ शब्दार्थौ काव्यमित्युक्तम् । गुणानां च रसोत्कर्षहेतुत्वं सामान्यलक्षणं प्रतिपादितम् । इदानीं तद्भेदानाह—**

**माधुर्यौजःप्रसादास्त्रयो गुणाः ।**

त्रयो न तु पञ्च[1] दश वा, लक्षणस्य व्यभिचारादुच्यमानगुणेष्वेवा-

---

**न तु दश[1] पञ्च वेति** । अयं भावः—माधुर्यौजःप्रसादा एव गुणाः, ते च मुख्यवृत्त्या रसस्यैवेति । प्राक् सामान्यलक्षणे निर्णीतम् । ततश्चैते शब्दार्थाश्रयत्वेनान्ये च गुणायत्कैश्चन प्रतिपाद्यन्ते तन्न युक्तमिति । तथा हि—'ओजःप्रसादश्लेषसमतासमाधिमाधुर्यसौकुमार्योदारतार्थव्यक्तिकान्तयो बन्धगुणा दश'

१. टीकायां तु 'दश पञ्च वा' इत्युपलभ्यते, व्याख्यायते च तेनैव क्रमेण. तस्मात् 'पञ्च दश' इति पाठो लेखकप्रमादजो भवेत्.

---

१. मूले तु 'पञ्च दश वा' इत्युपलभ्यते.

न्तर्भावात्, दोषपरिहारेण स्वीकृतत्वाच्च । गुणा इति रसस्य गुणाः शब्दार्थयोस्तु भक्त्या इत्युक्तमेव ।

---

इति केचित् । तत्र 'अवगीतस्य हीनस्य वा वस्तुनः शब्दार्थसंपदा यदुदात्तत्वं निषिञ्चन्ति कवयस्तदोजः' इति भरतः[1] । यथा—'गोमायवः शकुनयोऽत्र शुनां गणोऽत्र लुम्पन्ति कीटकृमयः परितस्तथैते । त्वं संपदं सकलसत्त्वकृतोपकारं(?) [2]नोदृष्टवान्यदपि(?)तच्छव वञ्चितोऽसि ॥' अनवगीतस्याहीनस्य वा वस्तुनः शब्दार्थयोरर्थसंपदा यदनुदात्तत्वं निषिञ्चन्ति कवयस्तर्हि तदनोजः स्यादिति मङ्गलः । यथा—'ये संतोषसुखप्रबद्धमनसस्तेषां न भिन्ना मुदो येऽप्येते धनलोभसंकुलधियस्तेषां तु दूरे नृणाम् । धिक्तं कस्य कृते कृतः स विधिना तादृक्पदं संपदां स्वात्मन्येव समाप्तहेममहिमा मेरुर्न मे रोचते ॥' कवीनामभिधेयं प्रति त्रयः पन्थानः । एते न्यूनमुत्कर्षन्ति, अधिकमपकर्षन्ति, यथार्थं वस्तु स्थापयन्ति, तत्कथमिवायं गुण इति दण्डी । तस्मात्[4]समासभूयस्त्वमोजः । तच्च गद्यविभूषणं प्रायेण, वृत्तवर्त्मन्यपि गौडास्तदाद्रियन्ते । प्रथममाख्यायिकादिषूपलभ्यते । द्वितीयं यथा—'दूरोद्दण्डतडित्करालतरलज्योतिश्छटाडम्बरस्फारस्फूर्जितदुर्जयास्त्रसचिवज्याघोषघूत्कारिणाम् । यस्यैकस्य शतानि पञ्च धनुषां दैत्याहवेषु व्यधुर्लीलीभावगभीरघोरमखिलब्रह्माण्डकोलाहलम् ॥' रीतित्रयेऽप्योजसः साधारणत्वाद्गौडीयानिर्देशो न युक्तिमानिति वामनो मङ्गलश्च ।' तस्माद्गाढत्वमोजः[5] । यथा—'भस्मवर्म फणिनः पतिर्गवामस्थिपङ्क्तिरिति ते परिग्रहः । ईश इत्ययमनन्यचुम्बितश्चन्द्रचूड तदपि त्वयि ध्वनिः ॥' एवं रीत्यन्तरेऽपि ॥ ओजसि हेत्वन्तरमवमृश्यतां, न पुनर्गाढत्वम् । तद्धि शुद्धमोजसः प्रत्युत हानिहेतुः[6] । यथा—'वज्रेणान्तर्नु वज्रिन् जहि बहुविशतं(?)वासुके शेषघोणां दन्तैर्दिग्दन्ति-

---

१. भरते तु 'समासवद्भिर्विविधैर्विचित्रैश्च पदैर्युतम् । मा(?)तु स्वरैरुदारैश्च तदोजः परिकीर्त्यते ॥' इत्युपलभ्यते. २. 'नो' इति भवेत्. ३. 'गीत' इति भवेत्. ४. तथा च काव्यादर्शे—'ओजः समासभूयस्त्वमेतद्गद्यस्य जीवितम् । पद्येऽप्यदाक्षिणात्यानामिदमेकं परायणम् ॥ तद्गुरूणां लघूनां च बाहुल्याल्पत्वमिश्रणैः । उच्चावचप्रकारं तद्दृश्यमाख्यायिकादिषु ॥' इति. ५. तथा च वामनसूत्रम्—'गाढबन्धनत्वमोजः' इति. ६. वामनेन तु 'न शुद्धः' इति सूत्रेण शुद्धस्य प्रसादस्य दोषत्वमङ्गीकृतम्.

नोऽक्ष्णो विघटयत पुटानङ्गुलीर्हि त्रिशूलैः। दंध्वन्यध्वं श्रवःस्थाः प्रलयजलमुचः कूर्मे आकम्पयोर्वीं मैनाक क्षुध्वि(?)वक्षस्तटमटतु रणे कुम्भकर्णोऽस्तनिद्रः॥' तस्मान्न गाढत्वमोजः। अर्थगुणस्तु 'अर्थस्य प्रौढिरोजः' इति वामनः। तत्र—'पदार्थे वाक्यवचनं वाक्यार्थे च पदाभिधा। प्रौढिर्व्याससमासौ च साभिप्रायत्वमस्य च॥' इति या प्रौढिरोजसस्तद्वैचित्र्यमात्रम्। साभिप्रायत्वरूपं चौजोऽपुष्टार्थत्वदोषमात्रं[1] न गुणः। किं च। भोः सहृदया अर्थो जडस्तस्याभिप्राय इति केषां भाषा। वक्तृश्रोत्रोः स इति चेत्तद्गतोऽर्थस्य गुण इति कथम्। अथ वस्त्वन्तराक्षेपकत्वमेव तस्य गुण इत्युच्यते। तद्वस्त्वन्तरमाक्षेप्यं वक्त्रभिप्रायरूपमेवमाक्षेपकत्वमपि कविव्यापारबलादेव तथा विनिवेशनाप्रकारयोगे तथाभावात्। अत एव प्रौढिर्वस्तुतो वक्तृगतैव, सा त्वर्थे काममुपचर्यतामित्यलं बहुना॥

विभक्तवाच्यवाचकायोगादनुक्तयोरपि शब्दार्थयोः प्रतिपत्तिः प्रसाद इति भरतः[2]। पदपूर्विका तदर्थावगतिरिति शब्दार्थयोर्ग्रहणम्। यथा—'यस्याहुरतिगम्भीरजलदप्रतिमं गलम्। स वः करोतु निःसङ्गमुदयं प्रतिमङ्गलम्॥' सेयं विशेषणाधारा विशेष्यग्राणामुक्तिरिति वामनीयाः। तस्मात् 'शैथिल्यं प्रसादः'। ओजोविपर्ययात्मा कथं गुण इति[3]। गाढत्वसंप्लुतं शैथिल्यमेव गुण इति चेत्[4]। परस्परविरोधित्वाद्गाढत्वशैथिल्ययोः कथमेकत्र संनिवेशः संभवतीति[5]। अनुभवादेव विरोधप्रतिषेध इति चेत्[6]। यदाह—'करुणप्रेक्षणीयेषु संप्लवः सुखदुःखयोः। यथानुभवतः सिद्धस्तथैवौजःप्रसादयोः॥' सेयं दृष्टान्तस्यैव तावदसिद्धिः। दृष्टान्तविघातश्च दार्ष्टान्तिकमपि प्रतिहन्ति। तथा हि—सामाजिकजनो नाट्यकर्मणि करुणरसवासितचेताः प्रथमं दुःखातिमात्रप्रयोगवैशारद्येन[7] च पश्चात्सुख्यति। ओजःप्रसादयोः पुनर्युगपदेवानुभवप्रतिज्ञा। यदि च तत्त्वं विवेच्यते तदा सर्वेषामपि रसानां प्रतीतिश्चमत्कारसारत्वात्सुखरूपैवेति दृष्टान्त एव न संगच्छते। तस्माद्विकाशहेतुः सर्वत्र प्रसाद इति। अर्थगुणस्तु '**वैमल्यं प्रसादः**'[8] इति। प्रयो-

---

१. 'दोषनिराकरणमात्रम्' इति भवेत्. २. भरते तु 'अथानुक्तो बुधैर्यत्र शब्दादर्थः प्रतीयते। सुखशब्दार्थसंयोगात्प्रसादः परिकीर्त्यते॥' इति. ३. अत्र 'चेत्' इति भवेत्. ४. अत्र 'चेत्' इति न भवेत्. ५. अत्र 'चेत्' इति भवेत्. ६. अत्र 'चेत्' इति न स्यात्. ७. 'दुःख्यति, पात्रप्रयो' इति स्यात्. ८. वामनसूत्रं तु 'अर्थवैमल्यं' इत्युपलभ्यते.

जकपद[1]परिग्रहो हि वैमल्यम् । तच्चाधिकपदत्वदोषनिराकरणात्स्वीकृतमेव ॥' 'स्वभावस्पष्टं विचारगहनं वचः **श्लिष्टम्**' इति भरतः[2] । 'क्षणं[3] स्थिताः पक्ष्मसु ताडिताधराः पयोधरोत्सेधनिपातचूर्णिताः । बलीषु तस्याः स्खलिताः प्रपेदिरे चिरेण नाभिं प्रथमोदबिन्दवः ॥' सेयमभिधानाभिधेयव्यवहारे वैदग्धी, न पुनः संदर्भधर्मः । रचनारूपता हि गुणस्य स्वरूपमिति वामनीयाः । तस्मात् 'मसृणत्वं श्लेषः' । तदाह—यस्मिन् सति बहून्यपि पदानि एकपद[4]वद्भासन्ते स श्लेषः ॥ 'अस्त्युत्तरस्यां दिशि देवतात्मा' इति । मसृणमदन्तरायां(?)हि रीतिवैशस्योपनिपातः । तं चान्यतररसनिर्वाहे निषेवन्ते । तस्मात् 'अशिथिलं श्लिष्टम्' इति दण्डी[5] ॥ यथा—'प्रेक्षामृदङ्गनिनदानुपकर्ण्य तूर्णमम्भोदनादरभसान्न वृतं मयूरैः । यन्मन्दिरे सरलकण्ठमकण्ठकूजमुन्मण्डलीकृतशिखण्डमकाण्ड एव ॥' सोऽयमोजः प्रकार एव । अदृष्टगौडसंदर्भस्य वा दर्शनमित्युपेक्षणीयम् । गौडा हि शिथिलमाद्रियन्ते । यथा—'लीलाविलासललनाललितालकलास्यकाः । विलुप्तमालतीमाला जलकालानिला ववुः ॥' इति । अर्थगुणस्तु 'घटना श्लेषः' । क्रमकौटिल्यानुल्बणत्वोपपत्तियोगो हि घटना । यथा—'दृष्ट्वैकासन–' इति । संविधानकभवं वैचित्र्यमात्रमिदं न गुणः ॥ 'परस्परविभूषणो गुणालंकारग्रामः **समम्**' इति भरतः । यथा—'स्मरनवनदी–' इति । भिन्नाधिकरणा हि गुणालंकारास्तत्कथमन्योन्यं भूषयेयुरिति दण्डी । श्लेषयमकचित्राणि हि प्रायेण गुणान्विगृह्य वर्तन्ते । अनुप्रासोऽपि प्रचुरं प्रयुक्तस्तद्वदेव । तस्माद्बन्धे[6]ष्वविषमं समम् । ते च प्रौढो मृदुर्मध्यश्चेति त्रयः । प्रौढमृदुमध्यवर्णविन्यासयोनित्वात् । प्रौढो यथा—'आहतं कुचतटेन तरुण्याः साधु सोढममुनेति पपात । त्रुट्यतः प्रियतमोरसि हारात्पुष्पवृष्टिरिव मौक्तिकवृष्टिः ॥' मृदुर्यथा—'ललितमङ्गमपाङ्गविलोकितं स्मितसुधालवपल्लवितोऽधरः । इति मनो जयतः प्रमदाजनं मनसिजस्य जयन्ति शिलीमुखाः ॥' मध्यो यथा—'ईदृशस्य भवतः कथमेतल्लाघवं मुहुरतीव रतेषु ।

---

१. 'मात्रपरि' इति वामनसूत्रवृत्तौ. २. भरते तु 'विचारगहनं यत्स्यात्स्फुटं चैव स्वभावतः । स्वतः सुप्रतिबद्धं च श्लिष्टं तत्परिकीर्तितम् ॥' इति. ३. 'स्थिताः क्षणं' इति कुमारसंभवे. ४. 'यत्रैकपदवद्भावः पदानां भूयसामपि । अनालक्षितसंधीनां स श्लेषः परमो गुणः ॥' इति वामनसूत्रवृत्तौ. ५. काव्यादर्शे तु 'श्लिष्टमस्पृष्टशैथिल्यमल्पप्राणाक्षरोत्तरम्' इति. ६. 'समं बन्धेष्वविषमं ते मृदुस्फुटमध्यमाः । बन्धा मृदुस्फुटोन्मिश्रवर्णविन्यासयोनयः ॥' इति काव्यादर्शवचनात्.

क्षिप्तमायतमदर्शयदुर्व्यां काञ्चिदाम जघनस्य महत्त्वम् । तदिदं वृत्तिभ्यो न पृथग्भवतीति वामनीयाः । तस्माद्येन रीतिविशेषेणोपक्रमस्तस्यापरित्याग आ समाप्तेरिति समताया रूपम् । तन्मुक्तके प्रबन्धे च । वैदर्भमार्गनिर्वाहो यथा—'किं व्यापारैः-' इति । गौडमार्गनिर्वाहो यथा—'क्षुद्रः कोऽयं तपस्वी क्षव(?)-वदननवच्छेदनिष्ठ्यूतमज्व्याजाज्यस्फारधाराहुतिहुतहुतभुक्पच्यमानैः कपालैः । जातास्थिस्फोटभीतिप्रविघटितवलद्वामपार्श्वप्रवेशकाम्यत्सव्येतरार्धाकुलितहरहठाकृष्टखड्गो दशास्यः ॥' पञ्चालमार्गनिर्वाहो यथा—'ते काकुत्स्थपृषत्कजर्जरजरत्तालद्रुमस्थाणवस्ते विच्छिन्नमहेन्द्रकन्दरकणत्कर्णेषु टङ्काङ्किताः । ते लीलाशबरेन्दुशेखरशरव्याक्षेपवीथीभुवो दुर्गाह्या अपि गाहिताः शशिरुचा कीर्त्या वनान्तास्तव ॥' एवं प्रबन्धेऽपि ॥ प्रयोगमार्गं प्रतिवेसन्तः[1] प्रमाणम् । ते च न सर्वत्र समतां[2] वैचित्र्याय संगिरन्ते । तथा हि—'अज्ञानाद्यदि वाधिपत्यरभसादस्मत्परोक्षे हृता सीतेयं प्रतिमुच्यतामिति वचो गत्वा दशास्यं वद । नो चेल्लक्ष्मणमुक्तमार्गणगणाच्छादोच्छलच्छोणितच्छत्रच्छन्नदिगन्तमन्तकपुरं पुत्रैर्वृतो यास्यसि ॥' इत्यादौ मसृणमार्गत्यागो गुणः ॥ तस्मात्समता वक्तव्या । अर्थगुणस्तु 'अवैषम्यं श्लथता' । प्रक्रमाभेदो ह्यवैषम्यम् । यथा—'च्युतसुमनसः कुन्दाः पुष्पेष्वलसा[3] द्रुमा मनसि च गिरं ग्रन्थन्ति[4] मे किरन्ति न कोकिलाः ।' प्रक्रमभेदो यथा—'च्युतसुमनसः कुन्दाः पुष्पेष्वलसा[5] द्रुमा मलयमरुतः सर्पन्ति[6] मे वियोग[7]धृतिच्छिदः ।' इति । मधुग्रीष्मर्तु[8]प्रतिपादनपरेऽत्र द्वितीयपादे प्रक्रमभेदः । मलयमरुतामसाधारणत्वात् । ततश्चापदोषत्वमेतन्न गुण इति ॥ अर्थस्य गुणान्तरसमाधानात्समाधिरिति भरतः । यथा—'परिणतशरकाण्डच्छायमच्छाच्छया यत्किसलयितमिवासीच्चारुलावण्यलक्ष्म्या । तदनुदिवसमस्यास्तोयविच्छेदखीदन्नवकुवलयदामश्यामलं जातमङ्गम् ॥' सोऽयमतिशयोक्तिविशेष इति वामनीयाः । तस्मात् 'आरोहावरोहक्रमः समाधिः ।' तत्रारोहपूर्वोऽवरोहो यथा—'शृङ्गोत्खातभुवः कृतान्तमहिषादत्रस्त उच्चैःश्रवाः श्रुत्वैरावणकण्ठगर्जितमयं क्रुद्धोऽम्बिकाकेसरी । संगीतागतकम्बलाश्वतरयोः प्रेक्षागृहद्वारि च प्रेक्ष्य स्कन्दशिखण्डिनं चकितयोः कस्मान्मुखं म्लायति ॥'

---

१. 'च सन्तः' २. 'समता' वामनसूत्रे. ३. 'पुष्पोद्गमे' वामनालंकारसूत्रवृत्त्युपलब्धः साधीयान्. ४. 'बध्नन्तीमे' वामनसूत्रवृत्तौ. ५. पुष्पोद्गमे' स्यात्. ६. 'न्तीमे' स्यात्. ७. 'वियुक्त' सूत्रवृत्तौ वामनः. ८. 'ऋतुसंधिप्र' सूत्रवृत्तिः.

अवरोहपूर्व आरोहो यथा—'यद्वर्ज्यामिर्जगाहे गुरुसकलकुलास्फालनत्रासहासव्यस्तोरुस्तम्भिकाभिर्दिशि दिशि सरितां दिग्जयप्रक्रमेषु । अम्भोगम्भीर……कुहूरकवलनोन्मुक्तिपर्यायलोलत्कल्लोलाबद्धमुग्धध्वनिचकितकणत्कुङ्कुमं कामिनीभिः ॥' तदिदं गुरुलघुसंचययोरन्योन्यान्तरणमिति दण्डी । तस्मादन्यधर्मस्यान्यत्र समाधानात्समाधिः । यथा—'प्रतीच्छत्याशोकिं किसलयपरावृत्तिमधरः कपोलः पाण्डुत्वादवतरहिता[1]डीपरणतिम् । परिम्लानप्रायामनुवदति दृष्टिः कमलिनीमितीयं माधुर्यं स्पृशति च तनुत्वं च भजते ॥' सेयमुपचरिता वृत्तिरिति चेद्गुणः, योग्यवृत्त्या किमपराद्धमिति ॥ अर्थगुणस्तु 'अर्थदृष्टिः समाधिः' । यथा—'अप्रादपि मध्यापदि मूलादपि [2]सर्वतोऽथ शोकस्य । पिशुनस्थमिव रहस्यं यतस्ततो निर्गतं कुसुमम् ॥' [3]अर्थस्य योनेरन्यच्छायायोनेर्वा यदि न भवति दर्शनं तत्कथं काव्यं स्यात् । ततश्च सकलसत्कविदृष्टः काव्यार्थः समाधिः स्यादिति नार्थगुणः समाधिः ॥ बहुशो यच्छ्रुतमभिहितं [4]वाक्यमनुद्वेजकं मनसस्तन्मधुरमिति भरतः । दयितजनरूक्षाक्षराक्षेपवचनेऽपि तत्समानमिति वामनीयाः । तस्मात् 'पृथक्पदत्वं माधुर्यम्' । तदिदमनुभवविरुद्धमिति दण्डी । समासेऽपि माधुर्यस्य दर्शनात् । यथा—'अनवरतनयनजललवनिपतनपरिमुषितपत्रलेखान्तम् । करतलनिषण्णमबले वदनमिदं किं न तापयति ॥' इति । तस्माद्रसवन्मधुरम् । रसस्तु द्विधा—……………… । व्यङ्ग्यस्तु विषयत्वेन । तयोः श्रुतिवर्णानुप्रासाभ्यां वाग्रसः । अनुप्रासो ह्यलंकारः । कथं तस्य गुणत्वम् । अग्राम्याभिधेयता तु वस्तुरसः । असभ्यार्थनिबन्धनं हि ग्राम्यता । यथा—'ब्रह्मचर्योपतप्तोऽहं त्वं च क्षीणा बुभुक्षया । भद्रे भजस्व मां तूर्णं तव दास्याम्यहं पणम् ॥' [5]सोवेदोमाभावो न गुणः । एतेनोक्तिवैचित्र्यरूपं माधुर्यं वामनोक्तोऽप्यर्थगुणो निरस्त एव । तस्मादाह्लादकत्वं माधुर्यमिति ॥ सुखशब्दार्थं सुकुमारमिति [6]भरतः । यथा—'अङ्गानि चन्दनरजःपरिधूसराणि ताम्बूलरागसुभगोऽधरपल्लवश्च । अच्छाञ्जने च नयने वसनं तनीयः कान्तासु भूषणमिदं विभवावशेषः ॥' 'सुखशब्द-

१. 'ति तालीपरि-' स्यात्. २. 'तोऽप्यशो' स्यात्. ३. 'अर्थस्यायोने' स्यात्. ४. 'बहुशो यच्छ्रुतं काव्यमुक्तं वापि पुनः पुनः । नोद्वेजयति तस्माद्धि तन्माधुर्यमुदाहृतम् ॥' इति भरतोक्त्यनुसारेण 'वा काव्य' स्यात्. ५. 'सा वै दोषाभावः' इति स्यात्. ६. 'सुखप्रयोज्यैश्छन्दोभिर्युक्तं प्रश्लिष्टसंधिभिः । सुकुमारार्थसंयुक्तं सुकुमारं तदुच्यते ॥' इति भरतपाठः.

मेव' इति वामनः। यथा—'हरेः कुमारोऽपि कुमारविक्रमः सुरद्विषास्फालनकर्कशाङ्गुलौ। भुजे शचीपत्रलताक्रियोचिते स्वनामचिह्नं निचखान सायकम्॥' सोऽयं श्रुतिकटुत्वदोषाभावो न गुणः। माधुर्यप्रकार एवाऽयम्। अर्थगुणस्तु-'अपारुष्यम् सौकुमार्यम्'। यथा—'स किलेन्द्रप्रयुक्तेन सौरिणा भूमिनन्दनः। चक्रघातोपदिग्धाध्वा नीतोऽत्यन्तप्रवासताम्॥' सोऽयममङ्गलरूपाश्लीलत्वदोषाभावो न गुणः॥ यदि वा उक्तिविशेषः पर्यायोक्तालंकारविषय एवासौ॥ बहुभिः सूक्ष्मैश्च विशेषैः समेतमुदारमिति भरतः। यथा—'ये पूर्वं यवसूचिसूत्रसुहृदो ये केतकाग्रच्छदच्छाया धाम(?)पुनर्मृणाललतिकालावण्यभाजोऽत्र ये। ये धाराम्बुविडम्बिनः क्षणमथो ये तारहारश्रियस्तेऽमी स्फाटिकदण्डडम्बरजितो जाताः सुधांशोः कराः॥' उल्लेखवानयमर्थः कथं गुण इति वामनीयाः। तस्माद् सति नृत्यन्तीव पदानीति वर्णना भवति। यथा—'अत्रान्तरे रणितहारलतानितम्बसंवाहनस्खलितवेगतरङ्गिताङ्गी। देवी व्यपास्य शयनं धृतमानतन्तुरन्तःपुरं गतवती सह सौविदल्लैः॥' सोऽयमीषदमसृणोऽनुप्रासभावो न गुणः। ओजःप्रकार एव वायम्। अर्थगुणस्तु—'अग्राम्यत्वमुदारता'। यथा—'त्वमेवंसौन्दर्या स च रुचिरतायाः परिचितः कलानां सीमान्तं परमिह युवामेव भजथ। अयि द्वन्द्वं दिष्ट्या तदिह सुभगे संवदति वामतः शेषं चेत्स्याज्जितमथ तदानीं गुणितया॥' सोऽयं दोषाभावो न गुणः॥ यस्मिन्न तथास्थितोऽपि तथास्थित एवार्थः प्रतिभाति सोऽर्थव्यक्तिर्गुण इति भरतः। यथा—'च्युतामिन्दोर्लेखां रतिकलहभग्नं च वलयं द्वयं चक्रीकृत्य प्रहसितमुखी शैलतनया। अवोचद्यं पश्येत्यवतु स शिवः सा च गिरिजा स च क्रीडाचन्द्रो दशनकिरणापूरिततनुः॥' सोऽयं प्रसादादभिन्न इति वामनीयाः। तस्माद्यत्र पुरस्तादिव वस्तुनोऽवगतिः पश्चादिव वाचां सार्थव्यक्तिः। यथा—'महेश्वरे वा जगतां महेश्वरे जनार्दने

---

१. 'अजरठत्वं सौकुमार्यम्' इत्येवं वामनसूत्रेषूपलभ्यते, तत्र जरठत्वं परुषत्वं श्रुतिकटुत्वमिति यावत्. २. 'नीतो' स्यात्. ३. 'वासितम्' स्यात्. ४. 'दिव्यभावपरीतं यच्छृङ्गाराद्भुतयोजितम्। अनेकभावसंयुक्तमुदारं तत्प्रकीर्तितम्॥' इत्येवं भरते पाठः. ५. 'नाम' स्यात्. ६. 'तदिति' वामनसूत्रवृत्तौ. ७. 'सुप्रसिद्धा धातुना तु लोककर्मव्यवस्थिता। या क्रिया क्रियते काव्ये सार्थव्यक्तिः प्रकीर्त्यते॥' इत्येवं समुपलभ्यते.

वा जगदन्तरात्मनि । न वस्तुभेदप्रतिपत्तिरस्ति मे तथापि भक्तिस्तरुणेन्दुशेखरे ॥' सोऽयमुक्त्यन्तराभिहितः प्रसाद एवेति दण्डी । तस्मादनेयार्थत्वमर्थस्यार्थव्यक्तिः । तत्र चास्तोकमुदाहरणम् । दोषाभावोऽयं कथमिव गुणः । तथा चेद्बहुत्वाद्दोषाणां शतं गुणाः स्युः । अर्थगुणस्तु 'वस्तुनः स्फुटत्वमर्थव्यक्तिः'[1] । यथा—'पृष्ठेषु शङ्खशकलच्छविषु च्छदानां राजीभिरङ्कितमलक्तकलोहिनीभिः । गोरोचनाहरितबभ्रुबहिःपलाशमामोदते कुमुदमम्भसि पल्वलस्य ॥' कविवचनवैशारद्यतो वस्तुनः स्फुटत्वमनिसर्गतः । तदुक्तम्—'निवेशयति हृद्यर्थान्न तथापि तथेति वा । महाकवीनां विकटा वाणी विजयतामसौ ॥' अपि च । जातिर्नामायमलंकार इति ॥ श्रोत्रमनःप्रह्लादजननं कान्तं भरतः[2] । यथा—'ददृशुर्द्वारदेशस्थां सीतां वल्कलधारिणीम् । अङ्गदाह्लादनङ्गस्य रतिं प्रव्रजितामिव ॥' तदिदं माधुर्यसाधारणमिति वामनीयाः । तस्मात्—'औज्वल्यं कान्तिः' । यदभावे पुराणी बन्धच्छायेयमिति व्यपदिशन्ति । यथा—'स्त्रीणां केतकगर्भपाण्डुसुभगच्छन्दा[3]वदातप्रभे मन्दं कुड्मलिताः कपोलफलके लावण्यनिष्पन्दिनि । अन्यां कामपि कामिनीयक[4]कलामातन्वते नूतनां शीतांशोर्बिसकन्दकन्दलशिखामुग्धश्रियो रश्मयः ॥ ओजोऽप्यौज्वल्ययोगात्तर्हि कान्तिः । तस्माल्लोकसीमानतिक्रमः कान्तिरिति दण्डी । सा च द्विधा वार्तावर्णनयोः । तत्रोपचारवचनं वार्ता । प्रशंसावचनं वर्णना । वार्ता यथा—'एते वयममी दाराः कन्येयं कुलजीवितम् । ब्रूत येनात्र वः कार्यमनास्था बाह्यवस्तुषु ॥' वर्णना यथा—'तदाननं निर्जितचन्द्रकान्ति कन्दर्पदेवायतनं मनोज्ञम् । प्रदक्षिणीकर्तुमिति प्रवृत्ते विलोचने मुग्धविलोचनायाः ॥' लोकसीमानतिक्रमः[5] पुनरकान्तिः । तत्र वार्ता यथा—'मम दृष्टस्य राजेन्द्र तव दीर्घेण चक्षुषा । चरणद्वितयस्याग्रे नित्यं लुठति चन्द्रमाः ॥' वर्णना यथा—'वदनस्य तवेणाक्षि लक्ष्यते पुरतः शशी । पिण्डीकृतेन बहुना कज्जलेनेव निर्मितः ॥' सेयमतिशयोक्तेर्यन्त्रणा न पुनर्गुणान्तरमिति । अर्थगुणस्तु 'दीप्तरसत्वं (पुनः) कान्तिः' इति वामनः । यथा—'प्रेयान्सायमपाकृतः सशपथं पादानतः कान्तया द्वित्राण्येव पदानि वासभवनाद्यावन्न

---

१, 'वस्तुस्वभावस्फुटत्व' वामनसूत्रे. २. 'यन्मनःश्रोत्रविषयमाह्लादयति हीन्दुवत्। लीलाद्यर्थोपपन्नां वा तां कान्तिं कवयो विदुः ॥' इत्येवमुपलभ्यते. ३. 'च्छेदा' स्यात्. ४. 'कामनीयक' स्यात्. ५. 'सीमातिक्रमः' स्यात्.

यात्युन्मनाः । तावत्प्रत्युत पाणिसंपुटलसन्नीवीनिबन्धं धृतो धावित्वैव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः ॥' रौद्रादयो दीप्ता रसास्ततोऽन्ये तु शृङ्गारादयस्तद्विपरीतास्तन्निबन्धनमकान्तिस्तर्हि स्यात् । अथ वा व्यङ्ग्यं रसादिस्वरूपणेनैव कान्तिः स्वीकृतेति । ओजःप्रसादमधुरिमाणः साम्यमौदार्यं च पञ्चेत्यपरे । तथा हि । यददर्शिविच्छेदं पठतामोजः, विच्छिद्य पदानि पठतां प्रसादः आरोहावरोहतरङ्गिणि पाठे माधुर्यम्, ससौष्ठवमेव स्थानं पठतामौदार्यम्, अनुच्चनीचं पठतां साम्यमिति ॥ तदिदमलीकं कल्पनातन्त्रम् यद्विषयविभागेन पाठनियमः स कथं गुणनिमित्तमिति छन्दोविशेषनिवेश्या गुणसंपत्तिरिति केचित् । तथा हि । स्रग्धरादिष्वोजः । यथा—'ताम्यत्स्थामज्जमज्जन्मणिमसृणफणाचक्रवाले फणीन्द्रे यत्सेनोद्दामहेलाभरचलितमहाशैलकीलं बभार । कृच्छ्रात्पातालमूलाबिलबहलनिरालम्बजम्बालनिष्ठः पृष्ठाश्लीलप्रतिष्ठामवनिमवनमन्नर्कपरः कूर्मराजः ॥' इन्द्रवज्रोपेन्द्रवज्रादिषु प्रसादो यथा—'यथा यथा सा पदमङ्गकेषु प्रमोदिलक्ष्म्या निदधे मदस्य । तथा तथा कार्मुकमाततज्यं प्रसूनधन्वा कलयांचकार ॥' मन्दाक्रान्तादिषु माधुर्यं यथा—'किं व्यापारैः–' इति ॥ शार्दूलादिषु समता यथा—'गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु । विस्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले विश्रान्तिं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥' विषमवृत्तेष्वौदार्यं यथा—'निरवधि निराश्रयं च–' इति । सोऽयमनवगाहितप्रयोगाणां विभागक्रमः । तथा हि । स्रग्धरादिष्वनौजोऽपि यथा—'शंभो केयं स्थिता ते शिरसि शशिकला किं नु नामैतदस्या नामैवास्यास्तदेतत्परिचितमपि ते विस्मृतं कस्य हेतोः । नारीं पृच्छामि नेन्दुं कथयतु विजया न प्रमाणं यदिन्दुर्देव्या निह्नोतुमिच्छोरिति सुरसरितं शाठ्यमव्याद्विभोर्वः ॥' इन्द्रवज्रादिष्वप्रसादो यथा—'विविच्य बाधाः प्रभवन्ति यत्र न तत्र मिथ्यामतयश्चरन्ति । संसारमोहस्त्वयमन्य एव दिङ्मोहवत्तत्त्वधिया सहास्ते ॥' मन्दाक्रान्तादिष्वमाधुर्यं यथा—'सर्वप्राणप्रगुण मघवन्मुक्तमाहत्य वक्षस्तत्संघट्टाद्विघटितबृहत्खण्डमुच्चण्डरोचिः । एवं वेगाकुलितमकरोद्व्योमविद्युत्सहस्रैर्भर्तुर्वक्त्रज्वलनकपिशास्ते च रोषाट्टहासाः ॥' शार्दूलादिष्वसाम्यं यथा—'अज्ञानाद्यदिवाधिपत्यरभसात्–' इति ॥ विषमवृत्तेष्वनौदार्यं यथा—'अयमहिमरुचिर्भजन्प्रतीचीं कुपितवलीमुखतुण्डताम्रबिम्बः । जलनिधिमकरीभिरीक्ष्यते

---

१. 'नितम्बं' वामनसूत्रवृत्तौ २. 'कृच्छ्रात्' स्यात्. ३. 'नमत्कर्परः' स्यात्.

तत्र माधुर्यस्य लक्षणमाह—

**द्रुतिहेतुर्माधुर्यं शृङ्गारे ।**

द्रुतिरार्द्रता गलितत्वमिव चेतसः । शृङ्गारेऽर्थात्संभोगे । शृङ्गारस्य च ये हास्याद्भुतादयो रसा अङ्गानि, तेषामपि माधुर्यं गुणः ।

**शान्तकरुणविप्रलम्भेषु सातिशयम् ।**

सातिशयमिति अत्यन्तद्रुतिहेतुत्वात् ।

एतद्व्यञ्जकानाह—

**तत्र निजान्त्याक्रान्ता अटवर्गा वर्गा ह्रस्वान्तरितौ रणावसमासो मृदुरचना च ।**

निजेन निजवर्गसंबन्धिना......ङञणनमलक्षणेन शिरस्याक्रान्ता अटवर्गा टठडढरहिता वर्गाः, ह्रस्वान्तरितौ च रेफणकारौ । असमासः इति समासाभावोऽल्पसमासता वा, मृद्वी च रचना । तत्र माधुर्ये माधुर्यस्य व्यञ्जिकेत्यर्थः । यथा—

> 'शिञ्जानमञ्जुमञ्जीराश्चारुकाञ्चनकाञ्चयः ।
> कङ्कणाङ्कभुजा भान्ति जितानङ्ग तवाङ्गनाः ॥'

---

द्राक् नवरुधिरारुणमांसपिण्डलोभात् ॥' तदेवं यथान्यैर्गुणानां लक्षणमभिहितं तथा न वाच्यम् । यथायोगं लक्षणव्यभिचाराद्विवक्षितगुणेष्वन्तर्भावाद्दोषपरिहारेण स्वीकृतत्वाच्चेति ॥ **द्रुतिरिति** । द्रुतिहेतुत्वं माधुर्यस्य लक्षणं न तु श्रव्यत्वम् । ओजःप्रसादयोरपि श्रव्यत्वात् । तेन 'श्रव्यत्वं नातिसमस्तार्थशब्दं मधुरमिष्यते' इति माधुर्यलक्षणत्वेन श्रव्यत्वं यद्वामहेनोक्तं तन्न युक्तमित्यर्थः ॥ **अर्थादिति** । यद्यपि संभोगविप्रलम्भोभयरूपः शृङ्गारः तथापि गोबलीवर्दन्यायेनानन्तरविप्रलम्भप्रयोगसामर्थ्यात् । शृङ्गारः संभोग इत्युक्तः ॥

---

१. 'अन्त्येन' इति त्रुटितं भवेत्.

'दारुणरणे रणन्तं करिदा³रुणकारणं कृपाणं ते ।
रमणकृते रणरणकी पश्यति तरुणीजनो दिव्यः ॥'

न पुनरेवं यथा—

'अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकं²ण्ठि माम् ।
कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्तिमुद्धर ॥'

अत्र शृङ्गारप्रतिकूला वर्णाः ।

'बाले मालेयमुच्चैर्न भवति गगनव्यापिनी नीरदानां
किं त्वं पक्ष्मान्तवान्तैर्मलिनयसि मुधा वक्त्रमश्रुप्रवाहैः ।
एषा प्रोद्वृत्तमत्तद्विपकटकषणक्षुण्णवन्ध्योपलाभा
दावाग्नेर्व्योम्नि लग्ना मलिनयति दिशां मण्डलं धूमलेखा ॥'

अत्र दीर्घसमासः परुषरचना च विप्रलम्भशृङ्गारे विरुद्धा ।

ओजसो लक्षणमाह—

**दीप्तिहेतुरोजो वीरबीभत्सरौद्रेषु क्रमेणाधिकम् ।**

दीप्तिरु³ज्ज्वलिता । चित्तस्य विस्तार इति यावत् । क्रमेणेति वीराद्बीभत्से ततोऽपि रौद्रे । तेषामङ्गेऽद्भुते च सातिशयमोजः ।

एतद्व्यञ्जकानाह—

**आद्यतृतीयाक्रान्तौ द्वितीयतुर्यौ युक्तो रेफस्तुल्यश्च टवर्गशषा वृत्तिदैर्घ्यमुद्धतो गुम्फश्चात्र ।**

---

**अङ्गानीति** । यद्यपि हास्याद्भुतयोर्विकासहेतुतया ओजोऽप्यस्ति । तथापि शृङ्गाराङ्गतया माधुर्यमेव प्रकृष्टं प्रतीयत इत्यर्थः ॥ **न पुनरेवमिति** । अयं भावः—यथान्यैः प्रतिकूलवर्णलक्षणो दोष उक्तस्तथा न वाच्य एतद्गुणविपर्ययेणैव स्वीकृतत्वात् ॥ **वर्णा इति** । समासरचनयोरुपलक्षणमिदम् । माधुर्यौजः-

---

१. 'दारण' इति भवेत्. २. 'कण्ठिनाम्'. इति वाग्भट्टकाव्यानुशासने. ३. 'रुज्ज्वलता' इति भवेत्.

आद्येन द्वितीयस्तृतीयेन चतुर्थ आक्रान्तो वर्णस्तथाध उपरि उभयत्र वा येनकेनचित्संयुक्तो रेफस्तुल्यश्च वर्णो वर्णेन युक्तस्तथा टवर्गोऽर्थात् णकारवर्जः, शषौ च, दीर्घसमासः, कठोरा रचना च । अत्र ओजसि । ओजसो व्यञ्जिकेत्यर्थः । यथा—

'मूर्ध्नामुद्वृत्तकृत्ताविरलगलगलद्रक्तसंसक्तधारा-
धौतेशाङ्घ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम् ।
कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणां
दोष्णां चैषां किमेतत्फलमिह नगरीरक्षणे यत्प्रयासः ॥'

न पुनरेवं यथा—

'देशः सोऽयमरातिशोणितजलैर्यस्मिन्ह्रदाः पूरिताः
क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहः ।
तान्येवाहितशस्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति नो
यद्रामेण कृतं तदेव कुरुते द्रोणात्मजः क्रोधनः ॥'

अत्र यथोक्तवर्णाभावोऽनुद्धता रचना असमासश्च विरुद्धः ।

अथ प्रसादलक्षणमाह—

**विकासहेतुः प्रसादः सर्वत्र ।**

विकासः शुष्केन्धनाग्निवत्स्वच्छजलवच्च सहसैव चेतसो व्याप्तिः । सर्वत्रेति सर्वेषु रसेषु ।

एतद्व्यञ्जकानाह—

**इह श्रुतिमात्रेणार्थप्रत्यायका वर्णवृत्तिगुम्फाः ।**

श्रुत्यैवार्थप्रतीतिहेतवो वर्णसमासरचनाः । इह प्रसादे । प्रसादस्य व्यञ्जका इत्यर्थः । यथा—

---

प्रसादव्यञ्जकेषु च वर्णादिष्वभिहितेषु वृत्तयो रीतयश्चाभिहिताः, एतदव्यतिरि-

'दातारो यदि कल्पशाखिभिरलं, यद्यर्थिनः किं तृणैः,
सन्तश्चेदमृतेन किं, यदि खलास्तत्कालकूटेन किम् ।
किं कर्पूरशलाकया यदि दृशोः पन्थानमेति प्रिया
संसारेऽपि सतीन्द्रजालमपरं यद्यस्ति तेनापि किम् ॥'

माधुर्यौजःप्रसादव्यञ्जकाश्च वर्णा उपनागरिका परुषा कोमला च वृत्तिराचक्षते ।

वैदर्भी गौडीया पाञ्चाली चेति रीतय इत्यन्ये ।

यदाह—

'माधुर्यव्यञ्जकैर्वर्णैरुपनागरिके[1]ष्यते ।
ओजःप्रकाशकैस्तैस्तु परुषा, कोमला परैः ।
केषांचिदेता वैदर्भीप्रमुखा रीतयो मताः ॥'

यद्यपि गुणेषु नियता वर्णादयस्तथापि—

**वक्तृवाच्यप्रबन्धौचित्याद्वर्णादीनामन्यथात्वमपि ।**

तत्र वाच्यप्रबन्धानपेक्षया वक्त्रा[2]द्यौचित्यादेव वर्णादयो यथा—

'मन्थायस्तार्णवाम्भःप्रति[3]कुहरचलन्मन्दरध्वानधीरः,
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः[4] ।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः,
केनास्मि[5]न्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽयम् ॥'

---

क्तस्वरूपत्वात्तासाम् ॥ अ[1]वेति । यदि हि क्रोधादिव्यञ्जकं वाच्यं भवेत्तत उपपद्येरन्नुद्धता रचनादयः । न चैतदभिनेयार्थं, येन स्वेच्छाप्यनुमन्येत रचनादी-

---

१. 'कोच्यते' का० प्रका०. २. 'वक्त्रौचित्या' का० प्रका०. ३. 'प्लुतिकु' इत्याधुनिककाव्यप्र०. ४. 'चण्डः' इति भवेत्. ५. 'स्मिंसिंह' इति प्रकाशे.

---

१. 'अत्रेति' स्यात्.

अत्र यद्यपि वक्तृवाच्यं क्रोधादिव्यञ्जकम्, काव्यं चाभिनेयार्थम् । तथापि भीमसेनस्य वक्तुरौचित्यादुद्धता वर्णादयः ।

क्वचिद्वक्तृप्रबन्धानपेक्षया वाच्यौचित्यादेव । यथा—

'प्रौढच्छेदानुरूपोच्छलनरयभवत्सैंहिकेयोपघात-
त्रासाकृष्टाश्व तिर्यग्वलितरविरथेनारुणेनेक्ष्यमाणम् ।
कुर्वत्काकुत्स्थवीर्यस्तुतिमिव मरुतां कन्धरारन्ध्रभाजां
भाङ्कारैर्भीममेतन्निपतति वियतः कुम्भकर्णोत्तमाङ्गम् ॥'

क्वचिद्वक्तृवाच्यानपेक्षाः प्रबन्धोचिता एव । यथा आख्यायिकायां शृङ्गारेऽपि न मसृणा वर्णादयः । कथायां रौद्रेऽपि नात्यन्तमुद्धताः । नाटकादौ रौद्रेऽपि न दीर्घसमासादयः । एवमन्यदप्यौचित्यमनुसर्तव्यम् ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायामलंकारचूडामणिसंज्ञस्वोपज्ञकाव्यानुशासन-
वृत्तौ गुणविवेचनश्चतुर्थोऽध्यायः ।

---

नाम् । किं त्वभिनेयार्थमिदम् । न च तत्र रौद्रादावप्युद्धता रचनादय उपपन्नाः । अतो वक्त्रौचित्यादेव रचनादीनामप्यन्यथात्वमत्रेत्यर्थः ॥ **न मसृणा इति** । गद्यस्य विकटनिबन्धाश्रयेण छायावत्त्वात् ॥ **नाटकादौ रौद्रेऽपीति** । न केवलं करुणविप्रलम्भयोः । रौद्रेऽपि न दीर्घसमासादयो निबन्धनीयाः ॥ कथमिति चेत्, उच्यते—रसो यदा प्राधान्येन प्रतिपाद्यस्तदा तत्प्रतिपत्तौ व्यवधायिका विरोधिनश्च सर्वात्मनैव परिहार्याः । एवं च दीर्घसमासः । समासानामनेकप्रकारसंभावनया रसप्रतीतिं कदाचिद्व्यवदधातीति तस्मिन्नात्यन्तमभिनिवेशः शोभते विशेषतोऽभिनेयार्थे काव्ये । तत्रापि करुणविप्रलम्भयोः । तयोर्हि सुकुमारत्वात् स्वल्पायामप्यस्वच्छतायां शब्दार्थयोः प्रतीतिर्मन्थरीभवति । रसान्तरे पुनः प्रतिपाद्यो रौद्रादौ मध्यमसमासोऽपि । कदाचिद्धीरोद्धतनायकसंबद्धव्यापाराश्रयेण दीर्घसमासोऽपि वा तदाक्षेपाविनाभावि रसोचितवाच्यापेक्षया

---

१. 'हि' का० प्रका०. २. 'इति' का० प्रका०. ३. 'एव ते । तथाहि' का० प्रका०. ४. 'मसृणव' का० प्रका०.

पञ्चमोऽध्यायः ।

'शब्दार्थौ सालंकारौ काव्यम्' इत्युक्तम् । तत्रालंकाराणां 'अङ्गाश्रिता अलंकाराः' इति सामान्यलक्षणमुक्तम् । अथ विशेषलक्षणस्यावसरः । तत्रापि शब्दालंकाराणां षण्णां तावदाह—

---

न विगुणो भवतीति । सोऽपि नात्यन्तपरिहार्यः । सर्वत्र प्रसादाख्यो गुणो व्यापी । स हि सर्वरससाधारण इत्युक्तम् । प्रसादातिक्रमे हि असमासोऽपि करुणविप्रलम्भशृङ्गारौ न व्यनक्ति । तदपरित्यागे मध्यमसमासोऽपि न प्रकाशयति । तस्मात्सर्वत्र प्रसादोऽनुसर्तव्यः । अत एव च—'यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदात्पाण्डवीनां चमूनां यो यः पञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा । यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपं क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम् ॥' इत्यादौ प्रसादाख्य एव गुणो न माधुर्यं नाप्योजः समासाभावात् । न चाचारुत्वमभिप्रेतरसप्रकाशनात् । **एवमन्यदपीति** । मुक्तकेषु रसबन्धाश्रयेण न दीर्घसमासरचना । अन्यथा तु कामचारः । संदानितकादिषु विकटनिबन्धौचित्यान्मध्यमसमासादीर्घसमासे एव रचने । प्रबन्धाश्रितेषु तु मुक्तकादिषु यथोक्तप्रबन्धविशेषौचित्यमेवानुसर्तव्यम् । पर्यायबन्धेषु पुनरसमासामध्यमसमासे एव । कदाचिद्रौद्रादिविषये दीर्घसमासायामपि संघटनायां परुषा ग्राम्या च वृत्तिः परिहर्तव्या । परिकथायां कामचारः । तत्रेतिवृत्तमात्रोपन्यासेनात्यन्तं रसबन्धा(?)भिनिवे[1]शते । खण्डकथासकलकथयोस्तु प्राकृतसिद्धयोः कुलकादिनिबन्धनभूयस्त्वाद्दीर्घसमास······योरपि न विरोधः । वृत्तौचित्यं च यथारसमनुसर्तव्यम् । सर्गबन्धे तु रसतात्पर्ये यथारसमौचित्यम् । अन्यथा तु कामचारः । द्वयोरपि मार्गयोः सर्गबन्धविधायिनां दर्शनाद्रसतात्पर्यं साधीय इति ॥

इत्याचार्यश्रीहेमचन्द्रविरचिते विवेके चतुर्थोऽध्यायः ।

---

१. 'षट्' टीकासंमतः.

१. 'निविशते' इति स्यात्.

**व्यञ्जनस्यावृत्तिरनुप्रासः ।**

व्यञ्जनस्येति जातावेकवचनम् । तेनैकस्यानेकस्य वा व्यञ्जनस्यावृत्तिः । पुनःपुनर्निबन्धो रसाद्यनुगतः प्रकृष्टोऽदूरान्तरितो न्यासोऽनुप्रासः । तत्रैकस्य सकृदावृत्तौ न किंचिद्वैचित्र्यमर्थादसकृदावृत्तिर्लभ्यते । अनेकस्य तु सकृदसकृच्च ।

तत्रैकस्यासकृदावृत्तिर्यथा—

'अनङ्गरङ्गप्रतिमं तदङ्गं भङ्गीभिरङ्गीकृतमानताङ्ग्याः ।
कुर्वन्ति यूनां सहसा यथैताः स्वान्तानि शान्तापरचिन्तनानि ॥'

अनेकस्य सकृदावृत्तिर्यथा—

'ततोऽरुणपरिस्पन्दमन्दीकृतवपुः शशी ।
दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम् ॥'

रुरिन्दन्दीत्यादेरनेकस्य सकृदावृत्तिः ।

यथा वा—

'नितम्बगुर्वी गुरुणा प्रयुक्ता वधूर्विधातृप्रतिमेन तेन ।
चकार सा मत्तचकोरनेत्रा लज्जावती लाजविसर्गमग्नौ ॥'

अत्र द्वयोर्द्वयोस्त्रयाणां त्रयाणां च व्यञ्जनानां सकृदावृत्तिः ।

यथा वा—'धूसरितसरिति–' इति ।

अनेकस्यासकृदावृत्तिर्यथा—

'सर्वाशारुधि दग्धवीरुधि सदा सारङ्गबद्धक्रुधि
क्षामक्ष्मारुहि मन्दमुन्मधुलिहि स्वच्छन्दकुन्दद्रुहि ।
शुष्यत्स्रोतसि तप्तभूरिरजसि ज्वालायमानाम्भसि
ग्रीष्मे मासि ततार्कतेजसि कथं पान्थ व्रजञ्जीवसि ॥'

अत्र रुधीत्यादेः ।

**तात्पर्यमात्रभेदिनो नाम्नः पदस्य वा लाटानाम् ।**

शब्दार्थयोरभेदेऽपि अन्वयमात्रभेदिनो नाम्नः पदस्य वा एकस्यानेकस्य वा सकृदसकृच्चावृत्तिर्लाटानां संबन्धिनी लाटजनवल्लभोऽनुप्रासः।

तत्रैकस्य नाम्नः सकृदावृत्तिर्यथा—

'स एष भुवनत्रयप्रथितसंयमः शंकरो
बिभर्ति वपुषाधुना विरहकातरः कामिनीम् ।
अनेन किल निर्जिता वयमिति प्रियायाः करं
करेण परिताडयञ्जयति जातहासः स्मरः ॥'

अत्र करेति नाम्नः ।

असकृद्यथा—

'दशरश्मिशतोपमद्युतिं यशसा दिक्षु दशस्वपि श्रुतम् ।
दशपूर्वरथं यमाख्यया दशकण्ठारिगुरुं विदुर्बुधाः ॥'

अत्र दशेति नाम्नः ।

अनेकस्य सकृद्यथा—'जयति क्षुण्णतिमिरः—' इति ।

असकृद्यथा—

'वस्त्रायन्ते नदीनां सितकुसुमधराः शक्रसंकाशकाशाः
काशाभा भान्ति तासां नवपुलिनगताः स्त्रीनदीहंसहंसाः ।
हंसाभाम्भोदमुक्तस्फुरदमलवपुर्मेदिनीचन्द्रचन्द्र-
श्चन्द्राङ्कः शारदस्ते जयकृदुपनतो विद्विषां कालकालः ॥'

पदस्यैकस्य सकृद्यथा—

'वदनं वरवर्णिन्यास्तस्याः सत्यं सुधाकरः ।
सुधाकरः क्व नु पुनः कलङ्कविकलो भवेत् ॥'

'न भवति भवति च न चिरं भवति चिरं चेत्फले विसंवदति ।
कोपः सत्पुरुषाणां तुल्यः स्नेहेन नीचानाम् ॥'

अनेकस्य सकृद्यथा—

'यस्य न सविधे दयिता, दवदहनस्तुहिनदीधितिस्तस्य।
यस्य च सविधे दयिता, दवदहनस्तुहिनधितिस्तस्य॥'

असकृद्यथा—

'किंचिद्वच्मि न वच्मि वच्मि यदि वा किं वच्मि वच्मीदृशं
दृश्यन्ते न भवादृशेषु पतिषु स्वेषामदोषे दमाः।
ते किं सन्ति न सन्ति सन्ति यदि वा के सन्ति सन्तीदृशाः
सर्वस्तेऽद्य गुणैर्गृहीतहृदयो लोकः कृतो वर्तते॥'

## सत्यर्थेऽन्यार्थानां वर्णानां श्रुतिक्रमैक्ये यमकम्।

आवृत्तिरिति वर्तते। सत्यर्थे भिन्नार्थानां वर्णानां स्वरसहितव्यञ्जनानामुपलक्षणाच्च वर्णस्य वर्णयोश्चावृत्तिः श्रुत्यैक्ये क्रमैक्ये च यमौ द्वौ समजातौ तत्प्रतिकृतिर्यमकम्। तेनैकस्याक्षरस्य द्वयोर्बहूनां चाद्वितीयं सदृशं निरन्तरं सान्तरं वा शोभाजनकमलंकारः। 'मधुपराजिपराजितमानिनी—' इत्यादावुभयेषामनर्थकत्वे 'स्फुटपरागपरागतपङ्कजम्—' इत्यादावेवैषामर्थवत्त्वेऽन्येषामनर्थकत्वेऽन्यार्थानामिति न युज्यते

---

षडिति। अनुप्रासयमकचित्रश्लेषवक्रोक्तिपुनरुक्ताभासान्॥ **यस्य न सविधे इति।** अत्र पूर्वार्धे दवदहनत्वं विधेयं तुहिनदीधितित्वं चानुवाद्यम्। तदुभयमप्युत्तरार्धे विपरीतं ज्ञेयमिति॥ **किंचिद्वच्मीति।** भवादृशेषु पतिषु सत्सु स्वेषामात्मीयानामदोषेदमादोषं विना सर्वस्वापहारिणः केऽपि न दृश्यन्ते केवलं त्वदीया एव गुणा ईदृशाः सन्ति। एतदेव सवितर्कमाह—**ते किं सन्तीति।** हृदयं हि सर्वस्य सर्वभूतमेवेति॥ **वर्णस्येति।** वर्णस्य पादान्तरगतत्वेनावृत्तिर्न वैचित्र्यमादधातीति तस्मिन्नेव पादे आवृत्त्यन्तरविचित्रायां नैरन्तर्येणावृत्तौ यमकता ज्ञेया। यथा—'नानाकारेण कान्तभ्रूराराधितमनोभुवा। विविक्तेन विलासेन ततक्ष हृदयं नृणाम्॥' मध्यान्तयोरपि—'उदाररचनारोचिर्भासुरा राजते

वक्तुमिति **सत्यर्थ** इत्युक्तम् । न च तदर्थस्यैव शब्दस्य पुनः शक्यमुच्चारणम्, पौनरुक्त्यप्रसक्तेः इति सामर्थ्यलब्धेऽपि भिन्नार्थत्वे यत्र स एवार्थः प्रसङ्गेन पुनः प्रतिपिपादयिषितो भवति बन्धुबन्धुरत्वादिना च प्रयुक्त एव शब्दः पुनः प्रयुज्यते 'उदेति सविता ताम्रस्ताम्र एवास्तमेति च' इत्यादौ तत्र पौनरुक्त्यदोषाभावात् यमकत्वं केन निवार्यतेत्यन्यार्था**नामित्युपात्तम्** । श्रुत्यैक्यग्रहणं लोकप्रतीतितुल्यत्वपरिग्रहार्थम् । तेन दन्त्यौष्ठ्यौष्ठ्यवकारबकारादिवर्णभेदे, लघुप्रयत्नतरालघुप्रयत्नतरकृते च भेदे, संयोगस्थयोः सजातीययोर्व्यञ्जनयोर्वास्तवे विशेषे यमकबन्धो न निरुध्यते । यथा—

'तस्यारिजातं नृपतेरपश्यदवलम्बनम् ।
ययौ निर्झरसंभोगैरपश्यदबलं वनम् ॥'

अवलम्बनं पार्ष्णिग्रहाक्रन्दासारादि । प्रपातपानीयास्वादैः पानीयानि तनूकुर्वत् अबलं सैन्यरहितम् । वनं काननम् । अत्रैकत्र—बवौ दन्त्यौ-

---

कथा । अकलङ्कयश······मिन्दुमौले मतिं मम ॥' यथा वा—'विविधधववना नागगर्धर्धनाना विविततगगनानामभज्जनाना शशरुरुललना नावबन्धुं धुनाना मम हि हिततनानाननस्वस्वनाना ॥' विविधानि धववनानि यस्याम् । नागान् हस्तिनो गृध्यन्ति अभिलषन्ति ऋद्धाश्चतुरा महान्तो वा नानाप्रकारा ये वयः पक्षिणो व्याडादयस्तैर्व्याप्तं गगनं यस्याम् । अविद्यमानो नामो नमनं यत्र तथाभूतं कृत्वा मज्जन्तो जना यत्र । अनितीत्यना संस्फुरेति यावत् । स्त्रीरूपिणी वा । शशानां रुरूणां च ललनं यस्याम् । नौ आवयोः । अबन्धुं शत्रुं धुनाना । मम यस्माद्धितं तनोति । अमुख आत्मीयः स्वन एव आनः प्राणा यस्याः । सैवं समुद्रभूर्हरिणा हलधरं प्रत्यभिधीयत ॥ वर्णयोर्यथा—भ्रमर द्रुमपुष्पाणि भ्रम प्रीत्यै पिबन्मधु । का कुन्दकुसुमे प्रीतिः काकुं हत्वा विरौषि यत् ॥' तस्मिन्नेव पादे यथा—'हन्त हन्तररातीनां धीर धीरर्धिता तव । कामं कामन्दके-

ष्ठ्यौष्ठ्यौ, अपरत्र—ओष्ठ्यदन्त्यौष्ठ्यौ। अपश्यदित्यत्रैकः शकारः, अपरत्र द्वौ। तथा—

'भवानि ये निरन्तरं तव प्रणामलालसाः।
मनस्तमोमलालसा भवन्ति नैव ते क्वचित्॥'

चित्तमोहमलेन जडाः। अत्र लालसेति प्रथमलकारोऽलघुप्रयत्नतरः। मलालसेत्यत्र लघुप्रयत्नतरः।

तथा नकार-णकारयोरस्वरमकार-नकारयोर्विसर्जनीयस्य[1] भावाभावयोरपि न विरोध इति केचित्। यथा—

'वेगं हे तुरगाणां जयन्नसावेति भङ्गं[2] हेतुरगानाम्।'

'पातयाशु रथं धीर समीरसमरंहसम्।
द्विषतां जहि निःशेषं पृतनाः समरं हसन्॥'

'द्विषतां मूलमुच्छेत्तुं राजवंशादजायथाः।
द्विषद्व्यस्त्रस्यति कथं वृकयूथादजा यथा॥'

क्रमैक्यग्रहणात्सरो रस इत्यादौ

'प्रवणः प्रणवो यत्र प्रथमः प्रमथेषु यः।
रणवान्वारणमुखः स वः पातु विनायकः॥'

इत्यादौ च यमकत्वं मा भूत्॥

**तत्पादे भागे वा।**

तद्यमकं पादे तस्य च भागे भवति। तत्र पादजं पञ्चदशधा। तथा हि—प्रथमो द्वितीयादावावर्तते। द्वितीयस्तृतीयादौ। तृतीयश्चतुर्थ

१. अत्र विसर्जनीयपदम् 'यमकश्लेषचित्रेषु बवयोर्डलयोर्न भिद्। नानुस्वारविसर्गौ च चित्रभङ्गाय संमतौ॥' इति वाग्भटालंकारीयश्लोकोत्तरार्धस्थचित्रपदस्य यमकाद्युपलक्षणत्वं सूचयन्ननुस्वारपदमप्यत्र सारयति. २. 'भङ्गहेतु' स्यात्.

इति षट्। प्रथमो द्वितीयतृतीययोः द्वितीयचतुर्थयोः, तृतीयचतुर्थयोः, द्वितीयस्तृतीयचतुर्थयोरिति चत्वारः। प्रथमस्त्रिष्वपीत्येकः। प्रथमो द्वितीये। तृतीयश्चतुर्थे इति। प्रथमश्चतुर्थे द्वितीयस्तृतीय इति द्वौ। अर्धा वृत्तिः श्लोकावृत्तिश्चेति। द्वे इति। यथा—

'चक्रं दहतारं चक्रन्द हतारम्।
खड्गेन तवाजौ राजन्नरिनारी॥'

कश्चिद्राजानमाह[1]—समूहम्। घ्नता। अरिसंबन्धि। रुरोद। भग्नाशा अत्यर्थम्॥

'संयतं याचमानेन यस्याः प्रापि द्विषा वधः।
संयतं या च मानेन युनक्ति प्रणताञ्जनम्[2]॥'

रणम्। देव्याः। जितेन्द्रियम्। पूजया ज्ञानेन वा॥

'प्रभावतोऽनाम न वासवस्य प्रभावतो नाम नवासवस्य।
प्रभावतो नाम नवा सवस्य विच्छित्तिरासीत्त्वयि विष्टपस्य॥'

प्रभावात्। शक्रस्य। तेजस्विनः। नामः नमतेः कारकः। अनाम नमनरहितः। अतश्च विष्टपस्य प्रभौ स्वामिनि त्वयि नवसोमरसस्य सवस्य यज्ञस्य नवा विच्छित्तिरासीत्। नवेत्येक एव निपातः प्रतिषेधार्थः। नामेत्यभ्युपगमे निपातः। इत्यादि॥

अर्धावृत्तिर्यथा—

'सा रक्षतादपारा ते रसक्तद्वौर बाधिका।
सारक्षतादपारातेरसक्तद्वौरवाधिका॥'

---

१. 'कश्चिन्नृपमाह—हे राजन्, तव संबन्धिना खड्गेनाजौ रणे आरं रिपुसंबन्धि चक्रं समूहं अरं शीघ्रं दहता घ्नता अरिनारी रिपुस्त्री हता भर्तृवधेन ताडिवा सती चक्रन्द क्रन्दितवतीत्यर्थः' इति रुद्रटालंकारव्याख्या. २. 'प्रणतं जनम्' स्यात्.

सा देवी । त्रायताम् । अनन्ता । तव । रागकृदभिमतं वस्त्वित्यर्थः । वाग्रूपा । पालिनी । उत्कृष्टक्षतेः । अपगतविपक्षात् । अविरतम् । गौरवेणाधिका सर्वेषां गुरुरित्यर्थः ॥

श्लोकावृत्तिर्यथा—

'स त्वारं भरतो वश्यमबलं विततारवम् ।
सर्वदा रणमानैषीदवानलसमस्थितः ॥
सत्त्वारम्भरतोऽवश्यमवलम्बिततारवम् ।
सर्वदारणमानैषी दवानलसमस्थितः ॥'

महापुरुषः पुनः । शत्रुसमूहम् । भरात् । वशे वर्तमानम् । बलरहितम् । दीर्घाक्रन्दम् । सर्वकालम् । संग्रामम् । प्रापयामास । अवानलसम्[1] अपि तु त्वरितं गच्छन् । अस्थीनि तस्यात्युपक्षिणोति । सत्त्वेन ये ते आरम्भास्तेषु रतः । सर्वथा आश्रितं तरुत्वग्वसनं येन शत्रुसमूहेन । सर्वेषां दारणे यो मानस्तमिच्छति । दवाग्निना समं स्थितं यस्य ॥

तथा भागजस्य द्विधा विभक्ते पादे प्रथमपादादिभागः पूर्ववद्वितीयादिपादादिभागेषु, अन्तभागोऽन्तभागेष्वित्यष्टाविंशतिर्भेदाः । श्लोकान्तरे हि न भागावृत्तिः संभवति । तद्यथा—

'सरस्वति पदं चित्तसरस्वति विधेहि मे ।
त्वां विना न हि शोभन्ते नराः काया इवासुभिः ॥'

---

नींतिरस्या रस्या दिवानिशम् ॥' इति ॥ **चित्तसरस्वतीति** । चित्तसमुद्रे ॥

---

१. रुद्रटालंकारव्याख्यायां तु—'अवान् अगच्छन् । कम् । अलसं निष्क्रियं जनम्' इत्येवमुपलभ्यते.

'करेण ते रणेष्वन्तःकरेण द्विषतां हताः।
करेणवः क्षरद्रक्ता भान्ति संध्याघना इव ॥'
'परागतरुराजीव वातैर्ध्वस्ता भटैश्चमूः।
परागतमिव क्वापि परागततमम्बरम् ॥'
'पातु वो भगवान्विष्णुः सदा नवघनद्युतिः।
स दानवकुलध्वंसी सदानवरदन्तिहा ॥'
'भवानि शं विधेहि मे भवानिशं कृपापरा।
उपासनानि यज्जनोऽभवानि शंसति त्वयि ॥'
'पदद्वयं कपालिनः पुनातु लोकपालिनः।
अलीयते नतो हरिः स यत्र पङ्कजप्रभे ॥'

एवमन्यान्यप्युदाहार्याणि ॥

त्रिधाविभक्ते द्वाचत्वारिंशत्। चतुर्धाविभक्ते षट्पञ्चाशत्। प्रथम-

---

**अन्तःकरेणेति**। द्विषतामन्तविधायिना ॥ **परागतेति**। परा प्रतिपक्षभूता पर्वते तरुपङ्क्तिरिव। अत्र च व्यतिकारपरागेण रणरेणुना व्याप्तं गगनं परागतमिव न जाने क्व गतमित्यर्थः ॥ **सदेति**। सर्वदा। स इति विष्णुः। समदस्य कुवलयापीडाख्यस्य वरदन्तिनो हन्ता ॥ **भवानीति**। हे गौरि, शं सुखम्। अनिशमनवरतम्। न विद्यते जन्म येभ्यस्तान्यभवानि ॥ तत्र पादद्वयगतत्वेन **'सरस्वति-'** इत्याद्युदाहरणमेकमेव प्रदर्शितम्। पादत्रयगतत्वेन च यमकं केषांचिन्नाभिमतमिति, लक्ष्यव्याप्तिदर्शनाय **'करेण-'** इत्याद्युदाहरणचतुष्टयं दर्शितम्। एषु च प्रथमपादादिभागस्य द्वितीयपादादिभागेष्वावृत्तिर्दर्शिता। पादान्त्यभागस्य द्वितीयपादान्त्यभागेनावृत्तिप्रदर्शनार्थं तु पदद्वयमित्याद्युदाहृतम् ॥ **अन्यान्यपीति**। तत्रोदाहृतशेषाण्याद्यभागजानि यथा—'सरस्वति यथा

१. 'अन्तकरेण' इति स्यात्.

---

१. 'अन्तकरेणेति' स्यात्.

पादादिगतान्त्यार्धादिभागे द्वितीयपादादिगताद्यार्धादिभागे यम्यन्त इत्याद्यन्वर्थतानुसरणेनानेकभेदमन्तादिकम् । अन्तादिकमाद्यन्तकं तत्समुच्चयः । मध्यादिकमादिमध्यमन्तमध्यं मध्यान्तकं तेषां समुच्चयाः ।

---

रत्नान्यनन्तानि स्फुरन्ति हि । सरस्वति तथा चित्ते शब्दार्थाः संस्फुरन्तु मे ॥', 'परमा या समृद्धिः स्यात्सुखदुःखविवर्जिता । तस्या हेतुं नमामीशं परमायाविनाशनम् ॥', 'योगिगम्यं गुणातीतं मधुकेतुं विभुं हरिम् । मधु केतुं नमाम्याद्यं दृप्तदैत्यविनाशनम् ॥' मधोः केतुरिव । मधु ब्रह्म केतुं ज्ञातुम् । कि 'कित ज्ञाने' इत्यस्य ॥ 'प्रणमामि सुरारिघ्नं शिवं सोमं भवान्तकम् । यो बिभर्ति विपन्नेषु शिवं सोमं च मूर्धनि ॥' सह उमया ॥ 'सुरासुरशिरोरत्नघृष्टपादनखांशवे । शंकराय नमस्तस्मै शंकराय जगत्त्रये ॥' सुखकराय ॥ 'पयोधरारवाः खराः पयोधरा जवान्विताः । पयोधरान्सरन्त्यतो पयोधरान्वियोगिनः ॥' जलधारी आरवो येषाम् । दुःसहाः मेघाः । कुचान् । असंजातस्तन्यात् । 'माधवाय नमस्तस्मै धेनुकान्तविधायिने । धेनुकान्तवृषस्थायोमाधवाय नमोऽस्तु ते ॥' धेनुको नाम खररूपधारी विष्णुविघाताय कंसप्रयुक्तो दैत्यः । गोवल्लभवृषभासीनायै ॥ 'जगदेकगुरुर्यो हि जगदे कमलोद्भवा । भवतः प्रातु देवोऽसौ भवतः पार्वतीप्रियः ॥' जगदेकगुरुरिति ब्रह्मणा यः कथितः । युष्मान् । संसारात् ॥ 'देवि त्वा ये गिराजस्रं सत्यसंधेत्युपासते । देवि[१] त्वा ये भजन्ते ते सत्यसंधेयसंपदाम् ॥' एतानि वृत्त्युदाहरणपञ्चकेन सहाद्यभागजानि चतुर्दश । एवमन्यभागजान्यप्युदाहरणीयानि । **अन्तादिकमिति** । दिङ्मात्रम् । यथा—'नारीणामलसं नाभि लसन्नाभि कदम्बकम् । परमास्त्रमनङ्गस्य कस्य नो रमयेन्मनः ॥' अलसं क्रियासु सविलासम् । न अभि अपि लभयम् ॥ आद्यन्तकं यथा—'पिनाकिने नमस्त्रातदैत्यभीवेपिनाकिने । नीलकण्ठमपीक्षन्ते योगिनो हंसमेव यम् ॥' भीवेपिनो भयकम्प्राः ॥ **तत्समुच्चय इति** । आद्य-

---

१. 'देवि' इत्यस्यामन्त्रितत्वेनाविद्यमानवत्त्वेन त्वादेशाप्राप्त्या 'त्वां' इति पाठेऽपि यमकनिर्वाहः, विसर्जनीयस्येवानुस्वारस्यापि यमकाविरोधित्वात्; यद्वा परसवर्णे कृते त्र्यक्षरमेव यमकं स्यात्.

तथा तस्मिन्नेव पादे आद्यादिभागानां मध्यादिभागेष्वनियतेऽवस्थाने

---

न्तकान्तादिक्रियोर्योगः । यथा—'ससार साकं दर्पेण कन्दर्पेण ससार सा । शरं नवाना बिभ्राणा नाविभ्राणा शरन्नवा ॥' प्रववृते । सार्धम् । दर्पेण कामेन च । लक्ष्मणाख्यपक्षियुक्ता । काण्डम् । नूतनशकटा । धारयन्ती । [1].................... अपि तु पक्षिशब्दयुक्ता । ऋतुविशेषः । नूतना ॥ एवं मध्यादिक आदिमध्यः अन्तमध्यमध्यान्तकतत्समुच्चयतोऽत्रोदाहरणानि अभ्यूह्यानि । मध्यादिकादयो भेदाः संभविनोऽपि न हृद्या इति नोदाह्रियन्ते इति केचित् ॥ **तस्मिन्नेव पादे इति** । न तु पादान्तरे । तत्रादिभागस्य मध्यभागेनावृत्ति-र्यथा—'स रणे सरणेन नृपो बलितावलितारिजनः । पदमाप [2]दमानमतेरुचितं रुचितं...च निजम् ॥' [3]समं ग्रामे । प्रयाणेन हेतुना । बलवत्त्वेन वेष्टितारिजनः । पदं राज्यलक्षणम् । उपशमाद्धेतोः । अनुरूपमभीष्टं च ॥ आदिभागस्यान्तभागेन यथा—'घनाघ नायं न नभा घनाघनानुदीरयन्नेति मनोऽनुदारयन् । सखेऽदयं तामविलास खेदयन्नहीयसे गोरथवा न हीयसे ॥' एतत्पथिकस्य प्रावृषि सुहृदो-च्यते—बहुपाप । श्रावणो मासो वार्षुकमेघान्विस्तारयन्न नायमेति । मनोऽर्था-द्विरहिणाम् । पश्चात् स्फोटयन् । तां कान्ताम् । निर्लील । उद्वेजयन् । सर्पवदा-चरसि । यद्वा कियत्तवैतद्बलीवर्दाद्न्यूनो न भवति ॥ मध्यस्यान्तेन यथा—'असतामहितो महितो युधि सारतया रतया । स तयोरुरुचे रुरुचे परमेभवते भवते ॥' अननुकूलः । अत एव पूजितः । उत्कृष्टतया बलवत्तया वा । तदेक-सूक्तया स कश्चिद्वीरः । [4]प्रसिद्धतया । विस्तीर्णकान्तये । प्रीतिमुत्पादितवान् । प्रकृष्टगजयुक्ताय । [5]तुल्यम् ॥ आदेर्मध्यान्ताभ्यां यथा—'स्तेनतास्तेनतास्ते नता मानवामा नवा मानवाः । दानवादानवा दानवा वा नरावा नरा वानराः ॥' चिरंतनस्य कस्यचिदनुचरस्य तत्कालीनानामनुजीविनामात्मसमर्पणेन केनचिन्न-रपतिनापमानितस्य तमेव प्रतीयमुक्तिः—हे[6] नरा नृपाश्च । प्रणताः । नूतनाः ।

---

१. 'वीनां पक्षिणां भ्राणो विभ्राणो न विद्यते विभ्राणो यस्यां साविभ्राणा नैवं-विधा । इति रुद्रटालंकारटीकादर्शनेनात्र त्रुटिः प्रतीयते. २. 'दमात्' रुद्रटालंकारे. ३. 'सः । संग्रामे ।' स्यात्. ४. 'प्रसिद्धया' रुद्रटव्याख्याने. ५. 'तुभ्यम्' स्यात्. ६. 'ते' स्यात्.

आवृत्तिरिति प्रभूततमभेदं यमकम् ॥

एतस्य च कविशक्तिख्यापनमात्रफलत्वेन पुरुषार्थोपदेशानुपायत्वात्काव्यगड्डुभूततेति भेदलक्षणं न कृतम्। काव्यं हि महाकवयः सुकुमारमतीनां पुरुषार्थेषु प्रवर्तनाय विरचयन्ति। न च पृथग्यत्ननिर्वर्त्यं यमकादिनिरुद्धरसं तत्तथा सुखोपायः। सरित्पर्वतसागरादिवर्णनमपि वस्तुवृत्त्या रसभङ्गहेतुरेव, किमङ्ग, न कष्टकाव्यम् ॥

तथा च **लोल्लटः**—

'यस्तु सरिदद्रिसागरनगतुरगपुरारिवर्णने यत्नः।
कविशक्तिख्यातिफलो विततधियां नो मतः प्रबन्धेषु ॥
यमकानुलोमतदितरचक्रादिभिंदो[1]ऽतिरसविरोधिन्यः।
[2]अभिमानमात्रमेतद्गड्डरिकादिप्रवाहो वा ॥' इति।

**स्वरव्यञ्जनस्थानगत्याकारनियमच्युतगूढादि चित्रम्।**

स्वरादीनां नियमश्च्युतगूढादिश्च चित्रं सादृश्यादाश्चर्यहेतुत्वाद्वा चित्रम्।

---

पुरुषाः। स्तेनतया चौर्येण क्षिप्तस्वामिलक्ष्मीकाः। दर्पेण प्रतिकूलाः। दानकथायामस्तुतिपराः दानवा एव नृपतयः। इत्यस्य(?) नरो न्यायस्तद्रहिता वानरा एवेति ॥ अनियतस्थाने आवृत्तिर्यथा—'कमलिनीमलिनी दयितं विना न सहते सह तेन निषेविताम्। तमधुना मधुना निहितं हृदि स्मरति सा रतिसारमहर्निशम् ॥' पद्मिनीम्। भ्रमरी। न क्षमते। तां दृष्ट्वा तप्यत इत्यर्थः। सार्धम्। तं प्रियम्। इदानीम् ॥ वसन्तेन। क्रीडाप्रधानम् ॥ **प्रभूततमभेदमिति**। महाकविभिरादृतस्यानियतदेशावयवस्य यमकस्यासंख्यत्वात् इत्यर्थः ॥ **न च पृथग्यत्ननिर्वर्त्येति**। यदाह ध्वनिकारः—'रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो

---

१. 'भिदो हि र' रुद्रटव्याख्याने. २. 'अभिधान' रुद्रटव्याख्याने.

---

१. 'पृथग्यत्न' इति मूले ध्वन्यालोके च.

तत्र **स्वरचित्रं** यथा—

'जय मदनगजदमन वरकलभगतगमन ।
गतजननगदमरण भवभयगनरशरण ॥'

ह्रस्वैकस्वरम् ॥
एवं दीर्घैकस्वरद्वित्र्यादिस्वरनियमे उदाहार्यम् ॥

**व्यञ्जनचित्रं** यथा—

'[1]न नोननुन्नो नुन्नोनो नाना नानानना ननु ।
नुन्नोऽनुन्नो ननुन्नेनो नानेना नुन्ननुन्ननुत् ॥'

---

भवेत् । अपृथग्यत्ननिर्वर्त्यः सोलंकारो ध्वनौ मतः ॥' इति ॥ **दीर्घैकस्वरद्वि-**
मैत्रेनैकवै धैर्यैः स्वै शैरैन्द्रैरैजैरैलैजैनैः
**त्र्यादिस्वरनियमे इति ।** दीर्घैकस्वरनियमे यथा—'वैधैरैनैशैरैन्द्रैरैजैरैलैजैनैः
सैद्धैः । मैत्रैर्नैकैवै धैर्यैः स्वै [2]रौदैः स्वैधै दैवैस्तैस्तैः ॥' विधिर्विरञ्चिः । ईर्लक्ष्मी-
स्तस्या इनो भर्ता विष्णुः । ईशः शिवः । इन्द्रो हरिः । ईजः कन्दर्पः । इला
भूः । जिनोऽर्हन् । सिद्धा देवविशेषाः । मित्रो रविः । [3]रौदो धनदः । देवाः

१. **किरातार्जुनीयस्य** पञ्चदशे सर्गे चतुर्दशस्यास्य श्लोकस्य व्याख्यानावसरे
**मल्लिनाथस्तु**—'नेति । पदच्छेदस्तावत्—न. ना. ऊननुन्नः. नुन्नोनः. ना. अना.
नानाननाः. ननु । नुन्नः. अनुन्नः. ननुन्नेनः. ना. अनेनाः, नुन्ननुन्ननुत् ॥ अथ
योजना—हे नानानना नानाप्रकाराण्याननानि येषां ते । नानाविधास्या इत्यर्थः ।
ऊनेन निकृष्टेन नुन्नो विद्ध ऊननुन्नो यः स ना न पुरुषो न । तथा नुन्न ऊनो
येन स नुन्नोनो ना पुरुषोऽना नन्वपुरुषः खलु । ऊनाद्भीतः पलायमानस्तु किं
वक्तव्यमिति भावः । किंच नुन्न इनः स्वामी यस्य स नुन्नेनः स न भवतीति ननु-
न्नेनः । नञर्थस्य नशब्दस्य 'सुप्सुपा' इति समासः । स नुन्नो विद्धोऽप्यनुन्नोऽविद्ध
एव । यूयमनुन्नस्वामिकत्वादनुन्ना एवेति भावः । तथा नुन्ननुन्ननुदतिशयेन नुन्ना
नुन्ननुन्नास्तान्नुदतीति नुन्ननुन्ननुदतिपीडितपीडको ना पुरुषोऽनेना निर्दोषो न भव-
तीति । किंतु सदोष एवेति । 'नार्तं नातिपरिक्षतम्' इति निषेधादित्यर्थः । अयं तु
नैतादृश इति न पलायितव्यमिति भावः । अयमेकव्यञ्जनः । अन्त्यस्तकारस्तु न
दोषावहः । 'नान्त्यवर्णस्तु भेदकः' इत्यभ्यनुज्ञानात् ॥' इत्येवं स्फुटं व्याख्यातवान्.

---

१. 'पृथग्यत्न' इति मूले ध्वन्यालोके च. २. 'रैदैः' स्यात्. ३. 'रैदो' स्यात्.

रणपराङ्मुखा गणाः कुमारेण जगदिरे इति प्रक्रमः । हे नानानना अनेकरूपवदनाः, स न ना न पुरुषो य ऊनेन हीनेन जितः विजितहीनोऽपि पुरुषोऽपुरुषः । ननु संबोधने । जितोऽप्यजित एव यो न जितप्रभुः । सोऽपि पाप एव, जितं योजितं नुदतीति ॥

एकव्यञ्जनम् ॥

एवं द्वित्र्यादिव्यञ्जननियमे उदाहार्यम् ॥

**स्थानमुरःकण्ठादि । तच्चित्रं** यथा—

'अगा गां गाङ्गकाकाकगाहकाघककाकहा ।
अहाहाङ्कखगाङ्कागकङ्कागखगकाकक: ॥'

कश्चित्पुरुषः स्तूयते—हे गाङ्गकाकाकगाहक गङ्गासंबन्धीषज्जलकुटिलगतिविलोडक, त्वं कुत्सितपापान्येव वायसास्तेषां हन्ता । जिहीतेः क्विपि हानं हाः । न हां गतिं जहाति यत्तथाविधमङ्कं यस्य स खगः सूर्यश्चिह्नं यस्य स गिरिरर्थान्मेरुस्तत्र कङ्काख्याः पर्वतपत्रिणः काककाः शब्दकारिणो यस्य स त्वं पापहा मेरुनिवासिभिः पक्षिभिरपि प्रख्याप्य-

---

सुराः । तेषां संबन्धिभिः तैस्तैः । अनेकैर्धैर्यैः स्वैर्वित्तैश्च वै स्फुटं सुष्ठु । समन्तादेधै समृद्धो भवाम्यहम् ॥ द्विस्वरनियमे यथा—'क्षितिस्थितिमितिक्षिप्तिविधिविन्निधिसिद्धिलिट् । मम त्र्यक्ष नमद्दक्षहरैः स्मरहर स्मर ॥' पृथिव्याः पालनपरिच्छेदैः[1] [2]प्रेरणसृष्टीर्वेत्ति निधिसिद्धीर्लेढि चेति क्विपि संबोधने मां स्मरेति ॥ त्रिस्वरनियमे यथा—'क्षितिवि[3]जितस्थितिविहितिव्रतरतयः परगतयः । उरु रुरुधुर्गुरु दुस्तुवु(?)र्युधि कुरवः स्[4] मरिकुलम् ॥' भूमेर्विजयस्य मर्यादायाश्च विधाने नियमपराः । विस्तीर्णम् । रुद्धवन्तः । दुःसहम् । विक्षिप्तवन्तश्च । युधिष्ठिरादयः ॥ आदिग्रहणाच्चतुःस्वरादिनियमेऽप्यभ्यूह्यम् । **द्वित्र्यादिव्यञ्जननियमे इति** ॥ द्विव्यञ्जननियमे यथा—'भूरिभिर्भारिभिर्भीरा भूभारैरभिरेभिरे । भेरीरे-

---

१.–२. विसर्जनीयो लेखकप्रमादजो भवेत्. ३. 'विजिति' स्यात्. ४. 'स्व' स्यात्

मानकीर्तिर्गामगाः स्वर्गं गतोऽसीत्याशंसायां भूतवन्निर्देशः । कायति अर्थमभिधत्ते इति काकः शब्दः औणादिके । तं करोति इति णिचि तदन्तादके च काककः ॥ कण्ठस्थानम् ।

एवं द्वित्र्यादिस्थाननियमे उदाहार्यम् ।

**गति**र्गतप्रत्यादिका । तच्चित्रं यथा—

'वारणागगभीरा सा साराभीगगणारवा ।
कारितारिवधा सेना नासेधा वरितारिका ॥'

करिगिरिदुर्विगाहा । उत्कृष्टा । अभीगानामप्राप्तभयानां भटसमूहानां जयध्वनिना युक्ता । विहितशत्रुक्षया । स्वार्थे णिग् । अविद्यमान आसेधो यस्याः । मया सह युध्यध्वमिति वरिताः प्रार्थिता अरयो

---

भिभिरभ्रामैरभीरुभिरभिरिभाः ॥' बहुभिः । कङ्कटपताकादिभारयुक्तैः । भयप्रदाः भुवो भारभूतैः । डुढौकिरे । संजग्मिरे इति यावत् । दुन्दुभिवन्नदनशीलैः । मेघश्यामैः । निर्भयैर्गजैः । गजाः ॥ त्रिव्यञ्जननियमे यथा—'देवानां नन्दनो देवो नोदनो देवनिन्दिनः । [2]देवं दुदाव नादेन दाने दानवनन्दिनः ॥' देवो विष्णुः । स्वर्गमुपतापयामास किमित्युपजातशङ्कमकरोत् । नादेन वक्षोस्थिशब्देन । दाने विदारणे । दानवनन्दिनो हिरण्यकशिपोः ॥ आदिग्रहणाच्चतुर्व्यञ्जनादिनियमेऽप्यभ्यूह्यम् ॥ **द्वित्र्यादिस्थाननियम इति** । द्विस्थाननियमे यथा—'अनङ्गलङ्घनालग्ननानातङ्का सदङ्गना । सदानघ सदानन्दिनताङ्गासङ्गसंगत ॥' कंचित्कामिनमन्यास[3]क्तनिजवधूनिमित्तं सानुनयं काचिदाह—हे सततमपाप, सतामानन्दकारिन्, प्रणताङ्गेष्वनुरागयुक्त सा [4]ललना कामाक्रमणविलग्नानेकपीडा वर्तते । तत्तां रक्षेत्यर्थः ॥ दन्तकण्ठलक्षणं स्थानद्वयमत्र ॥ त्रिस्थाननियमे यथा—'अलिनीलालकलतं कं न हन्ति घनस्तनि । आननं नलिनच्छा-

---

१. 'प्रत्यागता' स्यात्.

---

१. 'रिभैरिभाः' स्यात्. २. 'दिवं' स्यात्. ३. 'सक्तं' स्यात्. ४. 'सल्ललना' स्यात्.

यया सा यदूनां सेना। द्विषतां बलं प्रयातेति पूर्वेण संबन्धः। अत्रायुक्पादयोर्गतिः युक्पादयोः प्रत्यागतिरित्यर्धे ते एवेति पादगतप्रत्यागतम्।

---

यनयनं शशिकान्ति ते ॥' अलिवन्नीला अलका एव चञ्चलत्वादिना लता यत्र ॥ दन्ततालुकण्ठलक्षणं स्थानत्रयमत्र ॥ एवं चतुःस्थानादिनियमेऽप्युदाहार्यम् ॥ अर्धगतप्रत्यागतं यथा—'वेदापन्ने स शक्ते रचितनिजरुगुच्छेदयत्नेऽरमेरे देवासक्तेऽमुदक्षो बलदमनयदस्तोदटुर्गासवासे। सेवासर्गादुदस्तोऽदयनमदलवक्षोदमुक्ते सवादे रेमे रत्नेऽयदच्छे गुरुजनितचिरक्लेशसन्नेऽपदावे ॥' स कश्चित्कस्मिंश्चिद्रत्ने रत्नभूते पुरुषे रेमे निर्वृतोऽभवत्। वेदापन्ने। प्रियंवदे। कृतः सहजाया अविद्याख्यरुज उच्छेदयत्नो येन। न रमन्ते सुजनेषु धर्मे चेत्यमरान् दुर्जनानीरयति यः। देवभक्ते। अविद्यमानहर्षाण्यक्षाणि यस्य सः। जितेन्द्रिय इत्यर्थः। शक्त्युपशमनीतीनां दाता। व्यथायाः परकृताया दुर्गा इव दुर्गाः। शूरा इत्यर्थः। तानपि क्षिपन्ति ये तेषां स्थाने। राजप्रणतिकरणान्निवृत्तः। अदयया दर्पांशेन हिंसया च त्यक्ते। प्रमाणशास्त्रकुशले। अयमनुकूलं दैवं ये द्यन्ति खण्डयन्ति तान्व्यति छिनत्ति यः। यदि वा अयन् अयच्छन् अंच्छा[1] नैर्मल्यं नाम गुणो यस्य तस्मिन् शुद्धचरिते। गुरुभिः शुश्रूष्यमाणैः जनितो यश्चिरं क्लेशस्तेन श्रान्ते तत्र वा सक्ते। पदरहितानवति यः ॥ श्लोकगतप्रत्यागतं यथा—'निशितासिरतोऽभीको न्येजतेऽमरणा रुचा। सारतो न विरोधी नें[2] स्वाभासो भरवानुत ॥ तनुवारभसो भास्वानधीरोऽविनतोरसा। चारुणा रमते जन्ये कोऽभीतो रसिताशिनि ॥' कुमारेण गणा जगदिरे इति प्रक्रान्तम्। हे अविद्यमानरणाः[3]। तीक्ष्णखड्गप्रसक्तः। भीरहितः। बलात्। नें[4] न विरोधी। सुष्ठु आभासत इति स्वाभासो दर्शनीयः। धुर्यश्च। उत चार्थे। वर्मणा बभस्ति। तेजस्वी। रुचा तेजसा हेतुना न्येजते न कम्पते। निशब्दः प्रतिषेधार्थः। कः पुनरधीरो भयवान्। सिंहनादेनादशीले समरे कमनीयेनोन्नतवक्षसा। क्रीडतीति ॥ सर्वतोभद्रं

15.22-23

---

१. 'अच्छो' रुद्रटालंकारव्याख्याने. २. 'नोऽस्माकम्' इति व्याख्यानस्योपलम्भेन 'नः' इति सविसर्गपाठः किरातार्जुनीये. ३. 'मरणरहिताः' इति घण्टापथसंवादात् 'अविद्यमानमरणाः' स्यात्. ४. 'नोऽस्माकम्' घण्टापथे. ५. 'रसितेन शब्दितेनैवाश्नाति ग्रसतीति रवेणैव विश्वप्राणहारिणीत्यर्थः' इति घण्टापथे.

एवमर्धगतप्रत्यागत-श्लोकगतप्रत्यागत-सर्वतोभद्र-अर्धभ्रम-तुरगपद-गोमूत्रिकादीन्युदाहार्याणि ।

---

यथा—'जितानया या नताजितारसाततसारता । न सावना नावसानयातनारिरिना(?)तया ॥' जिता अनीतयोऽननुकूलदैवं वा यया । प्रणतानां रणान्तरे आतननमाततं सह तेनेति सविस्तरा [1]दृढतया । बहुतरं दार्ढ्यमित्यर्थः । न न सरक्षणा । अर्थाद्भक्तानाम् । अन्तकालदुष्कर्मविपाकताडनायाः वैरिणि स्वामिनी-(?)तयेत्युक्तरणे संबन्धः ॥ अत्र न केवलमधोधःक्रमेण स्थितानां पादानां प्रातिलोम्येन स्थितिर्यावदर्धभ्रमस्यापि । तत्र हि प्रथमादिपादानां प्रथमैश्चतुर्थतृतीयद्वितीयप्रथमपादानामष्टमैश्चाक्षरैः प्रथमपादः । एवं द्वितीयसप्तमैस्तृतीयषष्ठैश्चतुर्थपञ्चमैश्च द्वितीयतृतीयचतुर्थपादाः । इह च सर्वं तदेवोपलभ्यत इत्यर्धभ्रमस्याप्यवस्थानात्सर्वतोभद्रम् । अर्धभ्रमं यथा—'ससत्त्वरतिदे नित्यं सदरामर्षनाशिनि । त्वराधिककसन्नादे रमकत्वमकर्षति ॥' सपौरुषाणां रागप्रदे । सभयानां कोपाहारिणि । त्वरयाधिकप्रसरत्सिंहनादे रणरसिकत्वमपनयति ॥ तुरगपदागतं यथा—[2]'सेना लीलीलीना नाली लीनाना नानालीलीली । नालीनालीले नालीना लीलीली नानानानाली ॥' सेना अहं ना पुरुषो लडयोरेकत्वस्मरणमिति ईले स्तौमि । लीला विद्यन्ते येषां तान् लीलिनः [3]ईले स्तौतीत्येवंशीलो यः स स्वामी यासाम् । शुद्धविषये सविलासान्नरानर्चयति यासां प्रभुरित्यर्थः । आलमनर्थो विद्यते यस्य स नाहम् । लीनानि अनांसि रथादौ यस्य सः । नानाप्रकारा या आल्यो व्यूहरचनास्तासु या लीलेयनं श्लेषस्तां लान्ति गृह्णन्ति ये ते विद्यन्ते यस्य । न [4]आलीनामाश्रितानामली भृङ्गः उपजीवकः आलीनाः श्लिष्टाः । [5]लीलिनी लीलावती इला भूर्येषां ते नृपा विद्यन्ते यस्येति मत्वर्थीयः । नानाप्रकारा नरो यस्य । आलवान् मूर्खः । न आली अनाली अमूर्खः ॥ अनेन तुरगः खेल्यते । तथाहि—'खाद्यो ह्यग्निर्विधुशरः स्तनाश्वः सागराष्टमः । त्रिषष्ठोऽब्ध्यम्बुधिस्त्र्यङ्किः खाभि-

---

१. 'दृढता' स्यात्. २. 'सेनाः, लीलीलीनाः, न, आली, लीनानाः, नानालीलीली, न, आलीनाली, ईले, ना, आलीनाः, लीलीली, 'नानाना, अनाली' इत्येवं पदानां विभागो रुद्रटव्याख्याने दर्शितः. ३. 'ईट्टे' स्यात्. ४. 'आलीनाना' रुद्रटव्याख्याने. ५. 'लीलीली' स्यात्.

**आकारः** खड्ग-मुरजबन्धाद्याकृतिः। **तच्चित्रं यथा—**

'मारारिशक्ररामेभमुखैरासाररंहसा।
साराब्धस्तवा नित्यं तदार्तिहरणक्षमा॥
माता नतानां संघट्टः श्रियां बाधितसंभ्रमा।
मान्याथ सीमा रामाणां शं मे दिश्यादुमादिमा॥'

माराारिः शिवः। रामो मुसली। आसारवेगतुल्येन सर्वेषामाद्या॥ **खड्गः**॥ तथा च—द्राढिकान्तरे साधारणो माशब्दः। तस्य दक्षिणतोऽधः क्रमेण वर्णाश्चतुर्दश। शिखायां साशब्दः। ऊर्ध्वक्रमेण। वामतस्तावन्त एव यावन्माशब्दः साधारणः। एतत्फलम्। तस्यैव माशब्दस्य दक्षिणतो निःसरणक्रमेण गण्डिकायां वर्णत्रयम्। उपरि

---

द्व्यिषुः खसप्तमः॥ त्र्यन्तोऽब्धिषष्ठरुद्व्यम्भोधिस्तुर्याक्षिस्तनचन्द्रमाः। त्र्यग्निरब्धिखमङ्ग्यङ्गिः खाम्भोधिर्वह्निसायकः॥ वेदाश्वो द्विवसुः खर्तुरुद्व्यश्वः खान्तोऽङ्गिषष्ठकः। तुर्येषुर्द्व्यब्धिराद्यङ्गिरुद्व्याद्योऽब्ध्यग्निर्ययोर्गमः॥' खादिभिरेकादीनि लक्ष्यन्ते। अत्र समासस्थं पूर्वपदं पङ्क्तेरुत्तरपदं तु कोष्टकस्य ग्राहकम्। ययोरश्वस्य गमः संचारपदमिति यावत्। एवमेव च तुरगफलकस्यापीरेधैर्धे खेलनीयाः॥ गोमूत्रिका यथा—'काङ्क्षन्पुलोमतनयास्तनताडनानि वक्षःस्थलोच्छ्रितरयाञ्चनपीडनानि। पायादपायभवतो नमुचिप्रहारी मायामपास्य भवतोऽम्बुमुचां प्रसारी॥' पादे गोमूत्रिकेयम्॥ अर्धगोमूत्रिका यथा—'चूडाप्रोतेन्दुभागद्युतिदलिततमःकन्दलीचक्रवालो देवो देयादुदारं शममरजनतानन्दनोऽनन्यधामा। क्रीडाधूतेशभामा द्युसदनतनिमच्छेदनीव भ्रुवा [2]णो देहे देवी दुरीरं दममर···[3]तैनानन्दिनो नान्यधामा॥' शं सुखम्। असाधारणस्थानः। क्रीडया अपनीतः शिवक्रोधो यया। भ्रुवा भ्रूक्षेपेण अस्माकं [4]शरीरो दुरपसार्यमुपशमं संततप्रणता

---

१. 'परे' स्यात्. २. 'अस्माकं' इति व्याख्याकरणात् 'नो' स्यात्. ३. 'नतानन्दिनानन्य' स्यात्. ४. 'शरीरे' स्यात्.

माशब्दः साधारणः । तस्य दक्षिणतो वामतश्च तथैव चत्वारश्चत्वारो वर्णाः । एतच्च कुलकम् । ततस्तस्य माशब्दस्योपरि वर्णद्वयम् । एतन्मस्तकम् । सामामाशब्दा द्विःपञ्चकृत्वो द्विरावृत्ताः ॥

'या दमानवमानन्दपदमाननमानदा ।
दानमानक्षमानित्यधनमानवमानिता ॥

या इन्द्रियजयेन उत्तमो य आनन्दस्तस्य पदम् । विद्यया हि शमसुखलाभः । मुखस्य पूजां ददाति । निरपभ्रंशभाषणाद्धि मुखं पूज्यं भवति । दानमानक्षमा एव शाश्वतं धनं येषां तैः पुरुषैः पूजिता । मानं ज्ञानम् ॥ **मुरजबन्धः** ॥ तथा हि—पादचतुष्टयेन पङ्क्तिचतुष्टये कृते प्रथमादिपादेभ्यः प्रथमाद्यक्षराणि चत्वारि । चतुर्थादिपादेभ्यः पञ्चमादीनि च चत्वारि गृहीत्वा प्रथमः पादः । द्वितीयात्प्रथमं प्रथमाद्वितीयतृतीये द्वितीयतृतीयाभ्यां चतुर्थे चतुर्थात्तृतीयद्वितीये तृतीयात्पादात्प्रथममक्षरं गृहीत्वा द्वितीयः पादः । द्वितीयादष्टमं प्रथमात्सप्तमषष्ठे द्वितीयतृती-

---

प्रतीहारेण । उमा च अपूर्वद्युतिः ॥ श्लोके गोमूत्रिका यथा—'पायाद्वश्चन्द्रधारी सकलसुरशिरोलीढपादारविन्दो देव्योरुद्धाङ्गभागः पुरदनुजदवः स्त्यानसंविन्निधानम् । कन्दर्पक्षोददक्षः सरससुरवधूमण्डलीगीतगर्वो दैत्याधीशान्धकेनानतचरणनखः शंकरो भव्यभाव्यः ॥' घनज्ञाननिधिः । भव्यैर्ध्येयः ॥ 'देयान्नश्चण्डधामा सलिलहरकरो रूढकन्दाभबिम्बो देहे रुग्भङ्गरागः सुरमनुजदमस्त्यागसंपन्निधानम् । भंदं दिक्क्षोभदश्रीः सदसदरवधूखण्डनागीरगम्यो दैन्यैधी बन्धहानावततरसनयः शंपरो दिव्यसेव्यः ॥' तिग्मांशुः । रुजां विनाशे आसक्तः । भंदं कल्याणम् । दिशां क्षोभदा श्रीर्यस्य । सत्योऽत एव निर्भया या वध्वस्तन्निर्भर्त्सनवचसामविषयः । न दैन्यमेधयत इत्येवंशीलः । कर्मबन्धपरित्यागे विस्तीर्णो नयो यस्य । शं पिपर्ति पूरयति ॥ आदिग्रहणाद्गजपदरथपदादीनि ज्ञातव्यानि ॥

याभ्यां पञ्चमे चतुर्थात्षष्ठसप्तमे तृतीयादष्टमं च गृहीत्वा चतुर्थः पादः।
एवं मुसल-धनुः-बाण-चक्र-पद्मादय उदाहार्याः ॥

---

**मुसलेत्यादि** । मुसलधनुषी यथा—'मायावित्तं[1] महाहावा रसायातं लसद्भुजा । जातलीलायथासारवाचं महिषमावधीः ॥' 'मामभीदा शरण्या मुत्सदैवारुक्प्रदा च धीः । धीरा पवित्रा संत्रासात्रासीष्ठा मातरारमः ॥' संदानितकमिदम् । महान् हावश्चेष्टालंकारो यस्याः । वीररसेनागतम् । सारादपानतं[2] यथासारं यथा-[3]सारं वाग्यस्य । प्रतिज्ञाभ्रष्टमित्यर्थः । हे मातः, हतवती त्वम् । एवंभूता या सा त्वमारमः व्यापारान्तरान्निवर्तस्व मां भयात्रासीष्ठाः रक्ष्याः । अभियं ददाति या मुत् हर्षरूपा । धीः संविद्रूपा ॥ मुसलस्य न्यासो यथा—'मा' इत्यतः प्रभृत्य-धोधः क्रमेण वर्णसप्तकम् । ततो वर्णदेशमात्रं दक्षिणपार्श्वे प्रसृत्याधोधः क्रमेण हस्तग्राह्यस्थानार्थं वर्णत्रयम् । ततो वामपार्श्वे प्रसृत्य वर्णपञ्चकम् । ततो मध्ये 'जा'शब्दः साधारः । तदुपरि दक्षिणपार्श्वे प्रसृत्योर्ध्वक्रमेण वर्णपञ्चकम् । तदु-परि वामपार्श्वे प्रसृत्य साधारं वर्णत्रयम् । ततो दक्षिणपार्श्वे प्रसृत्य वर्णसप्तकम् ॥ धनुषो न्यासो यथा—'मा'शब्दः शिखा । ततो 'म'कारात् प्रभृत्याद्यमर्धं कुटि-लमधः क्रमेण विन्यास्यम् । ततो'धी'शब्दात्साधारात्प्रभृति 'त्रा'शब्दान्तमूर्ध्व-क्रमेण न्यासः । ततः 'सं'शब्दः । पार्श्वे ततः 'त्रा' इति साधारः । ततोऽपर-पार्श्वे 'सा' इति । ततः 'त्रा'शब्दः साधारः । ततोऽक्षरषट्कमूर्ध्वक्रमेण न्यास्यम् । ततो 'म'शब्दः साधारः ॥ बाणो यथा—'माननापरुषं लोकदेवीं सद्रस संनम । मनसा सादरं गत्वा सर्वदा दास्यमङ्ग ताम् ॥' पूजयापगतो रोषो यस्यास्ताम् । त्रिभुवनदेवीम् । हे शोभनभक्तिरस । सम्यक् प्रणम । मनसा दास्यं गत्वा । तां देवीम् । अङ्गेति प्रियाह्वाने ॥ न्यासो यथा—अधोधः क्रमेण वर्णचतुर्दश-कम् । ततोऽक्षरद्वयं फलकार्धं साधारम् । तत ऊर्ध्वक्रमेणाक्षरचतुर्दशकम् ॥ यथा वा—प्रथमपादेन ऊर्ध्वक्रमेण शरः । तत ऊर्ध्वं फलस्यादौ 'दे' । तदूर्ध्वं च वामभागे 'वीम्' । मध्ये 'सः' । दक्षिणतो 'द्रः' । ततो मध्यसकार एव द्विः । तदुपरि फलाग्रे 'न्नमौ' । अटनेर्वामत ऊर्ध्वक्रमेण 'मनौ' । मूले 'सा' साधारः । दक्षिणतोऽधःक्रमेण 'दरम्' । दक्षिणवाजे ऊर्ध्वक्रमेण 'गत्वा सर्वे' । ततः शरे

---

१. 'मायाविनं' रुद्रटे. २. 'दनपेतं' स्यात्. ३. 'न यथासारं' स्यात्.

'सामा'वर्णयोरन्तरे 'दा' साधारः। वामवाजेऽधः क्रमेण 'स्यमङ्गताम्' ॥ चक्रं यथा—'त्वं वादे शास्त्रसङ्गिन्यां भासि वाचि दिवौकसः। तवादेशास्त्रसंस्कारा-ज्जयन्ति वरदे द्विषः ॥' हे अभिलषितदायिनि, वादे स्वपक्षपरपक्षपरिग्रहे शास्त्रसक्तायां भारत्यां त्वम्। शोभसे। तथा देवा रिपून् अभिभवन्ति। कुतः तवाज्ञैवास्त्रं विनाशायाभिमन्त्रितं द्रव्यं तद्भावनाया हेतोः ॥ अत्र पञ्चाक्षरयमनेऽप्यप्रत्यभिज्ञानादप्रत्यभिज्ञायमकम् ॥ 'स्वदाव्याजवशिध्याताः सदात्तजपशिक्षिताः। ददास्वजस्रं शिवताः सूदत्तोजदिशि स्थिताः ॥' सर्वदा अव्याजं जितेन्द्रियैर्ध्याताः। शोभनं कृत्वा गृहीतमन्त्रवर्तनैरभ्यस्ताः। श्रेयस्त्वानि सुष्ठूर्जितं विष्णुस्थानं परं ब्रह्म तत्र स्थिताः ॥ गोमूत्रिका धेनुरियं क्रमव्युत्क्रमाभ्यां चतुर्विंशतिप्रकाराः। तथा हि—चतुर्ष्वपि पादेषु पङ्क्तिशो लिखितेषु प्रथमद्वितीययोस्तृतीयचतुर्थयोश्च क्रमवैपरीत्याभ्यां प्रकाराश्चत्वारः। एवं प्रथमतृतीययोः शिष्टयोश्च प्रथमचतुर्थयोः शिष्टयोश्च द्वितीयतृतीययोः शिष्टयोश्च द्वितीयचतुर्थयोः शिष्टयोश्च तृतीयचतुर्थयोः शिष्टयोश्च चत्वारश्चत्वार इति साकल्येन षट्चतुष्का इति ॥ 'हरेः स्वसारं देवित्वा जनताश्रित्य तत्त्वतः। वेत्ति स्वसारं देवि त्वां योगेन क्षपिता शुभा ॥' हे देवि, भगवतीं गोविन्दस्य भगिनीमुपास्य जनसमूहो निजमुत्कर्षं परमार्थतो जानाति। कथम्। चित्तवृत्तिनिरोधेन व्यवहृत्य। कीदृग्जनता। विनाशितकिल्बिषा। तथा च मनुः—'प्राणायामैर्दहेद्दोषान्प्रत्याहारेण संगतिम्। ध्यानेनानीश्वरान्भावान्धारणाभिश्च किल्बिषम् ॥' अनियतावयवं यमकमेतत् ॥ 'सदाप्नोति [2]पतिर्ज्योतिस्तादृशं त्वत्प्रभावतः। प्रभावतः समो येन कल्पते मोहनुत्तितः ॥' शोभनम्। आदित्यस्य तुल्यः। मोहविनाशात्। एतेन ज्योतिःस्वरूपा भगवतीति प्रतिपादितम्। यदुक्तम्—'यदादित्यगतं तेजो जगद्भासयतेऽखिलम्। यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥' मध्ययमकमन्तादिकमिदम् ॥ 'त्वं सद्गतिः सितापारा [3]परविद्योत्तितीर्षतः। [4]संसा···दत्र चाम्ब त्वं [सत्वं पासि विपत्तितः]॥' त्वं शोभना गतिः। निर्मला अनन्ता प्रकृष्टं तत्त्वज्ञानम्। अत्र भवे। हे मातः। [5]प्राणिनामापदः। गूढचतुर्थः ॥ 'परमा या तपोवृत्तिरार्यायास्तां[6] स्मृतिं जनाः। परमायात पोषाय धियं शरणमादृताः ॥' हे जनाः, अत्यर्थं सादराः सन्तः देव्यास्तां

१. 'सूदात्ताज' इति देवीशतके. २. 'यति' इति देवीशतके. ३. 'पराविं–' इति देवीशतके. ४. 'संसारा' इति देवीशतके. ५. 'प्राणिनम्। आ' स्यात्. ६. 'यां' इति देवीशतके.

स्मृतिं शरणमागच्छत । किंविधा । या स्मृतिः प्रकृष्टा तपोवृत्तिः । देवीस्मरणमेव परमं तप इत्यर्थः । अनियतावयवं यमकमिदम् ॥ 'प्रवादिमतभेदेषु दर्शास्ते महिमाश्रयः । भान्ति त्वत्रिशिखस्येव शिखानामसमाश्रयः ॥' दर्शनानि महिम्नामाश्रयः । यानि प्रवादिनां भिन्नानि ज्ञानानि तास्त्वदीया दृष्टय इति तात्पर्यम् । भवत्रिशूलस्य कोटीनां विषमधारा इव । अन्तयमकम् । 'यच्चेष्टया तव स्फीतमुदारवसु धामतः । तच्चेतो यात्यवहितं मुदा रवसुधामतः ॥' यच्चेतस्तव श्रवणचिन्तनाध्ययनादिव्यापारेण विकसितं सावधानं च । अत एव शाश्वतधनरूपम् । तच्चेतो हर्षेणोपलक्षितं धामतोऽतो मोक्षलक्षणात् रवसुधां शब्दामृतं शब्दब्रह्मोदयं याति । गोमूत्रिकाबन्धो यमकं वा ॥ 'सुरदेशस्य ते कीर्तिर्मण्डनत्वं नयन्ति यैः । वरदे शस्यते धीरैर्भवती भुवि देवता ॥' स्वर्गस्य । ते पुमांसः । हे वरदे । धीरैरविकृतचित्तैः । तेषां कीर्तिः स्वर्गं यातीति भावः । अनियतावयवं यमकम् ॥ पादपरावृत्त्या गोमूत्रिकापि ॥ 'तत्त्वं वीतावततनुत्तत्त्वं ततवती ततः । वित्तं चि[2]त्तं च वित्तत्वं वीतावीतवतां वत ॥' यतस्त्वं भवती तत्तत्वं परब्रह्मस्वरूपम् । वीतावततनुत् विगतविस्तीर्णव्यथम् । विस्तारितवती । सांख्यानां त्वमेव यस्मात्सर्वत्र प्रधानमित्यर्थः । ततोऽहं वित् विद्ये, [3]वीतसंज्ञाश्च सांख्यानां प्रधानपुरुष[4]सद्भावका दश हेतवस्[5]तद्वत्तां सांख्यानां तव वित्तत्वं वित्तं भवत्या धनत्वं प्रतीतम् । त्वं धनं प्रसिद्धमित्यर्थः । बतेत्याश्चर्ये । द्व्यक्षरः ॥ 'तारे शरण[6]मुँच्यन्ती सुरेशरणमुद्यमैः । त्वं दोषापासिनोदग्रस्वदोषा पासि नोदने ॥' हे ताराख्ये देवि विमले, वस्त्वं शरणं सती आश्रितत्राणायोत्तिष्ठमाना । शक्रस्य संग्रामम् । व्यापारैः । दोषक्षेपिणा निजबाहुना रक्षसि । प्रेरणकाले पलायितारो देवा भवतीं शरणमेत्य पुनः संग्रामसमर्थाः संपद्यन्त इति वाक्यार्थः । उद्यन्तीत्यत्र मुँ[7]न् चिन्त्यः । अनियतावयवं यमकम् । पादगोमूत्रिकापि ॥ प्रागुक्तेन 'सुरदेशस्य ते कीर्तिः' इत्यनेन पादपरावृत्तिगोमूत्रिकाबन्धेन सह अमुना पादगोमूत्रिकाबन्धनतूणबन्धेयम् । तथा हि । प्राक्तनश्लोकस्य प्रथमतृतीयपादाक्षरैरधोधः क्रमेण पङ्क्तिद्वये कृते गोमूत्रिकया नालिरुत्पद्यते । अनावृत्त्यान्त्यवर्णाभ्यां

---

१. 'शस्ते' इति देवीशतके. २. 'वित्तव' इति देवीशतके. ३. 'वीतसंज्ञा अवीतसंज्ञा च सांख्यानाम्' इति देवीशतकव्याख्यायां कैयटः. ४. 'सद्भावावेदका देशहे—' इति देवीशतकव्याख्यायां कैयटः. ५. 'तद्वतां' इति देवीशतकव्याख्यायां कैयटः. ६. 'मुद्यन्ती' इति देवीशतके. ७, 'नुम्' स्यात्.

चुभ्रम् । तदुपरिष्टाच्च 'तारे' इत्यादिश्लोकपादैरूर्ध्वक्रमेण पङ्क्तिचतुष्टये कृते पादगोमूत्रिकया मुखम् । अन्त्यानां वर्णानामनावृत्त्या शराकर्षणार्थं द्वारप्रादेशदर्शनम् । इति ॥ 'सुमातरक्षयालोकरक्षयात्तमहामनाः । त्वं धैर्यजननी पासि जननीतिगुणस्थितीः ॥' अक्षयज्ञानरक्षणेन । गृहीतं महन्मनो यया । धैर्योत्पादिका । अनियतावयवं मध्यादियमकम् ॥ 'ख्यातिकल्पनदक्षैका त्वं सामर्ग्यजुषामितः । सदा सरक्षसां मुख्यदानवानामसुस्थितिः ॥' ख्यातिरेकत्र वेदानामन्यत्र दानवानां कल्पनं छेदनमिति । अद्वितीया । त्रयाणां वेदानां परिपूर्णत्वभाजामपि । इतोऽस्मिँल्लोके । अस्माज्जगतश्च । सरक्षणाभिमुख्यप्रदा । अकृतकानां वेदविशेषणमिदम् । जीवितरूपा सती । सराक्षसानां प्रधानदैत्यानां दुःखासिका सत्यपि । रेफविवर्तिकोऽयम् । 'र्ग्य' इत्यत्र रेफ उपरिष्टादधश्च परिवृत्तः ॥ 'सिता संसत्सु सत्तास्ते स्तुतेस्ते सततं सतः । ततास्तितैति तस्तेतिसूतिः सूतिस्ततोऽसि सा ॥' हे देवि, यतो निर्मला । सभासु । शोभनता । तिष्ठति । स्तवात् । तव । सदा । साधोः । तथा[1] विस्तीर्णा । विद्यमानता । एति । दीर्घायुर्भवतीत्यर्थः । क्षिप्ता ईतिसूतिरुपद्रवप्रभवो यस्यामस्तितायाम् । ततो हेतोः शोभना ऊतिः सुरक्षा । सा प्रसिद्धा । भवसि त्वम् । द्व्यक्षरः ॥ 'त्वदाज्ञया जगत्सर्वं भासितं मलनुद्यतः । सदा त्वया सगन्धर्व[2]सससिद्धमरिनुत्तितः ॥' हे मलनुत् आवरणनिवारिणि, त्वच्छासनेन त्रैलोक्यं वर्तते । यतो रिपुक्षेपणात्त्वया प्रकाशितम् । अर्धगोमूत्रिकाबन्धः ॥ 'यतो याति ततोऽत्येति यया तां तायतां यतेः[3] । मातामितोत्तमतमा तमोतीतां मतिं मम ॥' यया मत्या यतो निवर्तते ततो विमुच्यते तां मम मतिं विगततमस्कां तायतां पालयताम् । भवतीत्यर्थः । या मतिश्चतुर्थाश्रमस्थस्य जननी । अपरिच्छिन्ना । अत एव प्रकृष्टतमा । त्र्यक्षरः ॥ एते षोडश श्लोकाश्चक्रे रेमेरा[4]रभ्य नाभिं यावत् अनुलोमतो लिखिता अन्ये षोडशाराः । अत एव च नाभेराराभ्य पुनरनुलोमतो लिखिता अन्ये षोडश । इत्थं द्वात्रिंशदराः ॥ 'महतीं[5] त्वं श्रिता दासजनं मोहच्छिदावस । यः[6] शुद्धत्वं गतः पापमन्यस्य प्रसभं जयाँ[7] ॥' माहात्म्यम् । हे मोहच्छिदज्ञाननाशिनि । आवस अधिष्ठाय[8] ।

---

१. 'तता'स्यात्. २. 'र्वं समिद्धम–' इति देवीशतके. ३. 'तैः' इति देवीशतके. ४. 'नेमे' स्यात्. ५. 'त्तां' इति देवीशतके. ६. 'यच्छुद्ध–' इति देवीशतके. ७. 'य' इति देवीशतके. ८. 'अधितिष्ठ' इति देवीशतकव्याख्यायाम्.

च्युतं मात्रार्धमात्राबिन्दुवर्णगतत्वेन चतुर्धा ।

तत्र मात्राच्युतकं यथा—

'भूतियोजितभर्तव्यः कृपाणाक्रान्तमण्डलः ।
महापदशुभावास त्वत्समः कुपतिः कुतः ॥'

---

इति द्विविधो हि जनः, अपापः सपापश्च ॥ 'त्वं साज्ञासु जगन्मातः स्पष्टेज्ञाता सुवर्त्मसु । प्रज्ञा मुख्या समुद्भासि तत्पृथुत्वं प्रदर्शय ॥' हे जगन्मातर्, विविक्तं विदिता सती त्वं शोभनवर्त्मसु सन्मार्गेषु विषये आज्ञासु निरूपणासु सा मुख्या प्रज्ञा वर्तते । तस्याः प्रज्ञायाः पृथुत्वं समुद्भासनशीलं प्रकटीकुरु । अस्मादेव चेयमार्या प्रादुर्भवति । 'आज्ञासु जगन्मातः स्पष्टेज्ञाता सुवर्त्मसु प्रज्ञा । भासि त्वं सा मुख्या समुत्पृथुत्वं प्रदर्शय तत् ॥' शोभनं वर्त्म येषां तद्विषयासु राजा सः । स्पष्टं समुत्प्रकटमानन्दरूपं महिमानं तस्मात् । शेषं तथैव ॥ 'हन्त्र्यो रुषः क्षमा एताः सदक्षोभास्त्वमुन्नतः । सतेहितः सेवते ताः सततं यः स ते हितः ॥' क्रोधस्य विनाशिन्यः एताः क्षमाः शोभना अविकाराश्च त्वमसि । अतो हेतोर्य उन्नतः प्रकृष्टः सता शोभनेन मार्गेण ईहितो व्यापारितः सततं ताः सेवते स तेऽनुकूलः ॥ 'करोषि तास्त्वमुत्खातमोहस्थाने स्थिरा मतीः । पदं यतिः सुतपसा लभतेऽतः सशुक्तिम ॥' हे उन्मूलिताज्ञान पदे यतस्ता मतीर्मैत्रीप्रमुदितादिकाः अचलास्त्वं करोषि, अतो हेतोः यतिर्मुमुक्षुः सह शुक्तिम्ना वर्तते यत्तत्पदम् । तमोमलहीनमित्यर्थः । चत्वार एते नेमिश्लोकाः । एभ्यश्च प्रथमं प्रथमं त्रीणि त्रीण्यक्षराणि लिख्यन्ते । चतुर्थं चारश्लोकप्रारम्भाक्षरं भवति । इत्थं नेम्यर्धनिमीलनम् । पुनरनुलोमलिखिताच्छ्लोकषोडशकाच्चैवमेवान्त्यमक्षरं त्रिषु लिखितेषु चतुर्थं भवतीति नेमेर्द्वितीयमर्धं मीलितं भवति । एवमेव चान्तर्लिखितैस्तैरेव नेमिश्लोकैर्नाभिनिमीलनं भवति । अत एव चारद्वात्रिंशतो नेमिस्थानान्नाभितो वा तृतीयं तृतीयं चाक्षरमादाय वर्णद्वात्रिंशतः श्लोकोऽयमुत्पद्यते ॥ 'देव्या स्वप्नोद्गमादिष्टदेवीशतकसंज्ञया । देशितानुपमामाधादतो नोणनुतो नुतिम् ॥' देव्या वागीश्वर्या स्वप्नाविर्भावे आदिष्टा या देवी शतकमिति संज्ञा तया देशो निर्देशो विद्यतेऽस्यास्तस्या भावो देशिता तयानुपमां देवीस्तोत्र-

---

१. 'ष्टं ज्ञा' इति देवीशतके. २. 'ष्टं' इति देवीशतके.

अत्र कृपणेति। विभूतिर्भस्म च। महापदेति शुभावासेति संबोधने पदद्वयम्। महापदोऽशुभस्यावासेति पदमेकं च॥

अर्धमात्राच्युतं यथा—

'पयोधरभराक्रान्ते विद्युल्लेखाविराजिते।
कान्तः सर्वजनाभीष्टो बाले दुःखेन लभ्यते॥'

अत्र 'न्दु' इत्यत्र नकारो व्यञ्जनं च्युतम्॥

बिन्दुच्युतं यथा—

'सहंसा नलिनी ताराशारिता गगनावनिः।
'शोभते भूमिपालानां सभा च विबुधाश्रिता॥'

सह हसेन विकाशेनेत्यपि॥

वर्णच्युतं यथा—

'सितनृशिरःस्रजा रचितमौलिशिरोमणिमौक्तिकैस्तथा
शिखिरुचिरोर्ध्वदृक्पृथुललाटतटे तिलकक्रिया च सा।

---

तया सर्वातिशायिनीं नोणसुतः श्रीमानानन्दवर्धननामा स्तुतिमिमामकार्षीदिति॥ पद्मं यथा—'भासते प्रतिभासार रसाभाताहताविभा। भावितात्मा शुभा वादे देवाभा बत ते सभा॥' हे प्रज्ञातिशयोत्कृष्ट, वादे रसेन समन्ताद्दीप्ता हता अशोभा यया। एकाग्रीकृतहृदया वादे एव। देवैर्विजिगीषुभिः पण्डितैराभा यस्याः। बतेत्याश्चर्ये निपातः। एषोऽष्टदलपद्मबन्धः। तथा हि—भाशब्दः कर्णिकास्थाने। ततोऽक्षरद्वयेनैकं दिग्दलं निःसरणक्रमेण विदिग्दलं चाक्षरद्वयेन प्रवेशक्रमेण। ततः स एव भाशब्दः। ततोऽक्षरद्वयेन दिग्दलं निर्गमप्रवेशाभ्यां भाशब्दं यावत्। ततोऽक्षरद्वयेन विदिग्दलं निर्गमेण तावतैव दिग्दलं प्रवेशेन भाशब्दं यावत्। पुनर्भाशब्दो निर्गमेण च तदेवाक्षरमित्यादिना क्रमेण दलाष्टकमुत्पाद्यमिति दिग्दलवर्णानां द्विर्भाशब्दस्य चाकृष्टत्व आवृत्तिः॥ आदिग्रहणात् हल-शक्ति-

स्फुटविकटाट्टहासललितं वदनं सितपेशलं च त-
दभिनवमीश्वरो वहति वेषमहो तुहिनाद्रिजार्चयुक् ॥'

अत्र गौरीश्वरवर्णने सिद्धिच्छन्दसि प्रतिपादमाद्याक्षरद्वयपातेऽन्त्याक्षरसप्तकच्युतौ चेश्वररूपवर्णनमेव प्रमिताक्षरावृत्तेन। यदि वा आद्याक्षरसप्तकच्युतौ अन्त्याक्षरद्वयपाते च गौरीवर्णनं द्रुतविलम्बितवृत्तेन ॥

गूढं क्रियाकारकसंबन्धपादविषयत्वेन चतुर्धा ।

क्रियागूढं यथा—

'स्तनजघनाभिराममन्दं गमनमिदं मदिरारुणेक्षणायाः ।
कथमिव सहसा विलोकयन्तो मदनशरज्वरजर्जरा युवानः ॥'

'हे युवानः, कथमिव यूयं न स्त' इति क्रियागूढम् ॥

कारकगूढं यथा—

'केनेमौ दुर्विदग्धेन हृदये विनिवेशितौ ।
पिबतस्ते शरावेण वारि कह्लारशीतलम् ॥'

अत्र 'शरौ' इति कर्मणो गूढत्वम् ॥

संबन्धगूढं यथा—

'न मया गोरसाभिज्ञं चेतः कस्मात्प्रकुप्यति ।
अस्थानरुदितैरेभिरलमालोहितेक्षणे ॥'

अत्र ' मे चेतसागोरसाभिज्ञम्' इति संबन्धगूढम् ॥

पादगूढं यथा—

(२)(१)　(४)　(३) (६) (५) (७)　(८)
'द्युवियद्गामिनीतारसंरावविहतश्रुतिः ।
हैमेषुमाला शुशुभे ........................ ॥'

K15.43 ✓

अत्र 'विद्युतामिव संहतिः' इत्यस्य गूढत्वाद्गूढत्वम् ॥

---

१. 'मे, चेतः, आगोरसाभिज्ञम्' स्यात्.

गूढादीत्यादिपदेन प्रश्नोत्तर-प्रहेलिका-दुर्वचकादिपरिग्रहः ॥

एतच्च कष्टकाव्यत्वात्क्रीडामात्रफलत्वाच्च न काव्यरूपतां दधातीति प्रतन्यते ॥

**अर्थभेदभिन्नानां भङ्गाभङ्गाभ्यां युगपदुक्तिः श्लेषः ।**

'अर्थभेदाच्छब्दभेदः' इति नयेन वाच्यभेदेन भिन्नानामपि शब्दानां तन्त्रेण युगपदुच्चारणं भिन्नस्वरूपापह्नवनं श्लिष्यन्ति शब्दा अत्रेति श्लेषः । स च वर्णपदलिङ्गभाषाप्रकृतिप्रत्ययवचनविभक्तिरूपाणां शब्दानां भङ्गादभङ्गाच्च द्वेधा भवति ।

यथा—

'अलंकारः शङ्काकरनरकपालं, परिजनो
विशीर्णाङ्गो भृङ्गी, वसु च वृष एको बहुवयाः ।
अवस्थेयं स्थाणोरपि भवति सर्वामरगुरो-
र्विधौ वक्रे मूर्ध्नि स्थितवति वयं के पुनरमी ॥'

अत्र विधुर्विधिश्चेत्युकारेकारयोर्वर्णयोर्भङ्गः ॥

'ते गच्छन्ति महापदं भुवि पराभूतिः समुत्पद्यते
तेषां तैः समलंकृतं निजकुलं तैरेव लब्धा क्षितिः ।
तेषां द्वारि नदन्ति वाजिनिवहास्ते भूषिता नित्यशो
ये दृष्टाः परमेश्वरेण भवता तुष्टेन रुष्टेन वा ॥'

---

शूल-स्वस्तिक-नागपाशादयो ज्ञेयाः ॥ **प्रश्नोत्तरेति** । तथा चाह—'यस्तु पर्यनुयोगस्य निर्भेदः क्रियते बुधैः । विदग्धगोष्ठ्यां वाक्यैर्वा तद्धि प्रश्नोत्तरं विदुः ॥' यथा—'काहमस्मि गुहा वक्ति प्रश्नेऽमुष्मिन्किमुत्तरम् । कथमुक्तं न जानासि कदर्थयसि यत्सखे ॥' अत्र कदर्थयसीत्येतत् कथवर्णाभ्यां मुक्तं दर्यसीति उत्तरम् ॥ एतच्च अन्तःप्रश्न-बहिःप्रश्न-जातिप्रश्नादिभेदैरनेकप्रकारं प्रकृतानुपयोगात्कविशक्ति-

अत्र महतीमापदं महत्पदं वेत्यादि पदानां भङ्गः ॥

'भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी
ध्यानालम्बनतां समाधिनिरतैर्नीते हितप्राप्तये।
लावण्यस्य महानिधी रसिकतां लक्ष्मीदृशोस्तन्वती
युष्माकं कुरुतां भवार्तिशमिनी[1] नेत्रे तनुर्वा हरेः॥'

अत्र च 'नीता ईहितप्राप्तये' इति च स्त्रीनपुंसकलिङ्गयोः श्लेषः॥

'कुरु लालसभूलेहे महिमोहहरे तुहारिविच्छिन्ने।
हरिणारिसारदेहे वरे वरं हर उमे भावम्॥'

कश्चिद्युयुत्सुर्ध्यानोनीनां[2] भवानीं स्वकान्तां च संस्कृत[3]प्राकृतया[4] वाचा तुष्टुवे—हे उमे, हरे रुद्रे भावं श्रद्धां विधेहि। अर्थान्मम। कीदृशे हरे। लालसमर्थान्मनस्तद्भवं कामं लेढि स यस्तत्र। महिम्नेव वितर्कहर्तरि। हरसंनिधौ हि सर्वज्ञानाभिभव इति श्रुतिः। तोहन्त्यर्दयन्ति येऽरयस्तैर्विरहिते सिंहबलशरीरे परिणेतरि श्रेष्ठम्। उमाया एव इमानि संबोधनपदानि॥ प्राकृते तु—हे वरे कान्ते, ते तव संब-

---

ख्यापनफलत्वान्न प्रतन्यते॥ प्रहेलिका यथा—'पयस्विनीनां धेनूनां ब्राह्मणः प्राप्य विंशतिम्। ताभ्योऽष्टादश विक्रीय गृहीत्वैकां गृहं गतः॥' धेन्वा ऊनाम्॥ एवमन्येऽपि प्रहेलिकाप्रकारा अभ्यूह्याः॥ तथा दुर्वचं दुःश्रवं दुर्बोधमपि क्रीडायां न विरुध्यते। यथा—'नांष्ट्रा त्वाष्ट्रारिराष्ट्रे न भाष्ट्रे नादंष्ट्रिणो जनाः। धार्तराष्ट्राः सुराष्ट्रे न महाराष्ट्रे तु नोष्ट्रिणः॥' नांष्ट्राः राक्षसाः। त्वष्टुरपत्यमिति त्वाष्ट्रो

---

१. 'शमनं' का० प्र०. २. 'ध्यानोन्नीतां' स्यात्. ३. 'कुरु लालसभूलेहे महिमोहहरे तुहारिविच्छिन्ने। हरिणारिसारदेहे वरे वरं हर उमे भावम्' इत्येवं संस्कृतपक्षे पदानि.

४. 'कुरु लालसभ्रूलेखे महीमोहगृहे ते हारिविच्छिन्ने।
हरिनारीसारदेहे वरे वरं हरतु मे भावम्॥' इति प्राकृतपक्षे छाया.

न्धिनि कुरुलालसभ्रूलेखे महीमोहगृहे हारिणि विच्छिन्ने च तनुमध्यत्वात् । हरिप्रियाप्रधानवपुषि यद्वरं नयनाननस्तनजघनादि तन्मेऽभिलाषं हरतु कामं पूरयतु ॥

एवं भाषान्तरभङ्गेऽप्युदाहार्यम् ॥

---

वृत्रस्तस्यारिरिन्द्रस्तस्य राष्ट्रे स्वर्गे ॥ भाषान्तरभङ्गेऽपीति । संस्कृतभाषायां मागध्या समावेशो यथा 'कुंललालिलावलोले शलिले शे शालशालिलवशूले । कमलाशवलालिबले मालेदि शमन्तके विशमे ॥' कश्चिज्जातसंसारभयो वक्ति—कुललालिनो महापुरुषान् लुनातीति । कर्मण्यण् । स चासौ लम्पटश्च तस्मिन् । शलं वज्रं तदुपलक्षितः खड्गो येषां तान् लिशत्यल्पीकरोति यस्तस्मिन् । गृहशालिनां छेदनशूले । लक्ष्म्याः शवानि अस्पृष्टतया दरिद्रास्तल्लालनशीलं बलं यस्य । क्षेमारहिते । मलनं मालो धारणं क्षमेति यावत् । यमे एवंभूते सति ऐं विष्णौ दिशमविशम् । विष्णुविषयं मार्गमहमास्थित इत्यर्थः । अपरोऽर्थो मागध्याम् । कुररपङ्क्तिरवैर्लोलं व्याप्तम् । रवशब्दस्य प्राकृते दीर्घः । सलिलं तत् । सारसश्रेणिकूजितेन शूरं विरहिणां मारणसमर्थत्वात् । कमलसेधुग्राहकैरलिभिः श्रेष्ठम् । मारयति शाम्यतो मुनीनपीत्यर्थः । विषमं वियोगिभीषणम् । अनेकपक्षिसंकुलं सलिलं दृष्ट्वा मुनयोऽपि क्षुभ्यन्ति किमु विरहिण इत्यर्थः ॥ संस्कृतस्य पैशाच्या यथा—'कंमनेकतमादानं सुरतनरजतुच्छलं तदासीनम् । अप्पतिमानं खमते सोगनिकानं नरञ्जेतुम् ॥' कस्यचित्केनचित्पौरुषे स्तुतेऽन्योऽसहमान आह—हे सुरते प्रधानपुरुष, न तु रणे । खमते शून्ययुद्धे स त्वया वर्ण्यमानो राजादिः कं नरं जेतुमजतु गच्छतु । नास्त्येवासौ यं सोऽभिभवति । कीदृशं बहुतमोत्पत्तिस्थानम् । मायां प्रसिद्धामाश्रयमाणम् । अर्थान्तरवृत्तित्वेन सक-

---

१. 'कुररालिरावलोलं सलिलं तत्सारसालिरवशूरम् ।
कमलासवलालिवरं मारयति शाम्यतो विषमम् ॥' इति मागधीच्छाया.

२. 'यावत्' इत्युत्तरं योग्यम्. ३. 'पविष्टौ' क. ४. 'मधु' इति स्यादासवशब्दार्थत्वात्. ५. 'कम् अनेकतमादानम् सुरतनः अजतु छलं तदा आसीनम् अप्पतिमानं खमते सः अगनिकानं नरं जेतुम् ॥' इति संस्कृतपक्षे पदानि. ६ 'निधुवनपुरुष–' इति रुद्रटव्याख्यायाम्. ७. 'बु' इति रुद्रटव्याख्यायाम्.

'आत्मनश्च परेषां च प्रतापस्तव कीर्तिनुत्।
भयकृद्भूपतेर्बाहुर्द्विषां च सुहृदां च ते॥'

अत्र नौतिनुदत्योः करोतिकृन्तत्योश्च प्रकृत्योर्भङ्गः॥

'त्वदुद्धृतामयस्थानरूढव्रणकिणाकृतिः।
विभाति हरिणीभूता शशिनो लाञ्छनच्छविः॥'

---

मेकता। यद्वा मूर्तेच्छन्नरूपं लब्धरूपं च। अपां पत्युर्वरुणस्येव मानो यस्य। पर्वतस्येव निकानः कान्तिर्यस्य। 'कनी दीप्तिकान्तिगतिषु' इति हि पठ्यते। अथ वा न गच्छतीत्यगोऽनश्वरः। अभ्रष्टकान्तिमित्यर्थः। एवंविधा यदा नराः सन्ति तदा स त्वदुक्तः कमिव जयत्विति वाक्यार्थः। अथ वा एवंविधा यदा न सन्ति सर्वं तेन जितमतः स कं नरं जेतुमजत्विति एवात्र। परार्थः पिशाचभाषायाः—'कामे कृतमदाः सुरत्नरजतोच्छलदासीः। अप्रतिमाः क्षमते स गणिका न रञ्जयितुम्॥' अत्र हि द्वितीयार्थे षष्ठी। केनचिद्वेश्यानामुपचारः कृतः, ताभिस्तु तस्य न कृत इति सोऽत्र वर्ण्यते॥ संस्कृतस्य सूरसेन्या यथा—'संवादिसारसंपत्ती सदागोरिजयेसुदे। भवसत्तीरदे[2] सत्ते[3] संसारे सुसमानदे॥' हे देवि प्राणदायिनि, तव संबन्धिन्यौ सत्ते सतो विद्यमानस्य शोभनस्य च भाव इति द्वौ भावौ विद्यमानतोज्ज्वलतालक्षणौ विद्यमानापराधरिपुजयविषये विज्ञायमाना बलस्य समृद्धिर्ययोः ते तथाविधे वर्तेते इत्यर्थः। अरिविजये जनस्य तव सांनिध्यमौज्ज्वल्यं च लक्ष्यत इति भावः। अन्यत्ते सत्ते भवसागरे शोभनपारप्रदे त्वयि सत्यां त्वत्प्रभावेण संसारसागरादुत्तीर्यत इत्यर्थः। तथा सुसमामनपभ्रंशमानं शब्दं यदि वाब्रह्मस्तम्भपर्यन्तचतुर्दशभूतसर्गे नित्योदिततया सुगमं साधारणत्वेनावस्थितं शब्दब्रह्म दत्तो ये ते तादृश्यौ। अपरोऽर्थः

---

१. 'शंवातिसारसंप्राप्तिः सदा गौरि जगत्सु ते।
तपःशक्ती रते सत्त्वे संसारे सुशमानते॥' इति सूरसेनीच्छाया.

'संवादिसारसंपत्ती सदागोरिजये असुदे तव सत्तीरदे सत्ते संसारे सुसमानदे' इति संस्कृतपक्षे पदानि.

२. 'तव' इति देवीशतके; 'रव' ख. ३. 'सन्तु' इति देवीशतके.

हरिणीभूतेति मृगीभूता, श्यामा संपन्नेति च। अत्र च्विङीप्रत्यययोर्भङ्गः ॥

'विषं निजगले येन बभ्रे च भुजगप्रभुः।
देहे येनाङ्गजो दध्रे जाया च स जयत्यजः ॥'

अत्र गिलितं, निजे गले। दग्धो वपुषि चेति स्यादित्यादिविभक्त्योर्भङ्गः ॥

'प्राज्यप्रभावः प्रभवो धर्मस्यास्तरजस्तमाः।
ददतां निर्वृतात्मान आद्योऽन्येऽपि मुदं जिनाः ॥'

---

सूरसेन्याः—हे गौरि, जगत्सु सर्वदा देवतपःशक्तिर्वज्रवदतिदृढधाच्चिः। अनपायिनी वर्तत इत्यर्थः। कीदृशि। रदे आसक्ते। क्व। संसारे। सत्ते श्रेयःप्रधाने सत्वे [1]सुसमैश्चित्तोद्रेकजयिभिर्मुमुक्षुभिः प्रणते। चित्तजय एव हि मोक्षः। तथा च—'चित्तमेव हि संसारो रागादिक्लेशदूषितम्। तदेव तद्विनिर्मुक्तं मोक्ष इत्यभिधीयते ॥' संस्कृतस्यापभ्रंशेन यथा—'[3]आगमभणिसुदमहिमसमसंमदकृदपरजस्सु। किर सविभयवदितोसमय उज्जलभावसहस्सु ॥' हे देवि, अपरजस्सु विगलितमोहेषु उत्क्रान्तजडतायां सत्यां बलं येषां तेषु पुरुषेष्वनवसरे आगमा एव प्रकाशकत्वान्मणयस्तथा शोभनो दमश्चित्तोपशम एव निर्वापकत्वात् हिमं तयोः संबन्धी योऽसौ समोऽनाकुलो हर्षस्तं कृन्तति यत् तदर्थादज्ञानम् इतः संसारात् किर क्षिप। सविभयवत् यज्विनां भयं यथा किरसि तद्वदज्ञानं किरेत्यर्थः ॥ परोऽर्थः—जस्सु पर यस्य केवलमागमाश्चेतसि तथाश्रुतमहिमा शास्त्रावबोधशमादिविषयनिग्रहाः एते च सर्वे साम्यमनाकुलत्वं ददानाः कृताः। किल सापि भगवती तोषमयं निर्मलपदार्थसहस्रं सहस्रशब्दो बाहु-

---

१. 'संप्राप्तिः' इति देवीशतकव्याख्यायाम्. २. 'सुशमै' स्यात्.

३. 'आगमा मनसि श्रुतमहिमा शमः साम्यदाः कृताः परं यस्य।
किल सापि भगवती तोषमयमुज्ज्वलभावसहस्रम् ॥' इत्यपभ्रंशच्छाया.

'आगममणिसुदमहिमसमसंमदकृत् अपरजस्सु किर सविभयवत् इतः असमये उज्ज्वलभावसहस्सु' इति संस्कृतपक्षे पदानि.

अत्रैकवचनबहुवचनयोर्भङ्गः ॥

एषामेव वर्णादीनामभङ्गाद्यथा—

'असावुदयमारूढः कान्तिमात्रक्तमण्डलः ।
राजा हरति लोकस्य हृदयं मृदुभिः करैः ॥'

उदयः शक्त्युपचयो गिरिविशेषश्च । रक्तमण्डलोऽनुरक्तप्रकृतिररुणबिम्बश्च । राजा नृपतिश्चन्द्रश्च । मृदुभिरखेदावहैः करैर्दण्डादिभिः किरणैश्चेत्यभङ्गः शब्दश्लेषः ॥

अत्र प्रकरणादिनियमाभावात् द्वावप्यर्थौ वाच्यौ ॥ न चायमर्थालंकार इति वाच्यम् । अन्वयव्यतिरेकाभ्यां शब्दगतत्वेन प्रतीयमानत्वात् । तथा हि—उदयादिशब्दप्रयोगेऽलंकारः, तदर्थशक्त्युपचयगिर्यादिप्रयोगे तु नेति तद्भावतदभावानुविधायित्वात् शब्दालंकार एवायम् ॥

'स्वयं च पल्लवाताम्रभास्वत्करविराजिनी ।
प्रभातसंध्येवास्वापफललुब्धेहितप्रदा ॥'

इत्यादौ तु संकरत्वमेव युक्तम् । अथ वा न्यायपरीक्षायामुपमात्वमेव । तथा हि—यथा गुणक्रियासाम्ये उपमा, तथा शब्दमात्रसाम्येऽपि दृश्यते—

'सकलकलं पुरमेतज्जातं संप्रति सितांशुबिम्बमिव ।'

---

ल्यार्थे । देवी प्रसादविलसितं तत्तस्येति वाक्यार्थः ॥ ननु स्वरितादिगुणभेदाद्भिन्नप्रयत्नोच्चार्याणां तदभेदादभिन्नप्रयत्नोच्चार्याणां च शब्दानां बन्धेऽलंकारान्तरप्रतिभोत्पत्तिहेतुः शब्दश्लेषोऽर्थश्लेषश्चेति द्विविधोऽप्ययमर्थालंकारमध्ये गणितोऽन्यैरित्याशङ्क्याह—**न चायमर्थालंकार इति** ॥ **स्वयं चेति** । गौरीपक्षे—किसलयवद्दीप्यमानाभ्यां शोभते सुखेनामुं यन्न शक्यं फलं तत्र लुब्धानामीहितं प्रददाति । संध्यापक्षे—उज्ज्वलस्तया[2] मरीचिभिः शोभिता स्वाप-

---

१. 'कराभ्यां' त्रुटितं स्यात्. २. 'उज्ज्वलसूर्यमरी' स्यात्.

इत्यादौ । न च तत्र शब्दश्लेषत्वं युक्तम् । पूर्णोपमाया निर्विषयत्वापत्तेः । गुणक्रियासाम्ये सा भविष्यतीति चेत्, न । अर्थश्लेषस्य निर्विषयत्वप्रसङ्गात् । अथ 'दिशः प्रसादयन्नेषः' इत्यादौ वक्ष्यमाण उपमाविरहितोऽर्थश्लेषस्य विषयः कल्प्यते । तदा द्वयोरप्यन्यत्र लब्धसत्ताकयोरेकत्र संनिपाते संकरतैव प्राप्नोति । गुणक्रियासाम्यमुपमा शब्दसाम्यं तु श्लेष इति विशेषस्यानभिधानात् शब्दसाम्यमुपमाया विषयः । श्लेषस्य तूपमया विरहित इति 'स्वयं च पल्लवा—' इत्यादौ उपमैव न्याय्या ॥

एवं च—

'अबिन्दुसुन्दरी नित्यं गलल्लावण्यबिन्दुका ।'

इत्यादौ न विरोधप्रतिभोत्पत्तिहेतुः श्लेषः, अपि तु श्लेषप्रतिभोत्पत्तिहेतुर्विरोध एव । अत्र हि श्लेषस्य प्रतिभामात्रं न पुनः प्ररोहः । न च विरोधाभास इव विरोधः श्लेषाभासः श्लेषः । तस्मादेवमादिषु श्लेषप्रतिभोत्पत्तिरलंकारान्तरमेव ॥

---

फले विश्रान्तौ यो न लुब्धस्तद्विषये हितं प्रददाति ॥ **अलंकारान्तरमिति ।** समासोक्त्यादिरूपम्, न तु श्लेष इत्यर्थः । तथा च—'अनुरागवती संध्या दिवसस्तत्पुरःसरः । अहो दैवगतिश्चित्रा तथापि न समागमः ॥' इत्यत्र समासोक्तित्वम् । तत्पुरःसर इति आगच्छन्त्या इव संध्यायाः कामुक इव दिवसः पुरः संमुखं सरतीति व्याख्येयम् । न तु पदातिन्यायेनाग्रे दिवसो गच्छति संध्या पश्चादिति । एवं हि वर्षशतैरपि समागमो न भवतीति किं चित्रम् ॥ 'नालस्यप्रसरः—' इत्यादौ अन्योक्तित्वम् ॥ 'यो गोपीजनवल्लभः स्तनतटव्यासङ्गलब्धास्पदश्छायावान्नवरक्तको बहुगणश्चित्रश्चतुर्हस्तकः । कृष्णः सोऽपि हृताशया व्यपहृतः कान्तः कयाप्यद्य मे किं राधे मधुसूदनो नहि नहि प्राणाधिकश्चोलकः ॥' इत्यत्र ससंदेहत्वम् ॥ यदि वान्योक्तेः सारूप्यादिः, ससंदेहस्य च

**अर्थैक्ये द्व्यादिभाषाणां च ।**

द्वित्रिचतुःपञ्चषण्णां भाषाणामर्थाभेदे युगपदुक्तिर्**द्व्यादिभाषाश्लेषः।**

तत्र संस्कृतप्राकृतमागधपिशाचशूरसेनापभ्रंशभाषाणां द्वियोगे पञ्चदश, त्रियोगे विंशतिः, चतुर्योगे पञ्चदश, पञ्चयोगे षट्, षड्योगे एकः। सर्वमीलने भाषाश्लेषस्य सप्तपञ्चाशद्भेदाः। एते च पूर्वोक्तभाषाश्लेषे भिन्नार्थत्वेऽपि द्रष्टव्याः॥

**संस्कृतप्राकृतयोर्योगो यथा—**

'सरले साहसरागं परिहर रम्भोरु मुञ्च संरम्भम्।
विरसं विरहायासं वोढुं तव चित्तमसहं मे॥'

**संस्कृतमागध्योर्यथा—**

'शूलं शलन्तु शं वा विशन्तु शबला वशं विशङ्का वा।
अशमदशं दुःशीला दिशन्ति काले खला अशिवम्॥'

शलन्तु गच्छन्तु। अधिरोहन्त्वित्यर्थः। शं शुभं वा यान्तु। संकीर्णाः पापकारिण इति यावत्। विशङ्काः सन्तो वशं बन्धनं वा

---

सादृश्यादिः, श्लेषव्यतिरेकेण विविक्तोऽप्यस्ति विषयस्तदात्रापि श्लेषस्यान्योक्तिससंदेहानुग्राहकत्वेन प्रवृत्तत्वात्संकरत्वं भवतु श्लेषत्वमिति। अलौकिकमहालोकप्रकाशितजगत्त्रय। स्तूयते देव सद्वंश मुक्तारत्नं न कैर्भवान्॥' 'आदाय चापमचलं कृत्वा हीनं गुणं विषमदृष्टिः[1]। यश्चित्रमच्युतशरो लक्ष्यमभाङ्क्षीन्नमस्तस्मै॥' अचलं पर्वतं निश्चलं च। अहीनां सर्पाणामिनं स्वामिनं हीनं च। विषमा त्रिरूपा अस्थिरा च। अच्युतः कृष्णः मतिशून्यश्च॥ 'अखण्डमण्डलः श्रीमान्यस्यैष[2] पृथिवीपतिः। न निशाकरवज्जातु कलावैकल्यमागतः॥' इत्यादौ च एकविषयरूपकविरोधव्यतिरेकानुग्राहकः श्लेष इति संकर एवायम्। एवम-

---

१. 'दृष्टिः' स्यात्. २. 'पश्यैष' का० प्र०.

विशन्तु। यतोऽविद्यमानोपशमावस्थं यथा भवत्येवमेते खला अकल्याणं दिशन्त्येव।

संस्कृतपैशाच्योर्यथा—

'चम्पककलिकाकोमलकान्तिकलापाथ[1] दीपिकानङ्गी।
इच्छति गजपतिगमना चपलायतलोचनालपितुम्॥'

संस्कृतशूरसेन्योर्यथा—

'अधरदलं ते तरुणा मदिरामदमधुरवाणि सामोदम्।
साधु पिबन्तु सुपीवरपरिणाह[2]पयोधरारम्भे॥'

सुपीवरेत्याद्यपि संबोधनपदम्।

संस्कृतापभ्रंशयोर्यथा—

'क्रीडन्ति प्रसरन्ति मधु कमलप्रणयि लिहन्ति।
भ्रमरा मित्र सुविभ्रमा मत्ता भूरि रसन्ति॥'

एवं द्वियोगान्तरे त्रिचतुर्णां च योगेषु चोदाहार्यम्।

षड्योगो यथा—

'अलोलकमले चित्तललामकमलालये।
पाहि चण्डि महामोहभङ्गभीमबलामले॥'

हे चण्डि देवि, रक्ष। अचपललक्ष्मि, मनःप्रसादनपद्मालये। महामोहस्य जन्मलक्षाभ्यस्ताया अविद्याया भञ्जने उग्रं यद्बलं तेन अकलङ्के॥

उक्तस्यान्येनान्यथाश्लेषादुक्तिर्वक्रोक्तिः।

अन्येन वक्त्रान्यथोक्तस्यान्येन प्रतिवक्त्रा श्लेषाद्भङ्गाभङ्गरूपादन्यथाभिधानं वक्रोक्तिः।

---

१. 'कपोला' रुद्रटे. २. 'परिणाहि' रुद्रटे.

भङ्गाद्यथा—

'किं गौरि मां प्रति रुषा, ननु गौरहं किं,
कुप्यामि कां प्रति, मयीत्यनुमानतोऽहम् ।
जानाम्यतस्त्वमनुमानत एव सत्य-
मित्थं गिरो गिरिभुवः कुटिला जयन्ति ॥'

अभङ्गाद्यथा—

'कोऽयं द्वारि, हरिः, प्रयाह्युपवनं शाखामृगस्यात्र किं,
कृष्णोऽहं दयिते, बिभेमि सुतरां कृष्णादहं वानरात्, ।
कान्तेऽहं मधुसूदनो, व्रज लतां तामेव मध्वन्विता-
मित्थं निर्वचनीकृतो दयितया ह्रीतो हरः[1] पातु वः ॥'

काकुवक्रोक्तिस्त्वलंकारत्वेन[2] न वाच्या । पाठधर्मत्वात्[3] । तथा च अभिप्रायवान् पाठधर्मः[4] काकुः स कथमलंकारी स्यादिति यायावरीयः

न्यत्राप्यूह्यमिति ॥ **अत इति** । अस्मादनुमानात् । न उमा अनुमा[1] अर्थात्संध्या तस्या नत इत्यपि ॥ **काकुवक्रोक्तिरिति** । 'कक लौल्ये' इत्यस्य धातोः काकुशब्दः । तत्र हि साकाङ्क्षनिराकाङ्क्षादिक्रमेण पठ्यमानोऽसौ शब्दः प्रकृतार्थादतिरिक्तमपि वाञ्छतीति लौल्यमस्याभिधीयते । यदि वा ईषदर्थे कुशब्दस्तस्य कादेशः, तेन हृदयस्थवस्तुप्रतीतेरीषद्भूमिः काकुः । काकुर्वा जिह्वा तद्व्यापारसंपाद्यत्वात्काकुः । तद्रूपा वक्रोक्तिः काकुवक्रोक्तिरिति ॥ **पाठधर्मत्वा-**[2]

१. 'हरिः' स्यात्. २. 'विस्पष्टं क्रियमाणादक्लिष्टा स्वरविशेषतो भवति । अर्थान्तरप्रतीतिर्यत्रासौ काकुवक्रोक्तिः ॥' इति रुद्रटे तल्लक्षणं ज्ञेयम्. ३. 'पाठ्य' स्यात्. ४. 'पाठ्य' स्यात्.

१. 'अनुपमा' इत्येवं कैश्चित्पश्चाच्छोधितः पाठः. २. 'पाठ्य' इति स्यात्. अत एव 'पाठ्यगुणानिदानीं वक्ष्यामः' इत्युपक्रम्य 'तद्यथा—सप्त स्वराः तु' इत्याद्यभिधानमुपलभ्यते.

गुणीभूतव्यङ्ग्यप्रभेदः एव चायम्, शब्दस्पृष्टत्वेनार्थान्तरप्रतीतिहेतुत्वात्।
यदाह ध्वनिकारः—

'अर्थान्तरगतिः काक्वा या चैषा परिदृश्यते।
सा व्यङ्ग्यस्य गुणीभावे प्रकारमिममाश्रिता॥'

---

दिति। तथा च भरतः—'सप्त स्वरास्त्रीणि स्थानानि चत्वारो वर्णा द्विविधा काकुः षडलंकाराः षडङ्गानीति पाठ्यगुणाः। तत्र काकौ स्वरा एव वस्तुत उपकारिणः। तत्परिकरभूतं तु स्थानादि। स्वरेषु प्रकृतिभूतेषु काकुरूपता जन्यते। तत्र स्थानशब्देनैषां स्वरूपनिष्पत्तेराश्रयो दर्शितः। उदात्तानुदात्तस्वरितकम्पितरूपतया स्वराणां यद्रक्तप्रधानत्वमनुरणनमयं तत्त्यागेनोच्चनीचमध्यमस्थानस्पर्शित्वमात्रं पाठ्योपयोगीति दर्शितम्। यदि हि स्वरमतारक्तिः पाठ्ये प्राधान्येनावलम्ब्यते तदा नागक्रियासौ स्यात्, न पाठः। अत एव गानवैलक्षण्ये संपन्ने वाद्यार्थसमर्पणेन चित्तवृत्तिसमर्पणया वाभिनयानुभावरूपतालाभाय काकुरर्थरसभेदेनाभिधीयते। तत एव काकुरूपत्वमेव सर्वत्रानुयायि, अभिनयत्वे मुख्यापयोगात्[1]। तथा चोच्चदीप्तायलंकारेष्वपि काकुशब्देनैव मुनिर्व्यवहरति। काकोरेव हि प्रकारसंपादकाः परिपूर्णताधायिनोऽलंकाराः। अलमिति पर्याप्त्यर्थ इह, न भूषणार्थः। अङ्गानि तु विच्छेदादीनि समर्थं शोभादिकं च पोषयितुं काकोरेवोपकारीणीत्येवं[2] परमार्थतः काकुरेवेयं पञ्चमी[3] रूपान्तरैः पूर्णीक्रियते। काक्वा च पठ्यमानस्य स्वोचितचिज्जडरूपार्थाभिमुख्यनयनेनाभिनयतादीयत इति काकुरेवात्र प्रधानमिति। तत्र च सप्तस्वराः—षड्जऋषभगान्धारमध्यम[4]धैवतनिषाद[5]वन्तः। एते रसेषूपपाद्याः—'[6]हास्यशृङ्गारयोः कार्यौ स्वरौ मध्यमपञ्चमौ। षड्जर्षभौ तु कर्तव्यौ वीररौद्राद्भुतेष्व[7]थ॥ निषादवान् सगान्धारः[8] करुणे संविधीयते। धैवतश्चापि[9] कर्तव्यो बीभत्से सभयानके॥' त्रीणि स्थानानि—उरः कण्ठः शिर इति। अयमर्थः—शारीर्यां वीणायां केवलमुरःशिरःकण्ठलक्षणेभ्यस्त्रिभ्य एव स्थानेभ्यो न तु षड्जष्टः[10](?), स्वरः परित्यक्तरञ्जनात्मकगानोपयोगिस्वव्यापारः

---

१. 'मुख्योप' क. २. 'रेवाप' क. ३. 'पञ्चभी' स्यात्. ४. 'पञ्चम'पदं त्रुटितं भरते. ५. 'निषादाः। त एते' भरते. ६. 'यथा' इत्यपीतः प्राग्भरते. ७. 'षु च' भरते. ८. 'गान्धारश्च निषादश्च कर्तव्यः करुणे रसे' भरते. ९. 'धैवतश्चैव' भरते. १०. 'षड्भ्योऽष्टभ्यः(?)' स्यात्.

काकुभूतः संप्रवर्तते । बाह्यायां हि वीणायां प्रतिबिम्बात्मिकायां रञ्जनात्मकस्वरस्वरूपव्यतिरेकेण न काकुसंपत्तिः ॥ यदाह—'शीरार्यामथ वीणायां त्रिभ्यः स्थानेभ्य एव तु । उरसः शिरसः कण्ठात्स्वरः काकुः प्रवर्तते ॥' तत्र उरोनिष्पन्नेन तारेण दूरस्थानामाभाषणविधिः कार्यः । यद्वा मन्द्रस्वरेण पाठमारभ्य क्रमेण तारं गत्वा मध्येन परिसमाप्नुयादित्यभिप्रायः ॥ उदात्तानुदात्तस्वरितकम्पिता वर्णाः । तत्र हास्यशृङ्गारयोः स्वरितोदात्तैर्वर्णैः पाठ्यमुपपाद्यम् । वीररौद्राद्भुतेषूदात्तकम्पितैः[1] । करुणबीभत्सभयानकेष्वनुदात्तकम्पितैरिति ॥ द्विविधा तु काकुः साक्षादत्रैव प्रतिपादयिष्यते ॥ 'उच्चो दीप्तश्च मन्द्रश्च नीचो द्रुत[2]विलम्बितौ । पाठ्यास्यैते[3] ह्यलंकाराः[4]–' इति । उच्चो नाम शिरःस्थानगतस्तारः । स च दूरस्थाभाषणविस्मयोत्तरोत्तरसंजल्पत्रासनावादाद्येषु[5] ॥ दीप्तो नाम शिरःस्थानगतस्तारतरः । स चाक्षेपकलहविवादामर्षोत्क्रुष्टाधर्षणशौर्यदर्पतीक्ष्णरूक्षाभिधाननिर्भर्त्सनाक्रन्दादिषु ॥ मन्द्रो नामोरःस्थानस्थः निर्वेदग्लानचिन्तौत्सुक्यदैन्यव्याधिगाढशस्त्रक्षतमूर्च्छामदादिषु ॥ नीचो नामोरःस्थानस्थो मन्द्रतरः । स स्वभावाभाषणव्याधितपःश्रान्तत्रस्तपतितमूर्च्छादिषु ॥ द्रुतो नाम कण्ठगतस्त्वरितलल्लमन्मनभयशीतज्वरार्तत्रस्तायस्तात्ययिककार्यावेदनादिषु । लल्लं सविलासम् । मन्मनमव्यक्तम् । अहमेव मनो मन्ता यत्रेत्यनेनाश्रूयमाणम् । लल्लमन्मनौ नायिकागतावेव बालविनोदनसान्त्वनादौ । मुञ्च मुञ्चेत्येवंप्रायपराभियोगानङ्गीकरणादौ वेति । आत्ययिकं शीघ्रसंपाद्यं यत्कार्यं तस्यावेदनम् ॥ विलम्बिता[6] नाम कण्ठस्थानस्थो मन्द्रः । शृङ्गारवितर्कविचारामर्षासूयिताव्यक्तार्थप्रवादलज्जाचिन्तातर्जितविस्मितदीर्घरोगनिपीडनादिषु । 'हास्यशृङ्गारकरुणेष्विष्टा काकुर्विलम्बिता[7] । वीररौद्राद्भुतेषूच्चा दीप्ता चापि प्रशस्यते ॥ भयानके सबीभत्से द्रुता नीचा च कीर्तिता । एवं भावरसोपेता काकुः कार्या प्रयोक्तृभिः ॥' अङ्गानि—विच्छेदोऽर्पणं विसर्गोऽनुबन्धो दीपनं प्रशमनमिति ॥ तत्र विच्छेदो नाम विरामकृतः । अर्पणं नाम लीलायमानमधुरवल्गुस्वरेण पूरयतेव रङ्गं यत्पठ्यते । विसर्गो नाम वाक्यन्यासः । अनुबन्धो नाम पदान्तरेष्वविच्छेदोऽनुच्छ्वसनम् । दीपनं नाम वि[8]स्थानशोभि वर्धमानस्वरं च । प्रशमनं नाम तारगतानां स्वरा-

१. 'वात्सल्य' भरते. २. 'ह्रस्व' भरते. ३. 'पाठ्यस्यैते' भरते. ४. 'लक्षणं च निबोधत' इत्यस्याग्रे भरते. ५. 'त्रासनार्थं वाद्येषु' भरते. ६. 'ह्रस्वो' भरते. ७. 'विलम्बितो' भरते. ८. 'त्रिस्थान' भरते.

सा च काकुर्द्विधा—साकाङ्क्षा निराकाङ्क्षा च । वाक्यस्य साकाङ्क्षनिराकाङ्क्षत्वात् । यस्माद्वाक्यात् यादृशः संकेतबलेनार्थः प्रतीयते, न तादृश एव, किं तु न्यूनाधिकः प्रमाणबलेन निर्णययोग्यस्तद्वाक्यं साकाङ्क्षम् । तद्विपरीतं निराकाङ्क्षम् । वक्तृगता ह्याकाङ्क्षा वाक्ये उपचर्यते । सा च प्रकरणबलान्निश्चीयते । विशिष्टविषयत्वं च तस्यास्तत एवावसीयते ॥

विषयोऽपि त्रिविधः—अर्थान्तरम्, तदर्थगत एव विशेषः, तदर्थाभावो वा । यथा—

'देशः सोऽयमरातिशोणितजलैर्[1]—'

---

णामेवैश्वर्येणावतरणम् ॥ तत्र हास्यशृङ्गारयोरर्पणविच्छेददीपनप्रशमनसंयुक्तम् । करुणे विच्छेदप्रशमनार्पणदीपनानुबन्धबहुलम् । वीररौद्राद्भुतेषु विसर्गविच्छेदार्पणयुक्तम् । बीभत्सभ[1]यानकयोरिति । सर्वेषामप्येतेषां मन्द्रमध्यतारकृतः प्रयोगस्त्रिस्थानस्थो भवति । तत्र दूरस्थाभाषणे तारं शिरसा, नातिदूरे मध्यं कण्ठेन, पार्श्वतो मन्द्रमुरसा प्रयोजयेत्पाठ्यमिति ॥ मन्द्रात्तारं गच्छेत्ताराद्वा मन्द्रमिति । तदेवं ध्वनिधर्मविशेषस्य काकोः पा[2]ठः । धर्मत्वमवस्थितम् ॥ **साकाङ्क्षमिति** । मन्द्रादितारान्तम[3]परिसमाप्तवर्णालंकारं कण्ठोरःस्थानगतं यथा भवति तथैतत्पठनीयम् ॥ **तद्विपरीतमिति** । यादृशो वाक्यात्संकेतबलेनार्थः प्रतीयते तादृश एव यत्रान्यूनाधिकः प्रमाणबलेन निर्णययोग्यस्त[4]दति ॥ **निराकाङ्क्षमिति** । मन्द्रादितारान्तं प[5]रिसमाप्तवर्णालंकारं शिरःस्थानगतं यथा भवति

---

१. '..................यस्मिन्ह्रदाः पूरिताः
क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहात् ।
तान्येवाहितहेतिघस्मरगुरूण्यस्त्राणि भास्वन्ति मे
यद्रामेण कृतं तदेव कुरुते द्रोणात्मजः क्रोधनः ॥'
इति शेषपूरणे संपूर्णः श्लोको वेणीसंहारे.

---

१. 'भयानकयोर्विसर्गविच्छेदाकाङ्क्षिण(?)प्रायम्' इति भरते उपलम्भादत्र पाठत्रुटितः प्रतीयते. २. 'पाठ्यधर्मत्व' स्यात्. ३. 'अनियुक्तार्थमनिर्यातितवर्णा' भरते. ४. 'तदिति...' स्यात्. ५. 'नियुक्तार्थ निर्यातित' भरते.

इति । अत्र साकाङ्क्षकाकुप्रभावात् 'ततोऽभ्यधिकं[1] कुरुते' इत्यर्थान्तरे गतिः ॥

'स यस्य दशकंधरं कृतवतोऽपि कक्षान्तरे
गतः स्फुटमवन्ध्यतामधिपयोधि सांध्यो विधिः ।
तदात्मज इहाङ्गदः प्रहित एष सौमित्रिणा
क्व स क्व स दशाननो ननु निवेद्यतां राक्षसाः ॥'

अत्र 'तदात्मज इहाङ्गदः' इति साकाङ्क्षया काक्वा स्वगता वालिपुत्रोचिता विशेषा अर्प्यन्ते ॥

'निर्वाणवैरदहनाः[2]—'

इति । अत्र भवन्तीति[3] साकाङ्क्षाकाकुर्भवनाभावमाह । भवन्तीति[4]

---

तथेदं पठनीयमित्यर्थः ॥ **काकुप्रभावादिति** । उदात्तकम्पितवर्णस्योच्चदीप्तालंकारस्य वासमाप्त्या या काकुपठितिस्तत्प्रभावादित्यर्थः । एवमुत्तरत्रापि साकाङ्क्षकाकूदाहरणद्वये व्याख्येयम् ॥ ननु श्रुतमर्थमनादृत्य कथं काकुरर्थान्तरं प्रतिपादयेत्। तत्रोक्तमन्यैः—'वस्तुस्वभावोऽत्र दृष्टव्यः, नहि दृष्टेऽनुपपन्नं नाम' इति। वयं तु ब्रूमः–इह येयं प्रथमेन संवित्स्यन्देन प्राणोल्लासया वर्णादिरूपविशेषहीना वागजन्यते सा नादरूपा सती हर्षोत्कादिच्चित्तवृत्तिं विधिनिषेधाद्यभिप्रायं वा तत्कार्यलिङ्गतया तादात्म्येन वा गमयतीति तावत्स्थितम्। तथा च प्राण्यन्तरस्य मृगसारमेयादेरपि नादमाकर्ण्य भयरोषशोकादि प्रतिपद्यते तदयं नादाच्चित्तवृत्त्याद्यवगमोऽनुमानं तावत् । ने त्वेते वर्णविशेषास्ते तन्नादरूपसामान्यात्मकवाक्तन्तुग्रन्थिमया इव प्राच्यप्रयत्नातिरिक्तनिमित्तान्तरापेक्षास्तत एवान्यत्राप्यभि-

---

१. 'ततोऽप्यधिकं' स्यात्.

२. 'निर्वाणवैरिदहनाः प्रशमादरीणां नन्दन्तु पाण्डुतनयाः सह माधवेन ।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥'

इति संपूर्णश्लोको वेणीसंहारे द्रष्टव्यः.

३.–४. 'भवन्त्विति' स्यात्, नाटके वा 'भवन्ति' इति स्यात्, विवेकसंवादात्.

वचनोच्चारणं त्वर्थेऽसंभावनां विदधदभावस्य निषेधात्मनो विषयं भवनलक्षणमर्पयति । न भवन्त्येवेत्यर्थः ॥

**भिन्ना कृतेः शब्दस्यैकार्थतेव पुनरुक्ताभासः ।**

भिन्नरूपाणां सार्थकानर्थकानां शब्दानामेकार्थत्वमिवामुखे, न पुनः परमार्थतः, पुनरुक्तवदाभासनं **पुनरुक्ताभासः** ।

यथा—

'सत्त्वं सम्यक्समुन्मील्य हृदि भासि विराजसे ।
द्विषामरीणां त्वं सेनां वाहिनीमुदकम्पयः ॥'

हे देवि, विगतरजोविकारे हृदि सत्त्वाख्यं गुणं प्रकाश्य शोभसे । अरीणामखिन्नां सनायकां चमूमुत्कम्पितवती । अत्र 'भासि'-'विराजसे'-इत्यादिशब्दाः सार्थकाः । 'उदकम्'-'पयः'-शब्दौ निरर्थकौ ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायामलंकारचूडामणिसंज्ञस्वोपज्ञकाव्यानुशासनवृत्तौ शब्दालंकारवर्णनः पञ्चमोऽध्यायः ।

---

प्रेतेऽन्यथापि प्रयोक्तुं शक्याः । अत एव दृष्टव्यभिचाराः । नादस्तु झटित्युद्भिन्नमुखरागपुलकस्थानीयो नान्यथाकर्तुं पार्यत ईत्यन्यथासिद्धोऽन्यथासिद्धं शब्दार्थं बाधत एव वा यथोक्तं भीरुर्नाम भयमिति । अन्यप्रकारतां वा वाक्यार्थस्य विशेषार्पणेन विधत्ते ॥ **वचनोच्चारणमिति** । वचनस्य भवन्तीति रूपस्य ॥

इत्याचार्यश्रीहेमचन्द्रविरचिते विवेके पञ्चमोऽध्यायः ।

---

१. 'इत्यनन्यथासिद्धो' स्यात्.

षष्ठोऽध्यायः ।

अथार्थालंकाराणामेकोनत्रिंशतमाह—

**हृद्यं साधार्म्यमुपमा ।**

कार्यकारणयोरसंभवादुपमानोपमेययोरेव साधर्म्यं भवतीति तयोरेव समानेन धर्मेण संबन्ध उपमा । हृद्यं सहृदयहृदयाह्लादकारि । तेन सत्त्वज्ञेयत्वप्रमेयत्वादिसाधर्म्यं नोपमा । तथा 'कुम्भ इव मुखम्' इत्यादि शृङ्गारादौ । हास्यादौ तु न दोषः । हृद्यग्रहणं च प्रत्यलंकारमुपतिष्ठते । साधर्म्यं च देशादिभिर्भिन्नानां गुणक्रियादिसाधारणधर्मवत्त्वम् । अभेदे ह्येकत्वमेव स्यात् । तेन 'पुरुष इव पुरुषः' इति सत्यपि पुरुषद्वयस्य पुरुषत्वानुगमनलक्षणे साम्ये नोपमा । यदा तु द्वितीयः पुरुषशब्दः शक्तिमूलव्यङ्ग्यपरतयावदातकर्मवचनः, तदानीं भिन्नत्वाद्भवत्येव ।

यथा—

'निघ्नन्नभिमुखः शूरोऽनेकशो बहुशः परान् ।
संग्रामे विचरत्येष पुरुषः पुरुषो यथा ॥'

एवं च यत्रासाधारणताप्रतिपादनार्थमेकस्यापि भेदः कल्प्यते, तत्राप्युपमा भवति ।

---

**एकोनत्रिंशतमिति** । उपमोत्प्रेक्षारूपकनिदर्शनदीपकान्योक्तिपर्यायोक्तातिशयोक्त्याक्षेपविरोधसहोक्तिसमासोक्तिजातिव्याजस्तुतिश्लेषव्यतिरेकार्थान्तरन्याससंदेहापह्नुतिपरिवृत्त्यनुमानस्मृतिभ्रान्तिविषमसमसमुच्चयपरिसंख्याकारणमालासंकरान् ॥ **असाधारणताप्रतिपादनार्थमिति** । एतत्सदृशमन्यं नास्तीत्यसाधारणता तत्प्रतिपादनार्थमित्यर्थः । यथा 'उभौ यदि व्योम्नि पृथक्प्रवाहौ' इत्यादौ कल्पितोपमायामन्यैरुत्पाद्योपमेत्यपरैरतिशयोक्तिरिति च व्यपदेश्यायां वर्णनीयस्य वस्तुनः प्राप्तोत्कर्षस्य धर्मस्य च साम्यसमन्वयसमुद्भवसातिशयत्वविरहात्सर्वेषां पुराणानां पदार्थानां नूतनमसद्भूतं किमपि काल्पनिकमुपमानं धर्मान्तरं वा विवक्षितसातिशयत्वसंपत्तये कवयः समुल्लिखन्ति तथानन्वयेऽपि वर्ण्यमानसौकुमार्यमाहात्म्यात्काल्पनिकमप्युपमानमुपपन्नम् ॥ ननु वास्तवस्य

यथा—

'न केवलं भाति नितान्तकान्तिर्नितम्बिनी सैव नितम्बिनीव।
यावद्विलासायुधलासवासास्ते तद्विलासा इव तद्विलासाः॥'

तत्र देशेनोपमानोपमेययोर्भेदो यथा—'मधुरेव पाटलिपुत्रमाढ्यजनपदम्'।

कालेन यथा—'वसन्त इव हेमन्तः कामिनीसुखहेतुः'।

क्रियया यथा—'नृत्यमिव गमनमस्याः सविलासम्'।

गुणेन यथा—'गौरीव श्यामा सुभगा'।

जात्या यथा—'विप्र इव क्षत्रियः श्रोत्रियः'।

द्रव्येण यथा—'तीर्थंकर इव गणधरः पूज्यः'।

समवायेन यथा—'विषाणित्वमिव दंष्ट्रित्वं हिंस्रम्'।

अभावेन यथा—'मोक्ष इव समाधौ दुःखाभावः'।

---

द्वित्वस्याविद्यमानत्वात् उभयनिष्ठत्वाच्चोपमानोपमेयभावव्यवस्थितेरुपमया सह लक्षणानन्यत्वमनन्वयस्य न संभवतीत्याशङ्क्याह—**एकस्यापि भेदः कल्प्यत इति**। अयमभिप्रायः—समारोपितरूपस्य द्वित्वस्याभ्युपगमादुपमानोपमेयभावसंबन्धनिबन्धनत्वमुपमाया लक्षणं विद्यत एवेति [1]नान्वयः पृथगलंकारत्वेन वाच्य इति॥ विलासायुधः कामः। अत्र सैव नितम्बिनीवेत्येतत्तद्विलासा इवेत्येतच्चोपमानतया विश्रान्तिमलभमानमन्यव्यावृत्तौ लक्षणयावतिष्ठते॥ **विषाणित्वमिव दंष्ट्रित्वमिति**। अत्र 'समासकृत्तद्धितेषु संबन्धाभिधानम्' इति वचनात्संयोगस्य चाभावादर्थात्समवायस्य संभवाद्यस्य गुणस्य हि भावाद्द्रव्ये शब्दनिवेशस्तदभिधाने 'त्वतलौ' इति त्वप्रत्ययेन समवायस्याभिधानम्। तस्य च सत्यप्येकत्वे उपाधिनिबन्धनं भेदकल्पनं न्याय्यम्। ततश्च विषाणोपाधिकः समवाय उपमानं दंष्ट्रोपाधिकस्तूपमेय इति॥ **मोक्ष इवेति**। मोक्षे दुःखाभाव इव समाधौ दुःखाभाव [2]इति भावः॥ [[3]**नित्यसमास इति**। ये त्विवेन समासं नेच्छन्ति,

---

१. 'नानन्वयः' स्यात्. २. 'इत्यर्थः' ख. ३. अयं कोष्टकान्तर्गतः पाठोऽत्र लेखकप्रमादात्पतितो भवेत्. अग्रे 'नेत्रैरिवो—' इत्येतच्छ्लोकप्रकरणे 'इवेन नित्यसमासः' इत्यस्य व्याख्यारूपो भवेत्.

**सोपमानोपमेयधर्मोपमावाचकानामुपादाने पूर्णा वाक्ये वृत्तौ च।**

सेत्युपमा। प्रसिद्धमुपमानमप्रसिद्धमुपमेयम्। प्रसिद्ध्यप्रसिद्धी च कविविवक्षावशादेव। धर्मो मनोज्ञत्वादिः। उपमावाचका इव-वा-यथा-शब्दाः सदृशसंनिभादयश्च। अमीषामुपादाने पूर्णा। सा च वाक्ये वृत्तौ च भवति।

वाक्ये यथा—

'क्षणं कामज्वरोच्छित्त्यै भूयःसंतापवृद्धये।
वियोगिनामभूचान्द्री चन्द्रिका वदनं यथा॥'

---

तन्मते वाक्योपमायामिदमुदाहरणम्। समासोपमायां तु—'अवितथमनोरथपथप्रथनेषु प्रगुणगरिमगीतश्रीः। सुरतरुसदृशः स भवानभिलषणीयः क्षितीश्वर न कस्य॥' इत्युदाहार्यम्॥] **प्रसिद्धमिति**। इन्दुमुखी कन्या इत्यादौ प्रसिद्धं चन्द्रादि उपमानम्, प्रसिद्धं तु मुखाद्युपमेयम्। ननु 'ततः कुमुदनाथेन कामिनीगण्डपाण्डुना। नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलंकृता॥' इत्यादौ कामिनीगण्डादेरुपमानत्वं चन्द्रादेश्चोपमेयत्वमुपलभ्यते, तत्कथमुच्यते प्रसिद्धमुपमानमप्रसिद्धमुपमेयमित्याशङ्क्याह—**प्रसिद्ध्यप्रसिद्धी चेति**। तथा हि स्त्रीमात्रस्य गण्डपाण्डुतायाः कल्पनानुपपत्तेः। कामयते प्रियतममिति यौगित्वाश्रयणे[1] कामिनीशब्दात्प्रतीयमानहृदयस्थितदुर्लभमनोहारिप्रियतमाया गण्डश्चन्द्रादप्यधिकचमत्कारदायित्वेन प्रधानतया प्रसिद्ध इति कविविवक्षावशादेव प्रसिद्ध्यप्रसिद्धी अङ्गीक्रियेते। न सर्वलोकप्रसिद्ध्येत्यर्थः। यैरपि प्राकरणिकमुपमेयमप्राकरणिकमुपमानमिति पक्षः समाश्रीयते, तैरपि कविप्रसिद्धिरवश्यमङ्गीकर्तव्यैव। तथा हि चन्द्रकामिनीगण्डादिना प्रसिद्धगुणेनाप्राकरणिकेन प्राकरणिकं मुखचन्द्राद्यप्रसिद्धगुणमुपमीयते। उप समीपे नीयते क्षिप्यते स्वसादृश्यपरिप्रापणादुपमेयं येन तदुपमानम्। यत्तु तेन समीपे क्षिप्यते सौन्दर्यादिगुण-

---

१. 'यौगिकत्वा' स्यात्.

परार्थाभिधानं वृत्तिः । सा च यद्यपि समासतद्धितनामधातुभेदेन त्रिविधा लुप्तायामुदाहरिष्यते, तथापीह समासतद्धितयोरेव संभवति । यथा—

'नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरःश्रियः ।
तरुण्य इव भान्ति स्म चक्रवाकैः स्तनैरिव ॥'

अत्रेवेन नित्यसमासः ।

'गाम्भीर्यमहिमा तस्य सत्यं गङ्गाभुजङ्गवत् ।
दुरालोकः स समरे निदाघाम्बररत्नवत् ॥'

अत्रेवार्थे तुल्यार्थे च वतिस्तद्धितः ।

**एकद्वित्रिलोपे लुप्ता ।**

उपमानादीनां मध्यादेकस्य द्वयोस्त्रयाणां वा यथासंभवं लोपे लुप्तोपमा । सा च वाक्ये वृत्तौ च ।

एकलोपे वाक्यगता यथा—

'अनाधिव्याधिसंबाधममन्दानन्दकारणम् ।
न किंचिदन्यदस्तीह समाधेः सदृशं सखे ॥'

अत्र यद्यपि सदृशशब्दाभिधेयस्योत्कृष्टतरगुणत्वेनाप्राप्यताप्रतिपादनादुपमानत्वं बलादायातम्, तथापि तस्य साक्षादनिर्देशादुपमानस्य लोपः ।

तथा—

'धन्यस्यानन्यसामान्यसौजन्योत्कर्षशालिनः ।
करणीयं वचश्चेतः सत्यं तस्यामृतं यथा ॥'

अत्राह्लादकत्वादिधर्मलोपः । उपमेयोपमावाचकयोस्तु वाक्ये लोपो न संभवति ।

द्विलोपे यथा—

'ढुण्ढिल्लिन्तु मरीहिसि कण्टयकलियाइं केयइवणाइं ।
मालइकुसुमेण समं भमर भमन्तो न पाविहिसि ॥'

अत्र धर्मोपमानयोर्लोपः ।

वृत्तौ एकलोपे यथा—

'अनाधिव्याधिसंबाधममन्दानन्दकारणम् ।
न किंचिदन्यदस्तीह समाधिसदृशं सखे ॥'

अत्र समासे उपमानस्यानिर्देशः ।

तथा—

'राजीवमिव ते वक्रं नेत्रे नीलोत्पले इव ।
रम्भास्तम्भाविवोरू च करिकुम्भाविव स्तनौ ॥'

अत्रेवेन नित्यसमासे धर्मलोपः ।

तथा—

'शरदिन्दुसुन्दरमुखी कुवलयदलदीर्घलोचना सा मे ।
दहति मनः कथमनिशं रम्भागर्भाभिरामोरूः ॥'

अत्र बहुव्रीहौ उपमावाचकलोपः ।

तथा—

'मृधे निदाघघर्मांशुदर्शं पश्यन्ति ते परे ।
स पुनः पार्थसंचारं संचरत्यवनीपतिः ॥'

अत्र नित्यसमासे 'कर्मकर्त्रोर्णमि' इव-लोपः ।

---

१. 'ढुण्ढुज्जन्त' का० प्र०.

२. 'अन्वेषयन्मरिष्यसि कण्टककलितानि केतकीवनानि ।
मालतीकुसुमेन समं भ्रमर भ्रमन्नपि न प्राप्स्यसि ॥' [इति च्छाया।]

तथा—

'हंसो ध्वाङ्क्षविरावी स्यादुष्ट्रक्रोशी च कोकिलः।
खरनादी मयूरोऽपि त्वां चेद्वदसि वाग्मिनि॥'

अत्र नित्यसमासे कर्तरि णिनि चोपमावाचकलोपः।

यथा वा—

'पूर्णेन्दुकल्पवदना मृणालीदेश्यदोर्लता।
चक्रदेशीयजघना सा स्वप्नेऽपि न दृश्यते॥'

अत्र तद्धितवृत्तौ धर्मलोपः। इवार्थश्च कल्पबादिभिः साक्षादभिहितः। ईषदपरिसमाप्तः पूर्णेन्दुरिति पूर्णेन्दुसदृशमित्यर्थो न तु पूर्णेन्दुरेवेति ईषदपरिसमाप्तिविशिष्टेऽर्थे कल्पबादीनां स्मरणात्। ईषदपरिसमाप्तः पूर्णेन्दुरिति वचनवृत्त्या यद्यपि रूपकच्छायां भजते, तथापि प्रातीतिकेन रूपेणोपमैव। तथा ह्यत्र पूर्णेन्दुसदृशं वदनमित्ययमर्थः प्रतीयते, न त्वीषदपरिसमाप्तः पूर्णेन्दुरिति।

यथा वा—

सूर्यीयति सुधारश्मिमनाथति मृतायते।
मृतस्तु कान्ताविरहे स्वर्गेऽपि नरकीयति॥'

---

योगित्वेन तत्र प्राकरणिकेऽप्रसिद्धं वदनचन्द्रादि तदुपमेयम्॥ **वचनवृत्त्येति**। सामानाधिकरण्यरूपया। ननु कथमीषदपरिसमाप्तिर्घटते यावता पूर्णेन्दुशब्देन पूर्णेन्दुजातिरुच्यते तदाधारो वा द्रव्यम्। तत्र जातिस्तावदेका निरवयवा चेति सर्वस्मिन्नाश्रये समाप्ता। द्रव्यमपि यत्तया संबद्धं तत्सर्वतः पूर्णत्वात्समाप्तमेव। तस्मादसंभव एवास्याः। सामानाधिकरण्यमपि पूर्णेन्दुकल्पं वदनमिति वदनशब्देन प्राप्नोति तस्यार्थान्तरवाचित्वान्नैष दोषः। इह शब्दादुच्चरितद्वयं प्रती-

---

१. 'त्वं' स्यात्.

अत्र नामधातुवृत्तौ कर्माधारयोः क्यनि कर्तुः क्विपि क्यङि च इव-लोपः ।

द्विलोपे यथा—

'[1]ढुण्ढु[2]ल्लिन्तु मरीहिसि कण्टयकलियाइं केयइवणाइं ।
मालइकुसुमसरित्थं भमर भमन्तो न पाविहिसि ॥'

अत्र कुसुमसदृक्षमिति समासे धर्मस्योपमानस्य च लोपः ।

तथा—

'परिपन्थिमनोराज्यशतैरपि दुराक्रमः ।
संपराये प्रवृत्तोऽसौ राजते राजकुञ्जरः ॥'

अत्र समासे धर्मस्येवस्य च लोपः ।

यथा वा—

'अरातिविक्रमालोकविकस्वरविलोचनः ।
कृपणोदग्रदोर्दण्डः स सहस्रायुधीयति ॥'

---

यते । शब्दार्थो जातिर्द्रव्यं वा । अभिधेयसंबन्धेन वा अशब्दार्थभूता अपि गुणाः । यत्र चैतदुभयमस्ति तत्र परिसमाप्तिः । यत्र त्वन्यतरन्नास्ति तत्रेषद-परिसमाप्तिः । तत्रेह पूर्णेन्दुशब्दः पूर्णेन्दुजातिहीने आह्लादनादिगुणहीने वा द्रव्ये वर्तत इत्युपपद्यते । ईषदपरिसमाप्तिः । सामानाधिकरण्यमुपपद्यत एव कथं । यदा तावत्पूर्णेन्दुजातिहीने केनचित्साधर्म्येण वदनशब्दाभिधेयेऽर्थे वर्तित्वात्पूर्णेन्दु-शब्दः कल्पप्प्रत्ययमुत्पादयति तदा वदनशब्देन सामानाधिकरण्यं भवति । उभयोरेकार्थवृत्तित्वात् । यदा तु गुणहीने पूर्णेन्दुजातीय एव पूर्णेन्दुशब्दस्तदापि यथा गौर्वाहीक इति । सामानाधिकरण्यं तथा भवति । गुणहीनो हि पूर्णेन्दुः पूर्णेन्दुकल्पशब्देनोच्यते तेन च तुल्यं वदनमिति तदपि पूर्णेन्दुकल्पशब्देनाभि-

---

१. 'ढुण्ढुज्जन्त' का० प्र०.

२. 'अन्वेषयन्मरिष्यसि कण्टककलितानि केतकीवनानि ।
मालतीकुसुमसदृक्षं भ्रमर भ्रमन्नपि न प्राप्स्यसि ॥' [इति च्छाया ।]

अत्र नामधातुवृत्तौ सहस्रायुधमिवात्मानमाचरतीत्यात्मा उपमेयः । स चेवादिश्च लुप्तः । आचारलक्षणश्च धर्मः क्यप्प्रत्ययेन साक्षादभिहितः ।

तथा—

'सविता विधवति विधुरपि सवितरति तथा दिनन्ति यामिन्यः ।
यामिनयन्ति दिनान्यपि सुखदुःखवशीकृते मनसि ॥'

अत्र नामधातुवृत्तौ धर्मस्योपमावाचकस्य च लोपः ।

त्रिलोपे यथा—मृगनयनेति ।

मृगस्य नयने इति प्रथमं तत्पुरुषः, ततो मृगनयने इव नयने यस्या इति उष्ट्रमुखादित्वाद्बहुव्रीहिः । अत्र गुणद्योतकोपमानशब्दानां लोपः । यदा तु मृगशब्द एव लक्षणया मृगनयनवृत्तिस्तदा मृग एव नयने यस्या इति रूपकसमासस्यैष विषयः, न त्वस्योपमासमासस्येति नास्ति स्थानमुपमायास्त्रिलोपिन्याः । केचित्तु—अयःशूलेनान्विच्छत्यायःशूलिक इत्यादौ क्रूराचारोपमेयतैक्ष्ण्यधर्मेवादीनां लोपे त्रिलोपिनीमुपमामुदाहरन्ति, तन्न युक्तम् । क्रूरस्याचारस्यार्थान्वेषणोपायादेरयःशूलतयाध्यवसानादतिशयोक्तिरेवायम् ।

एवं दाण्डाजिनिक इत्यादिष्वपि द्रष्टव्यम् ।

---

धायिष्यते ॥ **क्रूराचारोपमेयेति** । तथा ह्यत्रायःशूलमुपमानम्, अर्थान्वेषणोपायः कश्चिदुपमेयः, तीक्ष्णत्वादिः साधारणो धर्मः, उपमानोपमेयभावश्चेति चतुष्टयमवगम्यते तन्मध्याच्च शब्दस्पष्टमुपमानमयःशूलेनेति शिष्टस्य तु त्रितयस्यार्थसामर्थ्यादवगतिरिति ॥ **दाण्डाजिनिक इत्यादिष्वपीति** । तथा हि दम्भस्य दण्डाजिनतयाध्यवसितस्य जीवनक्रियाकरणत्वं दण्डाजिनेनार्थानन्विच्छति दम्भेन जीवतीति दाण्डाजिनिकः । दाम्भिक इत्यर्थः । एवं पार्श्वेनार्थानन्विच्छति । अनृजूपायेन जीवतीति पार्श्वकः । कौसृतिको जालिक

**मालोपमादयस्तूपमाया नातिरिच्यन्ते इति न पृथग्लक्षिताः ।** तथा हि—

'[1]सोह व्व लक्खणमुहं वणमाल व्व वियडं हरिवइस्स उरम् ।
कित्ति व्व पवणतणयं आण व्व बलाइं से [2]वेलग्गए दिट्ठी ॥'

इयमभिन्ने साधारणे धर्मे

'ज्योत्स्नेव नयनानन्दः सुरेव मदकारणम् ।
प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी ॥'

इति भिन्ने वा तस्मिन्नेकस्यैव बहूपमानोपादाने **मालोपमा ।**

तथा—

'याम इव याति दिवसो दिनमिव मासोऽथ मासवद्वर्षम् ।
वर्षमिव यौवनमिदं यौवनमिव जीवितं जगतः ॥'
'नभ इव विमलं सलिलं सलिलमिवानन्दकारि शशिबिम्बम् ।
शशिबिम्बमिव लसद्द्युति तरुणीवदनं शरत्कुरुते ॥'

---

इत्यर्थः । तथा शीतक उष्णक इत्यत्राप्यलसत्वशीघ्रत्वयोः शीतोष्णत्वाभ्यामध्यवसितयोः करणक्रियां प्रति विशेषणत्वं कर्मत्वं च । शीतं करोति शीतकोऽलसः । जड इत्यर्थः । एवमुष्णकः शीघ्रकारी दक्ष इत्यर्थः । तथैव च 'श्वा मुमूर्षति', 'अश्मा लुलुठिषते', 'कूलं पिपतिषति' इत्यादि ॥ भाष्यकारस्यापि चैवमादावतिशयोक्तिभेदत्वमेवेष्टम् । यदाह—'न तिङन्तेनोपमानमस्ति' । आख्यातं नोपमानं भवतीत्यर्थः । एवं वर्तमानसामीप्यादावतिशयोक्तिभेदत्वं यथाप्रतीति योज्यम् । तथा च—'सत्सामीप्ये सद्वद्वा' इति वर्तमानसमीपे भूते भविष्यति च वर्तमानवत्प्रत्यया भवन्ति । कदा देवदत्त आगतोऽसि । अयमागच्छामि । आगच्छन्तमेव मां विद्धि । अयमागमम् । एषोऽस्म्यागतः । कदा देवदत्त,

---

१. 'शोभेव लक्ष्मणमुखं वनमालेव विकटं हरिपतेरुरः ।
कीर्तिरिव पवनतनयमाज्ञेव बलान्यस्य विलगति दृष्टिः ॥' [इति च्छाया ।]

२. 'विलग्गइ' सेतुबन्धे.

अत्र यथोत्तरमुपमेयस्योपमानत्वे पूर्ववदभिन्नभिन्नधर्मत्वे **रसनोपमा** ॥

'अलिवलयैरलकैरिव कुसुमस्तबकैः स्तनैरिव वसन्ते ।
भान्ति लता ललना इव पाणिभिरिव किसलयैः सपदि ॥'

तथा—

'कमलदलैरधरैरिव दशनैरिव केसरैर्विराजन्ते ।
अलिवलयैरलकैरिव कमलैर्वदनैरिव नलिन्यः ॥'

अत्रोपमानोपमेययोरवयविनोः **समस्तविषया,** अवयवानां च **एकदेशविषया** ॥

'तवाननमिवाम्भोजमम्भोजमिव ते मुखम् ।
निलीनां नलिनीखण्डे कथं तु त्वां लभेमहि ॥'

अत्रोभयोरुपमेयत्वे उपमानत्वे **चोपमेयोपमा** ॥

'त्वन्मुखं त्वन्मुखमिव त्वद्दृशौ त्वद्दृशाविव ।
त्वन्मूर्तिरिव मूर्तिस्ते त्वमिव त्वं कृशोदरि ॥'

अत्रैकस्यैवोपमानोपमेयत्वेऽ**नन्वयः** ॥

'उभौ यदि व्योम्नि पृथक्प्रवाहावाकाशगङ्गापयसः पतेताम् ।
तेनोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ॥'

अत्रासद्भूतस्योपमानसंभावनाद**ुत्पाद्योपमा** ॥

'तासां तु पश्चात्कनकप्रभाणां काली कपालाभरणा चकाशे ।
बलाकिनीनीलपयोदराजिः पुरः परिक्षिप्तशतह्रदेव ॥'

अत्र यथेष्टं विशेषणैरुपमेयं परिकल्प्य तादृशमेव सिद्धमुपमानमुपात्तमिति **कल्पितोपमे**त्यादि । आसां हि पृथग्लक्षणकरणे एवंविधवैचित्र्यसहस्रसंभवादतिप्रसङ्गः स्यादिति ॥

**असद्धर्मसंभावनमिवादिद्योत्योत्प्रेक्षा ।**

प्राकरणिकेऽर्थे ये धर्मा गुणक्रियालक्षणास्तदभावलक्षणा वा तेषां संभावनं तद्योगोत्प्रेक्षणमुत्प्रेक्षा । सा चेव-मन्ये-शङ्के-ध्रुवं-प्रायो-नूनमित्यादिभिः शब्दैर्द्योत्यते ।

यथा—

'बलं जगध्वंसनरक्षणक्षमं क्षमा च किं संगमके कृतागसि ।
इतीव संचिन्त्य विमुच्य मानसं रुषेव रोषस्तव नाथ निर्ययौ ॥'

अत्र रोषलक्षणस्य गुणस्योत्प्रेक्षा ॥

'असंतोषादिवाकृष्टकर्णयोः प्राप्तशासनः ।
स्वधाम कामिनीनेत्रे प्रसारयति मन्मथः ॥'

अत्र संतोषगुणाभावस्य ॥

'वियति विसर्पतीव कुमुदेषु बहूभवतीव योषितां
प्रतिफलतीव जरठशरकाण्डविपाण्डुषु गण्डभित्तिषु ।
अम्भसि विकसतीव हसतीव सुधाधवलेषु धामसु
ध्वजपटपल्लवेषु ललतीव समीरचलेषु चन्द्रिका ॥'

अत्र क्रियायाः ॥

'कपोलफलकावस्याः कष्टं भूत्वा तथाविधौ ।
अपश्यन्ताविवान्योन्यमीदृक्षां क्षामतां गतौ ॥'

---

गमिष्यसि । एष गच्छामि । गच्छन्तमेव मां विद्धि । एष गमिष्यामि एष गन्तास्मि । एवमन्यदपि । हरिपतेः सुग्रीवस्य । से इति रामस्य ॥ **तदभावलक्षणेति** । गुणक्रियाभावलक्षणः । **तद्योगोत्प्रेक्षणमिति** । अन्यधर्माणां स्वधर्मीभूताद्वस्तुन उत्कलितानां रसभावाद्यभिव्यक्त्यनुगुणतया वस्त्वन्तराध्यस्तत्वेन लब्धप्रकर्षाणामीक्षणमित्यर्थः । हृद्यग्रहणानुवृत्तेर्लोकातिक्रान्तगोचरत्व-

अत्र दर्शनक्रियाभावस्य ॥

एवं च—

'हिरण्मयी सा ललनेव जङ्गमाच्च्युता दिवः स्थाणुरिवाचिरप्रभा ।
शशाङ्ककान्तेरधिदेवताकृतिः सुता ददे तस्य सुताय मैथिली ॥'

तथा—

'अकालसंध्यामिव धातुमत्ताम्' ।

तथा—

'आवर्जिता किंचिदिव स्तनाभ्यां, वासो वसाना तरुणार्करागम् ।
सुजातपुष्पस्तबकावनम्रा संचारिणी पल्लविनी लतेव ॥'

तथा—

'अचिराभामिव विघनां ज्योत्स्नामिव कुमुदबन्धुना विकलाम् ।
[1]रतिमिषमन्मथरहितां श्रियमिव हरिवक्षसः पतिताम् ॥'

तथा—

'स्थितः पृथिव्या इव मानदण्डः ।'

इत्यादावुत्प्रेक्षाबुद्धिर्न विधेया ॥

यद्यप्येषु स्वरूपतो विशेषणतश्चोपमाद्यकल्पितम्, तथाप्युपमैव । उपमानोपमेययोः साधर्म्यस्य तद्वाचकानां प्रतीयमानत्वात् ॥

**सादृश्ये भेदेनारोपो रूपकमेकानेकविषयम् ।**

---

मस्या अभ्यनुज्ञातमेव । तेन यत्र कुतश्चिन्निमित्ताल्लौकिक्येव धर्माणां संभावना, न तत्रोत्प्रेक्षा । न हि 'भारं वहतीव पुंगवः', 'पयो ददातीव स्त्रीगवी' इत्युत्प्रेक्षा प्रवर्तते, लोकातिक्रान्तगोचराया एव संभावनाया उत्प्रेक्षागोचरत्वात् ॥

---

१. 'रतिमिव मन्म०' स्यात्.

साहृश्ये निमित्ते सति भेदेन विषयविषयिणोर्निर्देशेन आरोपोऽतथाभूतेऽपि तथात्वेनाध्यवसायो रूपयत्येकतां नयतीति रूपकम् । आरोप्यमाणरूपेणारोपविषयस्य रूपवतः क्रियमाणत्वात् । साहृश्यग्रहणं कार्यकारणभावादिनिमित्तान्तरव्युदासार्थम् । तेन 'आयुर्घृतम्' इत्यादौ न रूपकम् । भेदग्रहणमभेदारोपनिरासार्थम् । तत्र ह्यतिशयोक्तिर्वक्ष्यते । तच्च एकमनेकं चारोपस्य विषयो यत्र तत्तथा ॥

तत्रैकविषयं यथा—

'कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु य-
त्सखीः[1] कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत् ।

---

**विषयविषयिणोरिति ।** अर्थादुपमानोपमेययोः ॥ **तथात्वेनाध्यवसाय इति ।** 'मुखं चन्द्रः' इत्यादौ गौणीवृत्तिविषयतयेत्यर्थः । तथा हि उपमेयशब्दो धर्मिवाची । द्वितीयेनोपमानशब्देन तथाभूतेनानुपपद्यमानसामानाधिकरण्यस्तस्यैवोपमानपदस्य स्वाभिधेयाविनाभूतगुणवृत्तितां नियमयति । ततश्च सामानाधिकरण्यमप्युपपद्यते । अत एव च भेदेऽप्यभेदप्रतीतिरियं नापन्यायः । तथा ह्यज्ञाते भेदे किलाभेदप्रतीतिरेव यत्र, तन्मिथ्याज्ञानम् । यथा शुक्तिकायां रजतप्रतीतिः । तथा भेदे ज्ञातेऽपि यत्राभेदप्रतीतिरिव सोपमा । भेदे ज्ञातेऽप्यामुख्ये किलाभेदप्रतीतौ संजातायामपि पश्चादत्रैवंविधे विशिष्टे साहृश्ये विश्रान्तिस्तद्रूपकम् । अन्यथा भेदेऽप्यभेदप्रतीतावन्याय एव स्यात् । ततश्च मिथ्याज्ञानसालंकाररूपत्वं कथमुच्यते । अत्र च केचिच्छब्दारोपपूर्वकमर्थारोपं ब्रुवते । अपरे विपर्ययम् । अन्ये यौगपद्येनोभयम् । एष एव च युक्तः पक्ष इत्याहुः । तथा हि—'शब्दापचारात्ताद्रूप्यं रूपके कैश्चिदुच्यते । ताद्रूप्यारोपतस्त्वन्यैः शब्दारोपोऽत्र कथ्यते ॥ उपमानगुणंस्त्वन्यानुपमेयगुणान्गुणान् । पश्यतां युगपद्भाति तत्र तच्छब्दरूपता ॥' तत्रेत्युपमेये । तच्छब्देति । उपमानशब्दा-

---

१. 'सखी' का० प्र०.

विनिद्रं[1] यच्चान्तः स्वपिति तदहो वेद्म्यभिनवां
प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम् ॥'

यत्र चैकस्मिन्विषयेऽनेकान्यारोप्याणि, तदप्येकविषयम् ।

---

रोप उपमानरूपारोपश्च ॥ **प्रेमलतिकेति** । प्रेमैव लतिकेति । मयूरव्यंसकादित्वादेवशब्दलोपी समासः ॥ ननु व्याघ्रादिद्वारेण इवशब्दलोपी समासो लुप्तोपमाया दृश्यते । ततश्चोभयप्राप्तेरवश्यंभाविनीत्वाद्वक्ष्यमाणसंदेहसंकरः प्राप्नोति । उच्यते—यत्रान्यतरपरिग्रहे साधकप्रमाणाभावस्तदितरस्य वा परिहारे न स्याद्बाधकं प्रमाणं तत्रैवोभयप्रसक्तिरनिवार्येति स एव संदेहसंकरोऽलंकारस्य विषयो वक्ष्यते । इह तु लतायाः सेवनमानुकूल्यादारोपितधर्म एवेति रूपकपरिग्रहे साधकमस्ति तत्संकरशङ्का न कार्या । एवं बाधकेनापि प्रमाणेन संदेहांशापवर्तनादपरांशप्रतिष्ठायां निरवकाशतैव संदेहस्य । यथा—'मधुसुरभिणि षट्पदेन पुष्पे मुख इव साललतावधूरिव । .........', '......... मुख इव पुष्पे मधुकरेण चुम्ब्यते स्म' इति विवक्षायामिवशब्दद्वयेन वाक्यार्थासंगतिर्बाधकं प्रमाणं समासे लुप्तोपमायाः, न तु 'साललतावधूगुणयोगिनी मुख इव षट्पदेन चुचुम्बे' इति रूपकस्य । तथा हि मुख इव पुष्प इत्यत्र सदृशस्य पुष्पस्य प्रतिपत्तौ मुखाधीयमानविशेषता पुष्पाश्रिता पूर्वमेव प्रतीतौरस्यतयोपारोहति । तेन मुखसामर्थ्याक्षिप्तया वध्वा कयापि भवितव्यमिति । सात्र लताभिधीयते । तस्माल्लतैव वधूरित्याञ्जसी रूपके प्रतिपत्तिः । उपमाप्रतिपत्तेस्त्वनाञ्जसत्वं मुखोपमितिसामर्थ्याक्षिप्तपुष्पगतरूपविशेषानुपयोगित्वात् । तथा चात्रोपमेये पुष्पविशेषे मुखोपमितिसामर्थ्याक्षिप्ते चुम्बनाधारत्वादौ न सालतायाा[1] उपयोगोऽस्ति, वध्वा एव तत्रोपयोगित्वात् । तेन वधूरत्र प्रधानम्, तदुपयोगिनी तु साललता साललतैव वधूरित्यनया रूपकच्छायया संगतिः प्रतिपद्यत इति । तस्माद्यत्र विशेषावसाये निमित्तमस्ति, तत्र रूपकं समासाभिहितोपमा वान्यत्र संकर इति ॥

---

१. 'अनिद्रं' का० प्र०.

---

१. 'साललतायाः' स्यात्.

यथा—

'सौन्दर्यस्य तरङ्गिणी तरुणिमोत्कर्षस्य हर्षोद्गमः
कान्तेः कार्मणकर्म नर्मरहसामुल्लासनावासभूः ।
विद्या वक्रगिरां विधेरनवधिप्रावीण्यसाक्षात्क्रिया
प्राणाः पञ्चशिलीमुखस्य ललनाचूडामणिः सा प्रिया ॥'

यत्र चैकत्र विषये आरोप्यं श्रौतं विषयान्तरे तु गम्यं तदप्येकविषयम् ।

यथा—

'जंस्स रणन्तेउरए करे कुणन्तस्स मण्डलग्गलहम् ।
रससंमुही वि सहसा परम्मुही होइ रिउसेणा ॥'[1]

अत्र रणस्यान्तःपुरत्वारोपः श्रौतो मण्डलाग्रलताया नायिकात्वं रिपुसेनायाश्च प्रतिनायिकात्वमर्थसामर्थ्यादवसीयते ।

अनेकविषयं यथा—

'यस्या बीजमहंकृतिर्गुरुतरो मूलं ममेति ग्रहो
नित्यत्वस्मृतिरङ्कुरः सुतसुहृज्ज्ञात्यादयः पल्लवाः ।
स्कन्धो दारपरिग्रहः परिभवः पुष्पं फलं दुर्गतिः
सा मे त्वच्चरणार्हणापरशुना तृष्णालता लूयताम् ॥'

यथा वा—

'इन्द्रस्त्वं तव बाहू जयलक्ष्मीद्वारतोरणस्तम्भौ ।
खड्गः कृतान्तरसना [2]रसना च सरस्वती राजन् ॥'

---

**सौन्दर्यस्येति** । अत्र तरङ्गिण्यादेरारोप्यस्य प्रियालक्षण एक एव विषयः । रह-

---

१. 'यस्य रणान्तःपुरे करे कुर्वतो मण्डलाग्रलताम् ।
रससंमुख्यपि सहसा पराङ्मुखी भवति रिपुसेना ॥' [इति च्छाया ।]

२. 'जिह्वा' रुद्रटे.

एवं च येऽन्ये रूपकप्रभेदा वर्ण्यन्ते ।

यथा—

'ललनाः सरोरुहिण्यः कमलानि मुखानि केसरैर्दशनैः ।
अधरैर्दलैश्च तासां नवबिसनालानि बाहुलताः ॥'

इदं सहजावयवं रूपकम् ।

'गजो नगः कुथा मेघाः श्रृङ्खलाः पन्नगा अपि ।
यन्ता सिंहोऽपि शोभन्ते भ्रमरा हरिणास्तथा ॥'

इदमाहार्यावयवं च ।

'अलिकुलकुन्तलभाराः सरसिजवदनाश्च चक्रवाककुचाः ।
राजन्ति हंसवसनाः संप्रति वापीविलासिन्यः ॥'

इदमुभयावयवमित्यादि ॥ ते न लक्षिताः, उक्तग्रहणेनैव संगृहीतत्वात् । एवंविधवैचित्र्यसहस्रसंभवाच्चातिप्रसङ्गः स्यात् ।

यदाह—

'न पर्यन्तो विकल्पानां रूपकोपमयोरतः ।
दिङ्मात्रं दर्शितं धीरैरनुक्तमनुमीयताम् ॥'

इति ।

**इष्टार्थसिद्ध्यै दृष्टान्तो निदर्शनम् ।**

इष्टस्य सामान्यरूपस्य विशेषरूपस्य वा प्राकरणिकस्यार्थस्य सिद्ध्यै यो दृष्टान्तः स निर्दिश्यते प्राकरणिकोऽर्थोऽत्रेति **निदर्शनम्** ।

---

सामिति हास्यानाम् ॥ **इष्टस्येति** । उत्तरत्र विशेषस्य सामान्येन समर्थनेऽर्थान्तरन्यासत्वं वक्ष्यत इत्यत्रार्थादर्थस्य सामान्यरूपस्य विशेषरूपस्य चेति लभ्यते । ननु चार्थान्तरन्यासोऽपि निदर्शनलक्षणेन संग्रहिष्यते । किं तस्य पृथग्लक्षणकर-

---

१. 'संग्रही' स्यात्.

यथा—

'[१]होइ न गुणाणुराओ जडाण णवरं पसिद्धिसरणाण ।
किरपण्हुवइ ससिमणी चन्दे पियामुहे दिट्ठे ॥'

यथा वा—

'उपरि घनं घनपटलं दूरे दयिता तदेतदापतितम् ।
हिमवति दिव्यौषधयः कोपाविष्टः फणी शिरसि ॥'

यथा वा—

'देवीभावं गमिता परिवारपदं कथं भजत्येषा ।
न खलु परिभोगयोग्यं दैवतरूपाङ्कितं रत्नम् ॥'

यथा वा—

'क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥'

---

णेनेत्याशङ्क्याह—**यो दृष्टान्त इति** । दृष्टोऽन्तो निश्चयो यत्र स दृष्टान्तः । निश्चयश्च विशेषादेव संभवतीति विशेषरूप एवासौ । तेन 'यत्र सामान्यस्य विशेषस्य वा विशेषेण समर्थनं तन्निदर्शनम् । यत्र तु विशेषस्य सामान्येन समर्थनं सोऽर्थान्तरन्यासः' इति विवेक उत्पद्यते ॥ **होइ न गुणाणुराओ इति** । अत्र सामान्यं विशेषेण साध्यते ॥ **उपरीति** । अत्र विशेषो विशेषेण साध्यते ॥ **देवीभावमिति, क्व सूर्येति, अत्युच्चपदाध्यास इति** । उदाहरणत्रयस्यायमभिप्रायः । यथा कैश्चित्प्रतिवस्तूपमा, प्रकारद्वयेन निदर्शना च पृथक् लक्षिता तथा न लक्ष्यत इत्यर्थः । निदर्शनलक्षणेनैव व्याप्तत्वात् । तथा हि 'देवीभावं–' इति 'क्व सूर्य–' इत्युदाहरणद्वये विशेष एव दृष्टान्तेन साध्यमान उपलभ्यते ॥ ननु प्रतिवस्तूपमान्तर्भवतु निदर्शने । निदर्शनाविशेषस्तु कथमन्तर्भविष्यति । तस्य

---

१. 'भवति न गुणानुरागो जडानां केवलं प्रसिद्धिशरणानाम् ।
········· शशिमणिश्चन्द्रे प्रियामुखे दृष्टे ॥' [इति च्छाया]

यथा वा—

'अत्युच्चपदाध्यासः पतनायेत्यर्थशालिनां शंसत्।
आपाण्डु पतति पत्रं तरोरिदं बन्धनग्रन्थेः॥'

एते साधर्म्येण निदर्शनप्रकाराः॥

वैधर्म्येणापि यथा—

'गुणानामेव दौरात्म्याद्धुरि धुर्यो नियुज्यते।
असंजातकिणस्कन्धः सुखं जीवति गौर्गलिः॥'

'तवाहवे साहसकर्मनर्मणः[1] पाणिं कृपाणान्तिकमानिनीषतः।
भटाः परेषां विशरारुतामगुर्दधत्यवाते स्थिरतां हि पांसवः॥'

इति॥

**प्रकृताप्रकृतानां धर्मैक्यं दीपकम्।**

बहुवचनं समस्तव्यस्तपरिग्रहार्थम्। तेन प्रकृताप्रकृतानां प्राकरणिकाप्राकरणिकानामर्थादुपमानोपमेयत्वेन प्रकृतानामप्रकृतानां च केवलानां धर्मः क्रियादिर्यदैक एव प्रयुज्यते तदा दीपवदेकस्थानस्थमनेकदीपनाद्दीपकम्।

---

'अभवद्वस्तुसंबन्ध उपमापरिकल्पकः' इत्येवंलक्षणत्वात्। अत्रोच्यते—क्व सूर्येत्यादौ दार्ष्टान्तिके वस्तुसंबन्धस्य असंभवः, दृष्टान्ते वा, अल्पविषयमत्या सूर्यवंशस्य वर्णनमसंभवदिति दार्ष्टान्तिके वस्तुसंबन्धस्यासंभव इति चेत्, न। यत्र वाक्येऽसंभवन्नेवार्थः प्रतिपद्यते, तत्र कथमभवद्वस्तुसंबन्धता। स्यादेवं यदि प्रतिपद्यमानस्यार्थस्य वाक्ये कश्चिदसंबन्धः स्यात्। तस्मान्न दार्ष्टान्तिके वस्तुसंबन्धस्यासंभवः दार्ष्टान्तिकप्रतिबिम्बरूपत्वाच्च दृष्टान्तस्य दृष्टान्तेऽप्ययमेव न्यायः। 'उदयति विततोर्ध्वरश्मिरज्जौ—' इत्यादौ तु अतिशयोक्तिभेदत्वं वक्ष्यते। 'अत्युच्चपदाध्यासः' इत्यत्र तु सामान्यं दृष्टान्तेन समर्थ्यते। साक्षात्क्रियापि तदर्था-

---

१. 'शर्मणः' का० प्र०. 'साहसकर्मणा शर्म सुखं यस्येति विग्रहः' इत्युदाहरणचन्द्रिका.

यथा—

'चन्दमऊएहिं निसा णलिणी कमलेहिं कुसुमगुच्छेहिं लया ।
हंसेहिं सरयसोहा कवकहा सज्जणेहिं कीरइ गरुई ॥'

अत्र काव्यकथा प्रकृता शेषाण्यप्रकृतानि । गुरुकीकरणमेका क्रिया ।

---

न्वयख्यापनं कुर्वन्तीति न दृष्टान्तात्प्रच्यवत इति **चन्दमऊएहिं इति ।** चन्द्रमयूखादीनामपि न निशादिना विना कोऽपि परभागलाभः । सज्जनानामपि काव्यकथां विना कीदृशी साधुजनता । चन्द्रमयूखैश्च निशाया गुरुकीकरणं भास्वरत्वसेव्यतादि यत्क्रियते, कमलैर्नलिन्याः शोभा परिमललक्ष्म्यादि, कुसुमगुच्छैर्लताया अभिगम्यत्वमनोहरत्वादि, हंसैः शारदशोभायाः श्रुतिसुखकरत्वमनोहरत्वादि, तत्सर्वं काव्यकथायाः सज्जनैरित्येतावानयमर्थो गुरुकीक्रियते इत्येतद्दीपकबलाच्चकास्ति । कथाशब्द इदमाह—आसतां तावत्काव्यस्य केचन सूक्ष्मा विशेषाः, सज्जनैर्विना काव्यकथा काव्यमित्येष शब्दोऽपि विध्वंसते । तेषु तु सत्सु आस्तां सुभगं काव्यं काव्यशब्दस्य व्यपदेशभागपि शब्दसंदर्भमात्रं तथा तथा तैः क्रियते यथादरणीयतां प्रतिपद्यते ॥ ननु यदि क्रियापदोपनिबन्धो दीपकम्, तर्हि न तदलंकारः । क्रियापदे हि सति वाक्यपरिसमाप्तिः प्रतीयते, न पुनरर्थातिशयः, विना क्रियापदं वाक्यमेव किंचिन्नास्ति यदवोचाम । 'सविशेषणमाख्यातं वाक्यम्' इति आख्यातशब्देन चात्राख्यातान्तं पदमुच्यते, तस्यैव क्रियावाचकत्वात् । तेनात्र कुतः कस्यातिशयः, शास्त्रारम्भवैयर्थ्याच्च । तथा हि—अलंकारशून्यं काव्यं मा भूदिति कवीनामलंकारव्युत्पत्तिः क्रियते । क्रियापदस्य च दीपकत्वे सर्वं काव्यं सालंकारमिति नार्थोऽनेन ग्रन्थेन । अलंकारभेदप्रज्ञापनार्थोऽयं ग्रन्थ इति चेत्, तेनैव तावज्ज्ञापितेन कोऽर्थः सर्वथा सालंकारं काव्यं विधेयम् । तत्र यद्यलंकारान्तरं काकतालीयेन भवति तदा शोभनमेव, नो चेद्दीपकमवस्थितमेव । किं च संकरस्योच्छेदप्रसङ्गान्न क्रियापदं दीपकालंकारः । पृथक् पृथक् लब्धात्मनामलंकाराणामेकवाक्यसंसर्गे संकरः । न च क्रियापदस्य दीपकत्वे रूपकादयोऽलंकारा दीपकात्पृथगात्मानं लब्धुमुत्सहन्ते । तस्मान्न क्रियापदं दीपकम् । सत्यम् । न क्रियापदमात्रमस्माकं दीपकम् । किं तु

---

१. 'चन्द्रमयूखैर्निशा नलिनी कमलैः कुसुमगुच्छैर्लता ।
हंसैः शारदशोभा काव्यकथा सज्जनैः क्रियते गुरुकी ॥' [इति च्छाया]

यथा वा—

'मदो जनयति प्रीतिं सानङ्गं मानभङ्गुरम् ।
स प्रियासंगमोत्कण्ठां सासह्यां मनसः शुचम् ॥'

अत्र मदादौ यत्प्राकरणिकतया विवक्ष्यते तदुपमेयं शेषाण्युपमानानि । न च क्रमैकत्वमुपमां रुणद्धीति वाच्यम् ।

'राम इव दशरथोऽभूद्दशरथ इव रघुरजोऽपि रघुसदृशः ।
अज इव दिलीपवंशश्चित्रं रामस्य कीर्तिरियम् ॥'

इत्यादौ क्रमैकत्वेऽप्युपमादर्शनात् ।

प्रकृतानां धर्मैक्यं यथा—

'पाण्डुक्षामं वदनम्—' इति ।

यथा वा—

'[1]हंसाण सरेहिं सिरी सारिज्जइ अह सराण हंसेहिं ।
अण्णोण्णं विय एए अप्पाणं णवर गरुअन्ति ॥'

---

बहुभिः समानजातीयैः कारकविशेषैरभिसंबध्यमानम् । तस्य चानेकेष्वर्थेष्वभिसंबध्यमानस्यार्थादन्वयिरूपं यत्तत्साम्यमुच्यते । प्राकरणिकाप्राकरणिकत्वाभ्यां च तेषामर्थानामुपमानोपमेयभावो गम्यमानो न श्रौतः । अत एव दीपकमुपमातो भिद्यते । यत्रापि प्राकरणिका एव अप्राकरणिका एव वा पदार्था एकधर्मानुगता वर्ण्यन्ते, तत्रापि तेषां परस्परं किंचित्साम्यं विज्ञेयमेव ॥ ननु रुद्रटप्रभृतिभिर्वास्तवभेदतयापि दीपकं प्रतिपादितम्, तत्र च कथमौपम्यं स्यादित्याशङ्क्य निदर्शयति—**मद इति** । मदः सुरादिपानविकारविशेषः । मानभङ्गुरं मानभञ्जनशीलम् । यद्वा मानो भङ्गुरो यत्रेति समासः ॥ क्रियादेर्धर्मस्यैकस्यैव वाक्यार्थेष्वनेकेष्वपि साधारणतयोपादीयमानत्वादत्रौपम्यं बलादापतति । तत्रापि यद्विवक्षितं तदुपमेयमितरस्तूपमानमिति । अत एव रुद्रटोक्त औपम्यसमुच्चयोऽपि दीपकमेव तुल्यस्वभावत्वादिति ॥ **हंसाणेति** । अत्र हंसानां श्रीः सरोभिः सरसां च हंसैः

---

१. 'हंसानां सरोभिः श्रीः सार्यतेऽथ सरसां हंसैः ।
अन्योन्यमेवैते आत्मानं केवलं गुरूकुर्वन्ति ॥' [इति च्छाया ।]

अप्रकृतानां यथा—

'कुमुदकमलनीलनीरजालिर्ललितविलासजुषोर्दृशोः पुरः का ।
अमृतममृतरश्मिरम्बुजन्म प्रतिहतमेकपदे [1]त्वदाननस्य ॥'
'खिद्यति कूणति वेल्लति विचलति निमिषति विलोकयति तिर्यक् ।
अन्तर्नन्दति चुम्बितुमिच्छति नवपरिणया वधूः शयने ॥'

इत्यादौ जातेरेव चमत्कारो न दीपकस्येति कारकदीपकं न लक्ष्यते ।

**सामान्यविशेषे कार्ये कारणे प्रस्तुते तदन्यस्य तुल्ये तुल्यस्य चोक्तिरन्योक्तिः ।**

सामान्ये प्रस्तुते तदन्यस्य विशेषस्य, विशेषे सामान्यस्य, कार्ये

---

सार्यत इति साधारणक्रियया एकयैव हंससरसोः प्राकरणिकयोः संबन्ध इति अन्योन्यनामालंकारो न दीपकतामतिक्रामति ॥ यथा वा—'कण्ठस्य तस्यास्तनुबन्धुरस्य मुक्ताकलापस्य च निस्तलस्य । अन्योन्यशोभाजननाद्बभूव साधारणो भूषणभूष्यभावः ॥' इति । अत्र कण्ठमुक्ताकलापयोः प्राकरणिकयोरन्योन्यं भूष्यभूषणभाव इति ॥ **कुमुदेति** । अत्र कुमुदादीनि अमृतादीनि चाप्राकरणिकानि दृशोराननस्य च प्रकृतस्य वर्ण्यमानत्वात् । यथा वा—'यैर्दृष्टा सा न वा दृष्टा मुषिताः सममेव ते । हृतं हृदयमेकेषामन्येषां जन्मनः फलम् ॥' अत्र प्रियतमां प्राकरणिकीं प्रति अवलोकयितॄणामनवलोकयितॄणां च प्राकरणिकानां मुषितत्वमेको धर्म इति । एवं च तुल्ययोगिता पृथक् न वाच्या इति । ननु कारकदीपकमन्यैरुक्तं तत्किं नोच्यते इत्याशङ्क्याह—**खिद्यतीत्यादि** ॥ **अप्रस्तुतस्येति** । उपवर्णनावसरादपेतत्वादप्राकरणिकस्येत्यर्थः । **अभिधानमिति** । स्तुतिनिन्दोभयानुभयरूपम् ॥ ननु चाप्रस्तुतपदार्थस्वरूपोक्तावसंबद्धभाषिता नालंकारगन्धोऽपि । तथा हि । पर्वतोपवर्णनायां कः समुद्रस्वरूपमुपवर्णयेत् । उपवर्णने वा शिष्टविगर्हणमवश्यंभावीत्याशङ्क्य, अन्योक्तिशब्दार्थं प्रकटीचिकीर्षुरा-

---

१. 'तवा' का० प्र०.

कारणस्य, कारणे कार्यस्य, सदृशे सदृशस्य चान्यस्याप्रस्तुतस्योक्तिरभिधानमन्योक्तिः। अप्राकरणिकस्याभिधानेन प्राकरणिकस्याक्षेप इत्यर्थः।

यथा—

'ऐरावणं स्पृशति मन्त्रयते मरुद्भि-
र्वज्रं परामृशति पश्यति योधसार्थान्।
मेरोस्तटानि विषमीकुरुते महेन्द्र-
स्त्वच्छङ्कया निशि न याति नरेन्द्र निद्राम्॥'

अत्र त्वय्युद्युक्ते न कश्चित्सुखं शेते इति सामान्ये प्रस्तुते विशेष उक्तः।

'अहो संसारनैर्घृण्यमहो दौरात्म्यमापदाम्।
अहो निसर्गजिह्मस्य दुरन्ता गतयो विधेः॥'

अत्र क्वापि वस्तुनि विनष्टे विशेषात्मनि प्रस्तुते दैवस्वातन्त्र्यं सर्वत्र सामान्यरूपमप्रस्तुतं वर्णितम्।

'ये यान्त्यभ्युदये प्रीतिं नोज्झन्ति व्यसनेषु च।
ते बान्धवास्ते सुहृदो लोकः स्वार्थपरोऽपरः॥'

अत्र जरासंधः कार्यरूपां श्रद्धेयवचनतां प्रस्तुतामात्मनोऽभिव्यक्तुं सुहृद्बान्धवरूपत्वमप्रस्तुतं कारणं वर्णयति।

---

ह—**अप्राकरणिकस्याभिधानेनेत्यादि।** सान्तरेण शब्दव्यापारेण गोचरीक्रियमाणः प्राकरणिको योऽर्थस्तेन सहाप्रस्तुतस्य कार्यकारणभावादौ संबन्धे सति सहृदयहृदयावर्जकमलंकाररूपत्वमेतस्या इत्यर्थः। तुल्ये प्रस्तुते यत्र तुल्यस्याप्रस्तुतस्याभिधानं तत्र विशेषो विशेषेण प्रतीयत इति पूर्वाभ्यो भेदः। अन्योक्तौ च यद्वाच्यं तस्य कदाचिद्विवक्षितत्वं कदाचिदविवक्षितत्वं कदाचिद्विवक्षिताविवक्षितत्वमिति त्रयी बन्धच्छाया। तत्र विवक्षितत्वं यथा—

---

१. 'अप्रस्तुतप्रशंसायां' ध्वन्यालोके.

'सग्गं[1] अप्परियायं[2] कुच्छुहलच्छिविरहियं महुमहणस्स उरम् ।
सुमरामि महणपुरओ अमुद्धयन्दं व हरजटापब्भारम् ॥'

अत्र जाम्बवान् वृद्धसेवाचिरजीवित्वव्यवहारकौशलादौ मन्त्रिताकारणे प्रस्तुते कौस्तुभलक्ष्मीविरहितहरिवक्षःस्मरणादिकमप्रस्तुतं कार्यं वर्णयति ।

तुल्ये प्रस्तुते तुल्यस्याभिधाने द्वौ प्रकारौ । श्लिष्टविशेषणता, सादृश्यमात्रं वा तुल्यान्तरस्याक्षेपहेतुः ।

यथा—

'नालस्यप्रसरो जडेष्वपि कृतावासस्य कोशे रुचि-
　दण्डे कर्कशता मुखे च मृदुता मित्रे महान्प्रश्रयः ।
आमूलं गुणसंग्रहव्यसनिता द्वेषश्च दोषाकरे
　यस्यैषा स्थितिरम्बुजस्य वसतिर्युक्तैव तत्र श्रियः ॥'

अत्राप्रस्तुतेनाम्बुजेन तुल्यविशेषणबलात्तुल्यः सत्पुरुष आक्षिप्यते ॥

---

'परार्थे यः पीडामनुभवति भङ्गेऽपि मधुरो यदीयः सर्वेषामिह खलु विकारोऽप्यभिमतः । न संप्राप्तो वृद्धिं यदि स भृशमक्षेत्रपतितः किमिक्षोर्दोषोऽसौ न पुनरगुणाया मरुभुवः ॥' इक्षौ पीडनं पीडा, सत्पुरुषे तु परार्थोद्यते तदर्थं क्लेशः । भङ्गोऽपीक्षौ ग्रन्थित्रोटनम्, सत्पुरुषे तु धनाभावनिमित्तो विप्लवः । इक्षोर्माधुर्यमास्वाद्यलक्षणो गुणः, सत्पुरुषे त्वनुल्बणत्वम् । इक्षोर्विकारः शर्करागुडखण्डादि, सत्पुरुषे तु चित्तविक्रिया । न हि सत्पुरुषा विकृत्यवस्थायामप्यसेव्याः । उल्बणत्वाभावात् । इक्षोरक्षेत्रमूषरम्, सत्पुरुषे निर्विवेकस्वाम्यादिस्थानम् ॥ यथा वा—'अमी ये दृश्यन्ते ननु सुभगरूपाः सफलता भवत्येषां यस्य क्षणमुपगतानां

---

१.　'स्वर्गमपारिजातं कौस्तुभलक्ष्मीविरहितं मधुमथनस्योरः ।
　स्मरामि मथनपुरतोऽमुग्धचन्द्रं च हरजटाप्राग्भारम् ॥' [इति च्छाया ।]

२. 'अपारिजाअं कौत्थुह' सेतौ.

'आदाय वारि परितः सरितां मुखेभ्यः
किं तावदर्जितमनेन दुरर्णवेन।
क्षारीकृतं च वडवावदने हुतं च
पातालकुक्षिकुहरे विनिवेशितं च॥'

अत्रार्णवस्य गर्हणयान्यायोपार्जितधनत्वादिप्रतीयमानसादृश्यः कश्चित्पुरुष आक्षिप्यते॥

विशेष्यश्लिष्टता तु अन्योक्तिप्रयोजकतया न वाच्या।

---

विषयताम्। निरालोके देशे कथमिदमहो चक्षुरधुना समं जातं सर्वैर्न सममथ वान्यैरवयवैः॥' नन्विति। यैर्जगदिदं भूषितमित्यर्थः। यस्य चक्षुषो विषयतां क्षणं गतानामेषां सफलता भवति तदिदं चक्षुरिति संबन्धः। आलोको विवेकोऽपि। न सममिति। हस्तो हि वरं स्पर्शादानादावप्युपयोगी। अवयवैरिति। अतितुच्छप्रायैरित्यर्थः। अत्र अविचारकजनाकुले काले कश्चिन्महापुरुषः कुखामिभिरितरजनसमसत्कारतया ततोऽपि चाप्रयोजनया न्यूनसत्कारतया खलीक्रियमाणः प्रस्तुतः॥ यथा च—'प्राणा येन समर्पितास्तव बलाद्येन त्वमुत्थापितः स्कन्धे यस्य चिरं स्थितोऽसि विदधे यस्ते सपर्यां पुरः। तस्यास्य स्मितमात्रकेण जनयञ्जीवापहारक्रियां भ्रातः प्रत्युपकारिणां धुरि परं वेताललीलायसे॥' अत्र यद्यपि सारूप्यवशेन कृतघ्नः कश्चिदन्यः प्रस्तुत आक्षिप्यते, तथाप्यप्रस्तुतस्य वेतालवृत्तान्तस्यापि चमत्कारकारित्वं न ह्यचेतनोपालम्भवदसंभाव्यमानोऽयमर्थ इति। एषु वाच्यं विवक्षितस्वरूपमेव, न तु प्रस्तुतम्। आद्ययोर्द्वयोर्महागुणस्याविषयपतितत्वादप्राप्तपरभागस्य, तृतीये च कृतघ्नस्य कस्यचित्स्वरूपं वर्णयितुं तात्पर्येण स्तुतमिति॥ अविवक्षितत्वं यथा—'कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाखोटकं वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते। वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते न च्छायापि परोपकारकरणे मार्गस्थितस्यापि मे॥' कथयामीत्यादि प्रत्युक्तिः। अनेन पदेनेदमाह—'अकथनीय-

---

१. 'शतेभ्यः' प्राग्लिखितम्. २. 'दहने' का० प्र०.

---

१. 'न सममित्यर्थः' ख.

यथा—

'पुंस्त्वादपि प्रविचले[1]द्यदि यद्यधोऽपि
यायाद्यदि प्रणयनेन महानपि स्यात् ।
अभ्युद्धरेत्तदपि विश्वमितीदृशीयं
केनापि दिक्प्रकटिता पुरुषोत्तमेन ॥'

अत्र पुरुषोत्तमशब्दस्यार्थद्वयवाचकत्वेऽपि सत्पुरुषचरितस्य प्रस्तुतत्वादभिधा एकत्र नियन्त्रितेति सत्पुरुष एव वाच्यो न विष्णुः, तच्चरितस्याप्रकृतत्वात् । तत्प्रतीतिस्तु शब्दशक्तिमूलात् ध्वनेरेव । यद्यपि च

---

मेतत्, श्रूयमाणं हि निर्वेदाय भवति, तथापि तु [1]यद्यनुबन्धस्तत्कथयामि' । वैराग्यादिति । काक्वा दैवहतकमित्यादिना च सूचितं ते वैराग्यमिति यावत् । साधु विदितमित्युत्तरम् । कस्मादिति वैराग्ये हेतुप्रश्नः । इदं कथ्यत इत्यादि सनिर्वेदस्मरणोपक्रमं कथं कथमपि निरूपणीयतयोत्तरम् । वामेनेति । अनुचितेन कुलादिनोपलक्षित इत्यर्थः । वट इति । छायामात्रकरणादेव [2]फलदानशून्यादुद्धुरकन्धर इत्यर्थः । छायापीति । शाखोटको हि श्मशानाग्निज्वालालीढलतापल्लवादिस्तरुविशेषः । न हि वृक्षविशेषेण सहोक्तिप्रत्युक्ती संभवत इति अविवक्षिताभिधेयेनैवानेन श्लोकेन समृद्धासत्पुरुषसमीपे वासिनो निर्धनस्य कस्यचिन्मनस्विनः परिदेवितं तात्पर्येण वाक्यार्थीकृतमिति प्रतीयते ॥ विवक्षिताविवक्षितत्वं यथा—'[3]उप्पहजायाए असोहिणीए फलकुसुमपत्तरहिआए । बोरीए वइं दन्तो पामर [4]हो हो हसिज्जिहसि ॥' अत्र वाच्योऽर्थो नात्यन्तं संभवी [5]न वासंभवीति वा न वक्तुं

---

१. 'लेदपि' का० प्र०

---

१. 'यदि निर्बन्ध' ध्वन्यालोकलोचने. २. 'फलदानादिशून्या' ध्वन्यालोकलोचने.
३. 'उत्पथजाताया अशोभिन्याः फलकुसुमपत्ररहितायाः ।
बदर्यां वृत्तिं ददत्पामर भो भो हसिष्यते ॥' [इति च्छाया ।]
४. 'हो ओहसिज्जिहसि' ध्वन्यालोके. ५. 'वाच्य एव नियमो नास्तीति' ध्वन्यालोकलोचने.

सत्पुरुषस्य विष्णोरिव विश्वोद्धरणशक्तिर्नास्ति, तथापि गुणवृत्त्या संभवतीति न दोषः॥

---

शक्यम्, व्यङ्ग्यस्यापि भावात्। तथा हि—उत्पथजातताया इति न तथा कुलोद्गतायाः[1]। अशोभनाया इति लावण्यरहितायाः फलकुसुमपत्ररहिताया इति। एवंभूतापि काचित्पुत्रिणी वा भ्रात्रादिपक्षपरिपूर्णतया संबन्धिवर्गपोषिका वा परिरक्ष्यते। बदर्यां वृत्तिं ददत्पामर भो भो हसिष्यसे। सकललोकैरिति भावः॥ यथा वा—'सोऽपूर्वो रसनाविपर्ययविधिस्तत्कर्णयोश्चापलं दृष्टिः सा मदविस्मृतस्वपरदिक्किं भूयसोक्तेन वा। सर्वं विस्मृतवानसि भ्रमर हे यद्वारणोऽप्यसावन्तःशून्यकरो निषेव्यत इति भ्रातः क एष ग्रहः॥' रसनाविपर्ययोऽसत्यभाषित्वमपि। चापसमश्रोतव्यश्रवणमपि। मदो गर्वोऽपि। शून्यकरत्वमपि। अत्र रसनाविपर्यासः शून्यकरत्वं च भ्रमरस्यासेवने न हेतुः कर्णचापलं तु हेतुः मदः प्रत्युत सेवने निमित्तमिति॥ ननु यत्राप्रस्तुतं वस्तु प्रस्तुतार्थानुबन्धि कथ्यते, तत्र यद्यन्योक्तित्वमभिधीयते, तदा सहस्रमायप्रयाणे भटीनां प्रियविरहोत्कण्ठितानामनेकविधव्यापारोपवर्णने भूतकालसंबन्धिनी प्रस्तुते 'औत्सुक्यगर्भा भ्रमतीव दृष्टिः पर्याकुला क्वापि मतिः प्रयाति। निरत्ययप्रेमनिबन्धनं च वियोगकाले द्रवतीव चेतः॥' इत्यप्रस्तुतार्थाभिधायिनि श्लोकान्तरे। तथा समुद्रेण रामं प्रति—'त्वयैव मह्यमियं स्थितिर्दत्ता। यामनुपालयता मया भवान्विष्णुरारोषितः' इति प्रस्तुत्योपन्यस्ते 'विअसन्तरअक्खउरं[2] मअरन्दरसुद्धुमायमुहलमहुअरम्। उँउणा[3] दुमाण दिज्जन्ति[4] हीरइ न उँणा अप्पण[5] च्चिअ कुसुमम्॥' इत्यप्रस्तुतार्थप्रतिपादके छन्दोन्तरे च अन्योक्तित्वप्रसङ्गः। अत्र हि तद्द्वये[6] उपवर्ण्यमानेनाप्रस्तुतेनार्थेन वृत्तान्तरोपनिबद्धः प्रस्तुतोऽर्थोऽनुसंबध्य मैवम्[7]। यत्र हि तस्मिन्नेव वाक्येऽभिधीयमानेनाप्रस्तुतेनार्थेन शब्दानुरूपारूढस्यापि प्रस्तुतस्यार्थस्य सारूप्यादि-

---

१. 'कुलोद्भूता' ध्वन्यालोकलोचने.

२. 'विकसद्रजःकलुषं मकरन्दरसाध्मातमुखरमधुकरम्।

ऋतुना द्रुमाणां दीयते ह्रियते न पुन(स्तदा)रात्मनैव कुसुमम्॥' [इति च्छाया।] (आ० ६ स्क० ११) सेतुटीकानुसारेण. ३. 'उदुणा' सेतौ. ४. 'दिज्जइ' सेतौ. ५. 'उणो तमप्पण' सेतौ. ६. 'वृत्तद्वये' स्यात्. ७. 'बध्यमेवेति चेत्। मैवम्' स्यात्.

अन्योक्तिश्च क्वचित्स्तुतिरूपा ।

यथा—'नालस्य प्रसर–' इति ।

क्वचिन्निन्दारूपा ।

यथा—'आदाय वारि–' इति ।

---

भिराक्षेपः सोऽन्योक्तेर्विषयः, यत्र त्वेकस्मिन्नेव वाक्ये वाक्यद्वये वा समर्थ्यसमर्थकतया बिम्बप्रतिबिम्बभावेन वा प्रस्तुताप्रस्तुतयोरभिधयैव संस्पर्शो वाक्यैकवाक्यता च सोऽर्थान्तरन्यासस्य निदर्शनस्य वा विषयः। एवं च 'औत्सुक्यगर्भा–' इत्यादौ यद्यपि श्लोकान्तरे समर्थस्य वस्तुन उपक्रान्तत्वात् श्लोकान्तरेण तथाभूतमप्रस्तुतमेव प्रस्तुतार्थाभिसंबन्धि वस्तूपनिबध्यते, तथापि नान्योक्तिरिति वक्तव्यम्। अपि त्वर्थान्तरन्यास एवासौ। अत्र हि वृत्तान्तरेणोपक्षिप्तो योऽसौ भटीनां वियोगजनितो व्यापारो भूतकालसंबन्धी विशेषभूतः स कालमात्रसंबन्धिना सकलवियोगिनीव्यापारेण सामान्यरूपेण समर्थितः ॥ यद्यप्युत्प्रेक्षाप्यत्रास्ति, तथापि प्रधानेन व्यपदेशा भवन्तीति न्यायोऽत्रानुसर्तव्यः। यद्वा संकर एवास्तु, न तावदन्योक्तिरियम्। तथा 'वियसन्तरअरकं[1]डरं' इत्यत्रापि वृत्तान्तरोपनिबन्धनोपस्थितेऽर्थे रामसमुद्रव्यापाररूपे वृत्तान्तरेण ऋतुद्रुमव्यापारात्मनस्तत्प्रतिबिम्बस्य निदर्शितत्वान्निदर्शनालंकारतैव। 'विकसद्रजःकर्बुरं मकर[2]न्दसाध्मातमुखरमधुकरम्। [3]ऋतुद्रुमाणां दीयते ह्रियते न पुनरात्मनैव कुसुमम् ॥' इत्यर्थः। ऋतुरत्र वसन्तः। कुसुममिति जातावेकवचनम् ॥ अथात्र कोऽलंकारः—'लावण्यद्रविणव्ययो न गणितः क्लेशो महान्स्वीकृतः [4]स्वच्छन्दस्य [5]सुखं जनस्य [6]वसतश्चिन्तानलो दीपितः। एषापि स्वयमेव तुल्यरमणाभावाद्वराकी हता कोऽर्थश्चेतसि वेधसा विनिहितस्तन्व्यास्तनुं तन्वता ॥' द्रविणशब्देन सर्वस्वप्रायत्वमनेकस्वकृत्योपयोगित्वमुक्तम्। गणित इति। चिरेण हि [7]यो व्ययः संपद्यते न तु विद्युदिव झटिति, तत्रावश्यं गणनया भवितम्। अनन्तकालनिर्माणकारिणोऽपि (तु) विधेर्न विवेकलेशोऽप्युदभूदिति पर[8]मस्याप्रेक्षावत्त्वम्। अत एवाह—क्लेशो महा-

---

१. 'क्खउरं' सेतौ. २. 'न्दरसा' स्यात्. ३. 'ऋतुना' स्यात्. ४. 'स्वच्छन्दं चरतो' ध्वन्यालोके. ५. 'सखीजनस्य' ध्वन्यालोके. ६. 'हृदये चिन्ताज्वरो निर्मितः' ध्वन्यालोके. ७ 'योग्यो यः' ध्वन्यालोकलोचने. ८. 'मस्य प्रेक्षा', 'मस्योत्प्रेक्षा०' ध्वन्यालोकलोचने.

क्वचिदुभयरूपा।

यथा—

'निष्कन्दामरविन्दिनीं स्थपुटितोद्देशां कशेरुस्थलीं
जम्बालाविलमम्बु कर्तुमितरा सूते वराही सुतान्।

निति। अनेन प्रत्युतानर्थप्राप्तिरुक्ता। एवमपि यदि परस्योपकारः स्यात्तदा को दोष इत्याशङ्क्याह—स्वच्छन्दस्येति। परार्थोऽपि न कश्चित्। यतो विशृङ्खलस्य जनस्यैतदभिलाषजननेन प्रथमेऽभिलाषो द्वितीये चिन्तनमिति। चिन्तानलो दीपितः। येन सर्वमन्यत्परित्यज्यैतत्प्राप्त्युपायान्वेषणपरः संजातः। न चाप्यस्याः कश्चित्स्वार्थोऽनर्थलावण्यसुन्दरतरतनुलतानिर्माणे प्रत्युत समुचितवल्लभलाभाभावादसंप्राप्तसंभोगविफलमनोरथवञ्चितैवेयं वराकीत्याह—एषापीति। यत्स्वयं निर्मीयते तदेव च निहन्यत इति महद्वैशसमपिशब्देनैवकारेण चोक्तम्। कोऽर्थ इति। न स्वात्मनो न लोकस्य न[1] निर्मितस्येत्यर्थः॥ निन्दाद्वारिका स्तुतिरत्र प्रतीयत इति व्याजस्तुतिरिति केचित्। तच्च[2] न चतुरस्रम्। यतोऽस्याभिधेयस्यैतदलंकारस्वरूपमात्रपर्यवसायित्वेन सुश्लिष्टता। तथा हि—न तावदयं रागिणः कस्यचिद्विकल्पस्तस्य एषापि इत्येवंविधोक्त्यनुपपत्तेः। रागिणो हि वराकी हता इति कृपालिङ्गितममङ्गलोपहतं चानुचितं वचनम्। तुल्यरमणाभावादिति स्वात्मन्यत्यन्तमनुचितम्। आत्मन्यपि हि तद्रूपासंभावनायां रागितायां च पशुप्रायत्वं स्यात्। नापि नीरागस्य तस्यैवंविधविकल्पपरिहारैकव्यापारत्वात्। ननु च रागिणोऽपि कुतश्चित्कारणात् परिगृहीतकतिपयकालव्रतस्य वा, रावणप्रायस्य वा सीतादिविषये, दुष्टान्तप्रायस्य वा निर्ज्ञातजातिविशेषे कुन्तलादौ[3] किमियं स्वसौभाग्याभिमानगर्भा तत्स्तुतिगर्भा[4] चोक्तिर्न भवति। वीतरागस्यापि वानादिकालाभ्यस्तरागवासनादिवासिततयामध्यस्थत्वेनापि तां वस्तुतस्तथा पश्यतो नेयमुक्तिर्न[5] संभाव्या। न हि वीतरागो विपर्यस्तान् भावान् पश्यति। न ह्यस्य वीणाक्वणितं काकरटितकल्पं भाति[6]। तस्मात्प्रस्तुतानुसारेण उभयस्यापीयमुक्तिरुपप-

१. 'न' नास्ति लोचने. २. 'च' ध्वन्यालोके नास्ति. ३. 'शकुन्तलादौ' ध्वन्यालोकलोचने. ४. 'उत स्तुतिगर्भोक्ति' ध्वन्यालोकलोचने. ५. 'न' लोचने तु नास्ति. ६. 'प्रतिभाति' लोचने.

दंष्ट्रायां चतुरर्णवोर्मिपटलैराप्लावितायामियं
　　यस्या एव शिशोः स्थिता वसुमती सा पुत्रिणी पोत्रिणी ॥'

अत्र पूर्वार्धे निन्दा, अपरार्धे तु स्तुतिः ॥

क्वचिदनुभयरूपा ।

यथा—

'इतो वसति केशवः पुरमितस्तदीयद्विषा-
　　मितोऽपि शरणागताः शिखरिपक्षिणः शेरते ।
इतोऽपि वडवानलः सह समस्तसंवर्तकै-
　　रहो विततमूर्जितं भरसहं च सिन्धोर्वपुः ॥'

अत्र निन्दा स्तुतिर्वा विस्मयोक्तावेवास्तमयत इत्यनुभयरूपा ॥

---

ष्यते । अन्योक्तावपि[1] ह्यप्रस्तुतः संभवन्नेवार्थो वक्तव्यः । न हि तेजसीत्थमन्योक्तिर्भवति—'अहो धिक् ते कार्ष्ण्यम्' इति । स[2] परं प्रस्तुतपरतयेति नात्रासंभवः, किं तर्हि सुश्लिष्टतैवेति । सत्यमेतत् । किंतु न ह्ययं श्लोकः क्वचित्प्रबन्ध इति श्रूयते, येन तत्प्रकरणानुगुणार्थतास्य परिकल्प्यते तस्मादन्योक्तिरेवेयम्[3] । यस्मादनेन वाच्येन गुणीकृतात्मना निःसामान्यगुणावलेपाध्मातस्य निजमहिमोत्कर्षजनितसमत्सरजनज्वरस्य विशेषज्ञमात्मनो न किंचिदेवापरं पश्यतः परिदेवितमेतदिति प्रकाश्यते । निःसामान्येनेति[4] निजमहिमेति विशेषज्ञमिति परिदेवितमिति अमीषां चतुर्णां वाक्यखण्डानामर्थस्य क्रमेण पादचतुष्टयतात्पर्यतया प्रतीयमानत्वात् । तथा चायं विनिश्चयवृत्त्यन्ते धर्मकीर्त्याचार्यस्य श्लोक इति प्रसिद्धिः । एतदर्थसंसूचकश्चापरो हि स्फुट एव तस्य श्लोको विद्वद्भिः परिपठ्यते । यथा—'अनध्यवसितावगाहनमनल्पधीशक्तिनाप्यदृष्टपरमार्थतत्त्वमधिकाभियोगैरपि । मतं मम जगत्यलब्धसदृशप्रतिग्राहकं प्रयास्यति पयोनिधेः पय इव स्वदेहे जराम् ॥' अवगाहनमध्यवसितमपि न यत्र, आस्तां तस्य संपादनम् । परमं यदर्थतत्त्वं

---

१. 'अप्रस्तुतप्रशंसायामपि' लोचने. २. 'सा' लोचने. ३. 'दप्रस्तुतप्रशंसेय' ध्वन्यालोके. ४. 'न्येति' लोचने.

**व्यङ्ग्यस्योक्तिः पर्यायोक्तम्।**

व्यङ्ग्यस्य प्रतीयमानस्यार्थस्य अभिधानं यत्पर्यायेण भङ्ग्यन्तरेण कथनं **पर्यायोक्तम्** । अत एव चान्योक्तेरस्य भेदः । न हि तत्र गम्यमानस्यार्थस्य भङ्ग्यन्तरेणाभिधानम्, अपि त्वप्रस्तुतद्वारेण तस्याक्षेप इति ।

यथा—

'शत्रुच्छेददृढेच्छस्य मुनेरुत्पथगामिनः ।
रामस्यानेन धनुषा देशिता धर्मदेशना ॥'

---

कौस्तुभादिभ्योऽप्युत्तमम् । अलब्धं प्रयत्नपरीक्षितमपि न प्राप्तम् सदृशमस्य तथाभूतं प्रतिग्राहम् एकैको ग्राहो जलचरः प्राणी ऐरावणोच्चैःश्रवो धन्वन्तरिप्रायो यत्र तदलब्धसदृशप्रतिग्राहकम् । इयति चार्थे [1]साम्यादुपमालंकारोऽनन्तरं तु स्वात्मनि विस्मयधामतयाद्भुते विश्रान्तिः, परस्य च श्रोतृजनस्यात्यादरास्पदतया प्रयत्नग्राह्यतया चोत्साहजननेनैवं[2] भूतमत्यन्तोपादेयं सत्कतिपयसमुचितजनानुग्राहकं कृतमिति स्वात्मनि कुशलकारिताप्रदर्शनया धर्मवीरस्पर्शनेन वीररसे विश्रान्तिरिति मन्तव्यम् । अन्यथा परिदेवितमात्रेण किं कृतं स्यात् । [3]अप्रेक्षापूर्वकारित्वमात्मन्यावेदितं चेत्किं ततः स्वार्थपरार्थासंभवादिति । तदनेन निर्विवादतदीयश्लोकेनैव तदभिप्रायस्य परिदेवितविषयस्य संवेद्यमानत्वात्पूर्वत्राप्यन्योक्तिरेव संभाव्यते । तत्रापि चाद्भुतास्वादपुरःसरा वीररसविश्रान्तिपरतानुसंधेयेति । तर्हि यत्र प्रकरणमेव किंचिन्नास्ति तत्र कोऽलंकारः । यथा—'निरतण्ड ? दुरारोहम्–' इति । उच्यते । तत्रोभयोरलंकारयोरन्यतरपरिग्रहेण दोषः, नापि साधकं प्रमाणम्, तत्र संकरालंकारो वक्ष्यते । अत्र च शठतरपोटापाटलयोरन्यतरस्याः प्राकरणिकत्वाभावान्न ज्ञायते । किमियं समासोक्तिरुतान्योक्तिरिति संकरालंकार एव । अन्ये त्वाहुः—यत एव प्रकरणापरिज्ञानमत

---

१. 'अप्रस्तुतप्रशंसोपमालक्षणमलंकारद्वयम्' लोचने. २. 'नैवंभूत' लोचने. ३. 'उत्प्रेक्षा' लोचने.

अत्र 'भीष्मेण भार्गवो जितः' इति व्यङ्ग्यस्य 'देशिता धर्मदेशना' इत्यनया भङ्ग्या भणनम् ॥

**विशेषविवक्षया भेदाभेदयोगायोगव्यत्ययोऽतिशयोक्तिः ।**

प्रकृतस्यार्थस्य विशेषवर्णनेच्छया भेदस्य व्यत्ययोऽभेदाभिधानं यत्त-दतिशयाभिधानादेकातिशयोक्तिः ।

यथा—

'सुधाबद्धग्रासैरुपवनचकोरैरनुसृतां
किरञ्ज्योत्स्नामच्छां लवलिफलपाकप्रणयिनीम् ।
उपप्राकाराग्रं प्रहिणु नयने तर्कय मना-
गनाकाशे कोऽयं गलितहरिणः शीतकिरणः ॥'

अत्र मुखचन्द्रयोर्भेदेऽप्यभेदः ॥

---

एवात्र प्राधान्येन पाटलोपवर्णने क इव । वस्तुपरिपोष इत्यन्यपरत्वे प्रवृत्तिनि-वृत्ती प्रत्युपदेशाय शास्त्रमिव श्लोकाः कल्पन्त इति समासोक्तिपरिग्रहे कुतो दोषाभावः । तस्मादन्योक्तिरेवेयमिति ॥ **व्यङ्ग्यस्येति** । योग्यतयानिर्देशः । **अनया भङ्ग्या भणनमिति** । देशिताधर्मदेशनेति भङ्ग्यन्तररचितशब्दैरि-त्यर्थः । तेन यद्भङ्ग्यन्तरेणोच्यते तद्व्यङ्ग्यम् । यथाप्येकघनरूपतात्मकप्रकारेण व्यङ्ग्यं प्रतीयते, न तथा वक्तुं शक्यते । क्रमभाविविकल्पप्रभवानां शब्दानां तथाभिधानशक्तेरभावात् । यथा गवि शुक्ले चलति दृष्टे गौः शुक्लश्चल इति विकल्पो यदेव दृष्टमभ्यासपाटवापेक्षी तदेव विकल्पयति न तु यथादृष्टम् । अशे-षविशेषावच्छिन्नस्वलक्षणाकारतयानुभवस्योत्पत्तेः । तथा अभिन्नासंसृष्टत्वेन दृष्टं भेदसंसर्गाभ्यां विकल्पयति । निरंशस्य वस्तुनो भेदसंसर्गयोरभावात् । तौ हि विकल्पस्यैव व्यापारः । स ह्यभिन्नमपि वस्तु गौः शुक्लश्चल इत्येवं भिनत्ति । भिन्नमपि पदार्थजातमयं गौरित्येवं संसृजति ॥ **अभेदाभिधानमिति** । गौण्या

यथा वा—

'अयि[1] दियर[2] किं न पेच्छसि आयासं किं मुहा पलोएसि।
जायाएँ बाहुमूलम्मि अद्धयन्दाण परिवाडिम् ॥'

अत्र नखार्धचन्द्राणाम् ॥

अभेदस्य व्यत्ययो भेदो द्वितीया।

यथा—

'[3]अण्णं लडहत्तणयं [4]अण्ण च्चिय कावि वत्तणच्छाया।
सामा सामण्णपै[5]यावइस्स रेह च्चिय न होइ ॥'

अत्र लटभत्वादेरभिन्नस्यैव भेदेनाभिधानम् ॥

योगस्य संबन्धस्य व्यत्ययोऽसंबन्धस्तृतीया।

यथा—

'मल्लिकामालभारिण्यः सर्वाङ्गीणार्द्रचन्दनाः।
क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः ॥'

अत्राभिसारिकाणां लक्षणक्रियायोगेऽपि ज्योत्स्नाबाहुल्योत्कर्षविवक्षया योग उक्तः।

यथा वा—

'अपाङ्गतरले दृशौ मधुरवक्रवर्णा गिरो
विलासभरमन्थरा गतिरतीव कान्तं मुखम्।

---

१. 'अयि देवर किं न प्रेक्षसे आकाशं (आकासं वा) किं मुधा प्रलोकयसि।
जायाया बाहुमूलेऽर्धचन्द्राणां परिपाटीम् ॥' [इति संस्कृतम्।]

२. 'अइ दिअर किं ण' गाथासप्तशत्याम्.

३. 'अन्यत्सौकुमार्यमन्यैव कापि वर्तनच्छाया।
श्यामा सामान्यप्रजापते रेखैव न भवती ॥' [इति संस्कृतम्।]

४. अण्णा' का० प्र०. ५. 'पआवइणो' का० प्र०.

इति स्फुरितमङ्गके मृगदृशां स्वतो लीलया

तदत्र न मदोदयः कृतपदोऽपि संलक्ष्यते ॥'

अत्र मदोदयस्य लक्षणेऽपि स्वाभाविकविभ्रमाणामुत्कर्षविवक्षया लक्षणस्यायोग उक्तः ॥

एवम्—

'ऍसो वि ण सच्चविओ जीसे पसरन्तपल्लवारुणराओ[1] ।

मज्झणतम्बेसु भओ तह मदातम्बेसु लोयणेसु शमरिशो ॥'

इति ।

अयोगस्य व्यत्ययो योगश्चतुथा ।

यथा—

'पश्चात्पर्यस्य किरणामुदीर्णं[2] चन्द्रमण्डलम् ।

प्रायोऽत्र हरिणाक्षीणामुदीर्णो रागसागरः ॥'

अत्रानुद्गते चन्द्रे रागसागरवृद्धेरयोगेऽपि चन्द्रस्योद्दीपनविभावनातिशयप्रतिपादनार्थं योग उक्तः ।

यथा वा—

'पुराणि यस्यां सवराङ्गनानि वराङ्गना रूपपुरस्कृताङ्ग्यः ।

रूपं समुन्मीलितसद्विलासमस्त्रं विलासाः कुसुमायुधस्य ॥'

तथा—

'न तज्जलं यन्न सुचारुपङ्कजं न पङ्कजं तद्यदलीनषट्पदम् ।

न षट्पदोऽसौ कलगुञ्जितो न यो न गुञ्जितं तन्न जहार यन्मनः ॥'

---

वृत्त्येत्यर्थः ॥ **एवमिति** । मज्जनाताम्रयोर्लोचनयोर्मदरागे मदाताम्रयोः कोपो-

---

१. 'एषोऽपि न ······ यस्याः प्रसरत्पल्लवारुणरागः ।

मज्जनताम्रेषु भवस्तथा मदाताम्रेषु लोचनेषु ······ ॥' [इति संस्कृतम् ।]

२. 'किरणानुदीर्णं' स्यात्.

अत्र वराङ्गनादीनां पङ्कजादीनां च निःशेषतया पुरजलादिव्याप्तेरयोगेऽपि योग उक्तः ।

यथा वा—

'उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम् ।
वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम् ॥'

अत्र वारणेन्द्रलीलां गिरिर्वहतीत्यसंबन्धेति संबन्धः । यद्वा गिरिवारणेन्द्रगतयोर्लीलयोर्भेदेऽप्यैक्यमध्यवसितम् ।

यथा वा—

'दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् ।
रमयन्ति जगन्ति चिरं कथमिव कवयो न ते वन्द्याः ॥'

अत्र दिवंगतकविगुणानां रमणायोगेऽपि योग उक्तः ।

तथा—

'हृदये चक्षुषि वाचि च तव सैवाभिनवयौवना वसति ।
वयमत्र निरवकाशा विरम कृतं पादपतनेन ॥'

अत्रैकस्य युगपदनेकवृत्तित्वायोगेऽपि योग उक्तः ॥ एवंविधे च सर्वत्र विषयेऽतिशयोक्तिरेव प्राणत्वेनावतिष्ठते । तां विना प्रायेणालंकरणत्वायोगादिति न सामान्यमीलितैकावलीनिदर्शनाविशेषाद्यलंकारोपन्यासः श्रेयान् ॥

---

परागे च लक्ष्यमाणेऽपि लक्षणायोगो दर्शनीयः ॥ **अलंकरणत्वयोगादिति ।** तथा चाह—'सैषा सर्वैव वक्रोक्तिरनयार्थो विभाव्यते । यत्नोऽस्यां कविना कार्यः कोऽलंकारोऽनया विना ॥' इति ॥ **सामान्येति ।** 'मल्लिका—' इत्यादौ सामान्यम्, 'अपाङ्गतरले' इति 'एत्तोवि' इत्यनयोर्मीलितम्, 'पुराणि' इति 'न तज्ज-

---

१. 'गिरः कथमिह' रुद्रटे.

---

१. 'सर्वत्र' ध्वन्यालोके. 'यातिशयोक्तिर्लक्षिता सैव सर्वा' लोचने व्याख्योपलम्भात् 'सैव सर्वात्र' इति पाठो भवेत्. २. 'एसो' मूले.

**विवक्षितस्य निषेध इवोपमानस्याक्षेपश्चाक्षेपः ।**

विशेषविवक्षयेत्यनुवर्तते । वक्तुमिष्टस्य प्राकरणिकत्वात्प्रधानस्याशक्यवक्तव्यत्वमतिसिद्धत्वं वा विशेषं वक्तुं निषेध इव न तु निषेध एव । निषेधमुखेन विशेष एव तात्पर्यादित्येक आक्षेपः । उपमानस्य च य आक्षेपस्तिरस्कारः सोऽन्यः ।

निषेधो यथा—

'अहं त्वा यदि नेक्षेय क्षणमप्युत्सुका ततः ।
इयदेवास्त्वतोऽन्येन किमुक्तेनाप्रियेण ते ॥'

अयं वक्ष्यमाणप्रकरणहृदयो निषेधात्माक्षेपः ।

उक्तविषयोऽपि यथा—

'ज्योत्स्ना मौक्तिकदाम चन्दनरसः शीतांशुकान्तद्रवः
कर्पूरं कदली मृणालवलयान्यम्भोजिनीपल्लवाः ।
अन्तर्मानसमास्त्वया प्रभवता तस्याः स्फुलिङ्गोत्कर-
व्यापाराय भवन्ति हन्त किमनेनोक्तेन न ब्रूमहे ॥'

---

लम्' इत्यनयोरेकावली, 'उदयति–' इत्यादौ निदर्शना, 'दिवमप्युपयातानाम्' इति 'हृदये चक्षुषी' इत्यनयोर्विशेषश्चालंकारो यथान्यैः प्रदर्शितस्तथा न दर्शनीय इति ॥ **अशक्यवक्तव्यत्वमिति** । वक्ष्यमाणविषयतामाह । **अतिसिद्धत्वमिति** । अतिप्रसिद्धत्वम् । अनेन उक्तविषयतामाह । 'विमुक्तेनाप्रियेण ते' इति त्वदर्शनात्तास्ता अवस्था या वक्तुमपि न शक्यत इत्यस्यार्थस्य प्रतिपत्तये ॥ **किमनेनेति** । त्वदप्राप्तौ ज्योत्स्नादयः स्फुलिङ्गव्यापारहेतवस्तस्या भवन्तीत्यवि-

---

१. 'अतिप्रसिद्धत्वं' का० प्र०. २. 'मरण' स्यात्.

---

१. 'किमुक्ते' मूले. २. 'नात्तास्ता' स्यात्.

उपमानाक्षेपो यथा—

'तस्यास्तन्मुखमस्ति सौम्य सुभगं किं पार्वणेनेन्दुना
सौन्दर्यस्य पदं दृशौ च यदि ते[2] किं नाम नीलोत्पलैः ।
'किंवा कोमलकान्तिभिः किसलयैः सत्येव तत्राधरे
ही धातुः पुनरुक्तवस्तुरचनारम्भेष्वपूर्वो ग्रहः ॥'

यथा वा—

'गर्वमसंवाह्यमिमं लोचनयुगलेन वहसि किं भेग्ने[3] ।
सन्तीदृशानि दिशि दिशि सरःसु ननु नीलनलिनानि ॥'

अत्र लोचनयुगलस्योपमानीकृतस्याक्षेपः ।

यथा—

'अहमेव गुरुः सुदारुणानामिति हालाहल तात मा स्म दृप्यः ।
ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन्वचनानि दुर्जनानाम् ॥'

अत्र हालाहलस्योपमानस्याक्षेप इति न प्रतीपमलंकारान्तरम् ॥

## अर्थानां विरोधाभासो विरोधः ।

जातिगुणक्रियाद्रव्यरूपाणां पदार्थानां सजातीयेन विजातीयेन वा वस्तुवृत्त्या विरोधेऽपि परस्परप्रतिबन्धलक्षणो व्याघातलक्षणो वाद्यो विरोधस्तद्वदाभासमानो विरोधः ।

---

प्रसिद्धोऽयमर्थः इत्यस्य प्रतिपादनाय ॥ **व्याघात इति** । एकतरप्रतिबन्धरूपः ॥ **तद्वदाभासमान इति** । अयं भावः—विशेषविवक्षयेत्यत्राप्यनुवर्तमानत्वात्, यत्र भावान्तरेभ्यो वैशिष्ट्यं ख्यापयितुमामुखे विरोधप्रतीतिकारि न तु विरोधपर्यवसायि वचस्तत्रायं विरोधालंकारः, यत्र पुनः परिहारासंभवस्तत्र व्याहत

---

१. 'श्वे' वामनकाव्यालंकारे. २. 'चेत्' वामनालंकारवृत्तौ. ३. 'भद्रे' रुद्रटे.

तत्र जातेर्जात्या यथा—

'एकस्यामेव तनौ बिभर्ति युगपन्नरत्वसिंहत्वे ।
मनुजत्ववराहत्वे तथैव यो विभुरसौ जयति ॥'

गुणेन यथा—

'द्रोणाश्वत्थामय[1]मेशु श्रुत्वा श्रुत्वा द्वयं स्थितम् ।
ब्राह्मण्यमथ शौर्यं वा को न चित्रीयते पुमान् ॥'

क्रियया यथा— 'सिंहोऽपि परिभूयते ।'

द्रव्येण यथा—

'सृजति च [2]जगदिदमवति च संहरति च हेलयैव यो नियतम् ।
अवसरवशतः शफरो जनार्दनः सोऽपि चित्रमिदम् ॥'

गुणस्य गुणेन यथा—

'सत्यं त्वमेव सरलो जगति जराजनितकुब्जभावोऽपि ।
ब्रह्मन्परमसि विमलो विततावध्वरधूममलिनोऽपि ॥'

क्रियया यथा—

'[3]पेशलमपि खलवचनं दहतितरां मानसं [4]सतत्त्वविदाम् ।
परुषमपि सुजनवाक्यं मलयजरसवत्प्रमोदयति ॥'

द्रव्येण यथा—

'क्रौञ्चाद्रिरुद्दामदृषद्दृढोऽसौ यन्मार्गणानर्गलशातपाते ।
अभून्नवाम्भोजदलाभिजातः स भार्गवः सत्यमपूर्वसर्गः ॥'

---

दोष इति ॥ **सत्यं त्वमेवेति ।** अत्र सरलविमलशब्दयोरेकार्थत्वात् श्लिष्टता न समस्तीति संकराशङ्का न कार्या । चेतसो हि सरलत्वाद्विमलत्वाच्च सोऽपि

---

१. 'रामेषु स्यात्' २. 'महदिदं' का० प्र०. ३. 'पेलव' का० प्र०. ४. 'सतत्त्वबुधाः' स्वशब्दौ पर्यायौ' का० प्र० टी०.

क्रियायाः क्रियया यथा—

'बालमृगलोचनायाश्चरितमिदं चित्रमत्र यदसौ माम् ।
जडयति संतापयति च दूरे हृदये च मे वसति ॥'

द्रव्येण यथा—

'सीतां ददाह नैवाग्निर्हिमं दहति भूरुहः ।
ताप्यन्ते शशिना चित्रं विरहे कामिनो भृशम् ॥'

द्रव्यस्य द्रव्येण यथा—

'समदमतङ्गजमदजलनिःसङ्गतरङ्गिणीपरिष्वङ्गात् ।
क्षितितिलक त्वयि जटजुषि शंकरजूटापगापि कालिन्दी ॥'

एवं दश भेदाः । एषु परस्परप्रतिबन्धो विरोधः ।

व्याघातो यथा—

'अप्यसज्जनसांगत्ये न वसत्येव वैकृतम् ।
अक्षालितविशुद्धेषु हृदयेषु मनीषिणाम् ॥'

अत्र क्षालनाभावे विशुद्धिर्व्याहन्यते ।

यथा वा—

'महर्धिनि कुले जन्म रूपं स्मरसुहृद्वयः ।
तथापि न सुखप्राप्तिः कस्य चित्रीयते न धीः ॥'

तथा—

'स एकस्त्रीणि जयति जगन्ति कुसुमायुधः ।
हरतापि तनुं यस्य शंभुना न हृतं बलम् ॥'

---

सरलविमलः ॥ **विभावनेति** । 'अप्यसज्जनसांगत्ये' इत्यादौ विभावना, 'मह-

---

१. 'निस्पन्द' का० प्र०.

तथा—

'कर्पूर इव दग्धोऽपि शक्तिमान्यो जने जने।
नमोऽस्त्ववार्यवीर्याय तस्मै कुसुमधन्वने[1]॥'

एषु कारणसामग्र्ये फलाभावो व्याहन्यते।

यथा वा—

'सा बाला वयमप्रगल्भमनसः सा स्त्री वयं कातराः
सा पीनं परिणाहिनं[2] स्तनभरं धत्ते सखेदा वयम्।
साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं
दोषैरन्यजनाश्रितैरपटवो जाताः स्म इत्यद्भुतम्॥'

अत्रान्यदेशस्थितेन कारणेनान्यदेशस्थकार्योत्पादो व्याहन्यते।

यथा वा—

'दिशामलीकालकभङ्गतां गतस्त्रयीवधूकर्णतमालपल्लवः।
'चकार यस्याध्वरधूमसंचयो मलीमसः शुक्लतरं निजं यशः॥'

अत्र मलीमसेन शुक्लतरीकरणं व्याहन्यते।

तथा—

'आनन्दममन्दमिमं कुवलयदललोचने ददासि त्वम्।
विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे॥'

अत्रानन्ददानं शरीरतापेन व्याहन्यते।

'शिरीषादपि मृद्वङ्गी केयमायतलोचना[3]।
अयं क्व च कुकूलाग्निकर्कशो मदनानलः[4]॥'

---

र्धिनि' इति 'स एकः' इति 'कर्पूर इव' इति च त्रिषु विशेषोक्तिः, 'सा बाला' इत्यादावसंगतिः, 'दिशामलीकालक' इति 'शिरीषादपि' इति 'आनन्दममन्द-

१. मकरकेतवे' का० प्र०. २. 'पीतोन्नतिमत्पयोधरयुगं' वामनवृत्तौ. ३. 'क्वेयं' का० प्र०. ४. 'दुःसहो मलयानिलः' का० प्र०.

अत्र मार्दवं कार्कश्येन व्याहन्यते।

तथा—

विपुलेन सागरशयस्य कुक्षिणा भुवनानि यस्य पपिरे युगक्षये।
मदविभ्रमासकलया पपे पुनः स पुरस्त्रियैकतमयैकया दृशा॥'

अत्र हीनेन गुरुकार्यकरणं व्याहन्यते।

'किं ददातु किमश्नातु भर्तव्यभरणाकुलः।
उदारमतिरास्तेऽपि जगत्रितयमात्रके॥'

अत्राधिकेन स्वल्पकार्याकरणं व्याहन्यते।

यथा वा—

'अहो विशालं भूपाल भुवनत्रितयोदरम्।
माति मातुमशक्योऽपि यशोराशिर्यदत्र ते॥'

अत्र मानाशक्यत्वेन मानं व्याहन्यते।

तथा—

'भवत्संभावनोत्थाय परितोषाय मूर्च्छते।
अपि व्याप्तदिगन्तानि नाङ्गानि प्रभवन्ति मे॥'

अत्राङ्गानामतिविपुलतया परितोषाभानं व्याहन्यते।

यथा वा—

'दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः।
विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः॥'

अत्र दृशैव दाहो जीवनं च व्याहन्यते।

---

मिमम्' इति 'विपुलेन' इति 'किं ददातु' इति च पञ्चसु विषमम्, 'अहो विशालम्' इति 'भवत्संभावनोत्थाय' इति च द्वयोरधिकम्, 'दृशा दग्धम्' इति व्याघातः, 'धवलोऽसि' इत्यत्रातद्गुणश्चेति पृथगलंकारा न वाच्या इति॥ रघु-

यथा वा—

'धवलोसि जइ वि सुन्दर तह वि तए मज्झ रञ्जियं हिययम् ।
रायभरिए वि हियए सुहय निहित्तो न रत्तोसि ॥'

अत्र धवलेन रञ्जनं रागभृतहृदयेनारञ्जनं च व्याहन्यते ॥ एवं च विभावनाविशेषोक्त्यसंगतिविषमाधिकव्याघातातद्गुणाः पृथगलंकारत्वेन न वाच्याः । विरोध एवान्तर्भावात् । उक्तिवैचित्र्यमात्राद्भेदे च लक्षणकरणेऽलंकारानन्त्यप्रसङ्गः ॥

**सहार्थबलाद्धर्मस्यान्वयः सहोक्तिः ।**

धर्मस्य क्रियागुणलक्षणस्य सहार्थसामर्थ्याद्योऽन्वयः प्रतिपाद्यतेऽर्थादनेकेषु वस्तुषु सा **सहोक्तिः** ।

क्रियालक्षणा यथा—

'रघुर्भृशं वक्षसि तेन ताडितः पपात भूमौ सह सैनिकाश्रुभिः ।
निमेषमात्रादवधूय तद्व्यथां सहोत्थितः सैनिकहर्षनिःस्वनैः ॥'

गुणलक्षणा यथा—

'सह दीर्घा मम श्वासैरिमाः संप्रति रात्रयः ।
पाण्डुराश्च ममैवाङ्गैः सार्धं ताश्चन्द्रभूषणाः ॥'

---

**भृशमिति** । अत्र रघुगता पतनक्रिया शाब्दी । अश्रुगता तु सहार्थसामर्थ्यादवसीयते ॥ एवं गुणोदाहरणेऽप्यूह्यम् । अत्राभिधाव्यापाराद्धर्मा नोभयान्वयिनः प्रतीयन्ते, प्राकरणिकत्वाप्राकरणिकत्वाभ्यां चोपमानोपमेयभावः, तेनास्याः सहोक्तेर्नौपमादावन्तर्भावः । तथा ह्युपमायामुभयोरुपमानोपमेययोरनुयायित्वं धर्माणामिव वत्याद्यभिधाव्यापारात्प्रतीयते, इह तु तादृशोऽभिधाव्यापारो नोपलभ्यते तेनात्रोपमात्वाभावः ॥ कश्चित्तु—'समासोक्तिः सहोक्तिश्च नालंकारतया मता ।

---

१. 'धवलोऽसि यद्यपि सुन्दर तथापि त्वया मम रञ्जितं हृदयम् ।
रागभरितेऽपि हृदये सुभग निहितो न रक्तोऽसि ॥' [इति संस्कृतम् ।]

**श्लिष्टविशेषणैरुपमानधीः समासोक्तिः ।**

**श्लेषवद्भिरुपमेयविशेषणैर्योपमानस्य प्रतीतिः सा समासेन संक्षेपेणार्थद्वयकथनात्समासोक्तिः ।**

यथा—

'उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।
यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद्गलितं न लक्षितम् ॥'

---

अलंकारान्तरत्वेन शोभाशून्यतया तथा ॥' इति सहोक्तिरलंकारो न भवतीति प्रतिपादयति । तत्र शोभाशून्यत्वं हृद्यत्वं तत्र चोपमादयोऽप्यलंकारा न भवन्तीति सर्वसंमतमेव । अहृद्यत्वे च शिष्येण सहोपाध्यायः पठति, पुत्रेण सह पिता तिष्ठतीत्यादौ सहोक्तिर्मा भवतु । 'सह दिअसनिसाहिं दीहरा सासदण्डा सह मरिवलएहिं वाहधारा गलन्ति । तुह सुहअ विओए [२]तीए खेम्बिरीए सह य तनुलदाए दुब्बला जीविदासा ॥' इत्यादौ तु हृद्यत्वे किमिति नेष्यते । अथ तत्र परस्परसाम्यसमन्वयो मनोहारितानिबन्धनमिति प्रतीयमानोपमास्वरूपं नातिवर्तत इत्युपमैवेष्यते । हन्त तर्हि रूपकापह्नुत्यप्रस्तुतप्रशंसादयोऽपि पृथङ्न वक्तव्याः । तत्राप्युपमानोपमेयभावप्रतीतेरुपमैवैकालंकारो वाच्यो नालंकारान्तरम् । यदाह वामनः—'प्रतिवस्तुप्रभृतिरुपमाप्रपञ्चः' इति ॥ अथ रूपकादिषु तत्त्वारोपादिलक्षणं विशेषमङ्गीकृत्य रूपकादिव्यवहारः प्रवर्त्यते । तर्हि सहोक्त्यादावपि सहार्थसामर्थ्यावसितसाम्यसमन्वयो विशेषः समस्तीति सहोक्त्यादिभिः किमपराद्धमित्यलं बहुना ॥ **उपोढरागेणेति** । उपोढो धृतो रागः सांध्योऽरुणिमा, प्रेम च येन । विलोलास्तारका ज्योतींषि, नेत्रविभागाश्च यत्र । तथेति झटित्येव, प्रेमरभसेन च । गृहीतमाभासितम्, परिचुम्बितुमाक्रान्तं च । निशाया मुखं प्रारम्भः, वदनकोकनदं च । **यथेति** । यथा झटितिग्रहणेन, प्रेमरभसेन च ।

---

१. 'सह दिवसनिशाभिर्दीर्घाः श्वासदण्डाः सह मणिवलयैर्बाष्पधारा गलन्ति ।
तव सुभग वियोगे तस्या उद्वेगशीलायाः सह च तनुलतया दुर्बला जीविताशा ॥'
[इति च्छाया].

२. 'तीअ उव्विग्गिरीए' का० प्र०.

अत्र निशाशशिनोरुपमेययोरुपोढरागादिसंश्लिष्टविशेषणबलान्नायक-
योरुपमानयोः प्रतीतिः ॥

**स्वभावाख्यानं जातिः।**

अर्थस्य तादवस्थ्यं स्वभावः। स च संस्थानस्थानकव्यापारादिस्तस्य
वर्णनं जातिः।

---

तिमिरं च अंशुकाश्च सूक्ष्मा अंशवस्तिमिरांशुकं रश्मिशबलीकृतं तमःपटलम्,
तिमिरं वांशुकं नीलजालिका नवोढा प्रौढवधूचित्ता। ननु तिमिरमेवांशुकमिति
व्याख्येयम्। एकविषयरूपकत्वापत्तेः। रागाद्रक्तत्वात्संध्याकृतात्, तदनन्तरं
प्रेमरूपाच्च हेतोः। पुरोऽपि पूर्वस्यां दिशि, अग्रे च गलितं प्रशान्तम्, पतितं
च। तया रात्र्या करणभूतया। समस्तमिश्रितमुपलक्षणत्वेन वा। न लक्षितं
रात्रिप्रारम्भोऽसौ इति न ज्ञातम्। तिमिरशबलितांशुदर्शने हि रात्रिमुखमिति
लोकेन लक्ष्यते, न तु स्फुटे आलोके। नायिकापक्षे तु तयेति कर्तृपदं रात्रिपक्षेऽ-
पिशब्दो लक्षितमित्यस्यानन्तरम्। अत्र च नायकेन पश्चाद्गतेन चुम्बनोपक्रमे
पुरो नीलांशुकस्य गलनं पतनम्। यदि वा पुरोऽग्रे तथा गृहीतं नायकेन मुख-
मिति संबन्धः। एतस्याश्च समासोक्तेर्न श्लेषमन्तरेण विविक्तविषयता उपलभ्यते
इति श्लेषेण सह संकराशङ्का न कार्या। येषां ह्यलंकाराणां विविक्तविषयतयाप्या-
त्मलाभः संभवति तेषामेव परस्परसंकीर्यमाणतायां संकरता युक्ता। यथा विरो-
धव्यतिरेकयोः श्लेषस्य च। श्लेषाभावेऽपि हि 'एकस्यामेव तनौ–' इत्यादौ
विरोधो 'यस्यावर्जयतो नित्यम्' इत्यादौ व्यतिरेकश्च दृश्यते। विरोधव्यतिरेका-
भावे च 'असावुदयमारूढः' इत्यादौ श्लेषश्चेति। भवतु विरोधश्लेषयोः श्लेषव्यति-
रेकयोश्च संकरत्वम्। समासोक्तिस्तु समानविशेषणाभिधायिभिः श्लेषपदैरेवात्मानं
प्रतिलभत इति नास्या विविक्तो विषय उपलभ्यते। शेषापवादेनैवास्याः प्रवृत्ते-
रिति। **नायकयोरिति**। नायकश्च नायिका चेत्येकशेषः॥ **तादवस्थ्यमिति**।
सा अनुभवैकगोचरा अवस्था यस्य स इत्यस्य भावस्तादवस्थ्यमिति। अय-
मर्थः। कविप्रतिभया निर्विकल्पकप्रत्यक्षकल्पया विषयीकृता वस्तुस्वभावा यत्रो-
पवर्ण्यन्ते स जातेर्विषयः। एवं च 'अलंकारकृतां येषां स्वभावोक्तिरलंकृतिः।

---

१. 'लितांशु' इति स्यात्; 'संवलितांशु' ध्वन्यालोकलोचने.

तत्र संस्थानं यथा—

'पर्याणस्खलितस्फिजः करतलोत्क्षिप्तोत्तरीयां बला
वल्गद्भिस्तुरगैर्गता विधुरतामज्ञातवल्गाग्रहाः।
नेपथ्यैः कथयन्ति भूपतेनयाद्दुःश्लिष्टसंपादितै-
र्निर्लक्ष्यार्पितचक्षुषः परिचयोपात्तां श्रियं श्रोत्रियाः॥'

---

स्थानकं यथा—

'स दक्षिणापाङ्गनिविष्टमुष्टिं नतां समाकुञ्चितसव्यपादम्।
ददर्श चक्रीकृतचारुचापं प्रहर्तुमभ्युद्यतमात्मयोनिम्॥'

व्यापारो यथा—

'ऋजुतां नयतः स्मरामि ते शरमुत्सङ्गनिषण्णधन्वनः।
मधुना सह संमिताः कथा नयनोपान्तविलोकितं च तत्॥'

---

अलंकार्यतया तेषां किमन्यदवशिष्यते॥' इति यत्कैश्चित्प्रतिपादितम्, तन्निरस्तमेव। वस्तुनो हि सामान्यस्वभावो लौकिकोऽर्थोऽलंकार्यः। कविप्रतिभासंरम्भविशेषविषयस्तु लोकोत्तरार्थोऽलंकरणमिति॥ तथा चाह—'उच्यते वस्तुनस्ताव द्वैरूप्यमिह विद्यते। तत्रैकमन्यसामान्यं यद्विकल्पैकगोचरः॥ स एव सर्वशब्दानां विषयः परिकीर्तितः। अत एवाभिधीयन्ते ध्यामलं बोधयन्त्यलम्॥ विशिष्टमस्य यद्रूपं तत्प्रत्यक्षस्य गोचरः। स एव सत्कविगिरां गोचरः प्रतिभाभुवाम्॥' यतः 'रसानुगुणशब्दार्थचिन्तास्तिमितचेतसः। क्षणं स्वरूपस्पर्शोत्था प्रज्ञैव प्रतिभा कवेः॥ सा हि चक्षुर्भगवतस्तृतीयमिति गीयते। येन साक्षात्करोत्येष भावांस्त्रैकाल्यवर्तिनः॥ अस्य स्वभावस्योक्तिर्या सालंकारतया मता। यतः साक्षादिवाभान्ति तत्रार्थाः प्रतिभार्पिताः॥' **यथा। ऋजुतामित्यादि।** 'सामान्यस्तु स्वभावो यः सोऽन्यालंकारगोचरः। श्लिष्टमर्थमलंकर्तुमन्यथा को हि शक्नुयात्॥ वस्तुमात्रानुवादस्तु पूरणैकफलो हि यः। अर्थदोषः स दोषज्ञैर-

---

१. 'याञ्चला' स्यात्. २. 'तनया दुः—' इति स्यात्.

**स्तुतिनिन्दयोरन्यतरपरता व्याजस्तुतिः ।**

स्तुतेर्निन्दापरता निन्दायाश्च स्तुतिपरता यत्रोच्यते सा व्याजरूपा व्याजेन वा स्तुतिः **व्याजस्तुतिः** ।

यथा—

'दिनमवसितं विश्रान्ताः सस्त्वया मरुकूप हे
परमुपकृतं शेषं वक्तुं ह्रिया वयमक्षमाः ।
भवतु सुकृतैरध्वन्यानामशेषजलो भवा-
नियमपि घनच्छाया भूयात्तवोपतटं शमी ॥'

'किं वृत्तान्तैः परगृहगतैः किं तु नाहं समर्थ-
स्तूष्णीं स्थातुं प्रकृतिमुखरो दाक्षिणात्यस्वभावः ।
गेहे गेहे विपणिषु तथा चत्वरे पानगोष्ठ्या-
मुन्मत्तेव भ्रमति भवतो वल्लभा हन्त कीर्तिः ॥'

**वाक्यस्यानेकार्थता श्लेषः ।**

पदानामेकार्थत्वेऽपि यत्र वाक्यस्यानेकार्थता स **श्लेषः** ।

---

पुष्ट इति गीयते ॥' **व्याजरूपेति** । छद्मरूपा निन्दाद्वारिकेत्यर्थः । **व्याजेनेति** । परमार्थेन तु निन्दैवेत्यर्थः । यत्तु निन्दापूर्विकायां स्तुतौ केनचिदुदाहृतम्—'आसीन्नाथ पितामही तव मही माता ततोऽनन्तरं जाता संप्रति साम्बुराशिरशना जाया कुलोद्भूतये । पूर्णे वर्षशते भविष्यति पुनः सैवानवद्या स्नुषा युक्तं नाम समग्रनीतिविदुषां किं भूपतीनां कुले ॥' इति, तदस्माकं ग्राम्यं प्रतिभाति। अत्यन्तासभ्यस्मृतिहेतुत्वात् । का चानेन स्तुतिः प्रकृता त्वं वंशक्रमेण राजेति हि कियदिदमित्येवंप्राया व्याजस्तुतिः सहृदयगोष्ठीषु निन्दितेत्युपेक्ष्यैव ॥ **अनेकार्थतेति** । विभां करोतीत्येकमेव हि यौगिकमर्थं प्रतिपादयन् विभाकरशब्दः साधारणार्कभूपलक्षणार्थद्वयप्रतिपादको भवतीति दिगादिशब्दा अप्येकार्थप्रतिपादका एव सन्तोऽनेकार्थाः । तथाहि—दिग्लक्षण एक एवार्थ एकत्र, ककुभोऽन्यत्र तत्स्थाः प्रजाः । प्रसादनं प्रकाशनम्, हर्षाधानं च । तेजो ज्योतिः, प्रतापश्च ॥

यथा—

'दिशः प्रसादयन्नेष तेजोभिः प्रसृतैः सदा ।
न कस्यानन्दमसमं विदधाति विभाकरः ॥'

अत्राभिधाया अनियन्त्रणात् द्वावप्यर्कभूपौ वाच्यौ ॥

**उत्कर्षापकर्षहेत्वोः साम्यस्य चोक्तावनुक्तौ चोपमेयस्याधिक्यं व्यतिरेकः ।**

उपमेयस्य प्राकरणिकस्य तदाधिक्यमर्थादुपमानात्स **व्यतिरेकः** । स चोत्कर्षापकर्षहेत्वोः क्रमेण युगपद्वोपादाने त्रिविधायामुक्तौ युगपदनुक्तौ चैकविधायां चतुर्विधः । पुनश्च साम्यवाचकस्योक्तावनुक्तौ चाष्टभेदः ।

यथा—

'यस्यावर्जयतो नित्यं रिपूनप्युज्ज्वलैर्गुणैः ।
लक्ष्यते नेतरस्येव गाम्भीर्यैकनिधेः स्मयः ॥'

अत्र गाम्भीर्यैकनिधित्वमुपमेयोत्कर्षहेतुरुक्तः ।

'तुच्छस्यान्यजनस्येव न स्मयो हन्त लक्ष्यते ।'

इत्यत्रैव पाठे तुच्छत्वमुपमानापकर्षहेतुर्भवति ।

---

**अभिधाया अनियन्त्रणादिति** । द्वयोरप्यर्थयोः प्राकरणितया विवक्षितत्वादिति भावः ॥ **उपमेयस्याधिक्यमिति** । न तूपमानस्य ॥ यत्तु—'क्षीणः क्षीणोऽपि शशी भूयो भूयोऽभिवर्धते सत्यम् । विरम प्रसीद सुन्दरि यौवनमनिवर्ति यातं तु ॥' इत्यादावुपमानस्योपमेयादाधिक्यमिति केनचिदुक्तम्, तदयुक्तम् । यौवनगतास्थैर्यस्य हि अत्राधिक्यं विवक्षितमिति यथोक्तमेव श्रेयः ॥ **संकराल-**

१. 'नितराम्' का० प्र०; 'नित्यम्' सा० द०.

'असिमात्रसहायोऽयं प्रभूतारिपराभवे ।
नैवान्यतुच्छजनवत्सगर्वोऽयं [1]धृतेर्निधिः ॥'

अत्रोपमानोपमेयगतौ युगपदुत्कर्षापकर्षहेतू उक्तौ ।

'शीर्णपर्णाम्बुवाताशा कष्टेऽपि तपसि स्थिता ।
समुद्वहन्ती नापूर्वं गर्वमन्यतपस्विवत् ॥'

अत्रोत्कर्षापकर्षहेत्वोर्द्वयोरप्यनुक्तिः । एवं साम्योक्तौ चत्वारो भेदाः । साम्यानुक्तौ यथा—

'नवीनविभ्रमोद्भेदतरङ्गितगतिः सदा ।
मुखेन स्मितमुग्धेन जयत्येषा सरोरुहम् ॥'

अत्रोपमेयोत्कर्षः । इवादिपदविरहात्तु साम्यस्यानुक्तिः । अत्रैव

'विडम्बयति वक्रेण निश्येव स्मितमम्बुजम्'

इति पाठपरिणामे उपमानापकर्षः ।

'आननेनाकलङ्केन [2]जयतीन्दुं कलङ्कितम्'

अत्र युगपदुत्कर्षापकर्षौ ।

'अहो विडम्बयत्येषा वदनेन सरोरुहम्'

अत्रोत्कर्षापकर्षहेत्वोरनुक्तिः । साम्यं त्वाक्षेपात्सर्वत्र प्रतीयते । श्लेषव्यतिरेकस्तु संकरालंकारविषय इति तत्रैवोदाहरिष्यते ॥

---

कार[1]विषयतीति । श्लेषव्यतिरेकयोरन्यत्रापि लब्धसत्ताकत्वादिति भावः । ततश्च तद्भेदा अत्र न प्रदर्शयितुमुचिताः । 'यद्यप्यनुपमचरितस्तथापि तव नाच्युतस्तुलां लभते । स हरिर्नाम्ना देवः स हरिर्वीरस्तुरगनिवहेन ॥' इत्यादयस्तु श्लिष्टोक्तियोग्यस्य पृथगुपादाने ये भेदाः संभवति उक्तलक्षणेनैव संगृहीताः, तत्र

---

१. 'महाद्युतिः' का० प्र०.　२. 'निन्दतीन्दुं कलङ्किनम्' का० प्र०.

---

१. 'षय इतीति' स्यात्.

**विशेषस्य सामान्येन साधर्म्यवैधर्म्याभ्यां समर्थनमर्थान्तरन्यासः ।**

साधर्म्येण वैधर्म्येण वा विशेषो यत्र सामान्येन समर्थ्यते सोऽर्थान्तरस्येव न्यसनमर्थान्तरन्यासः ।

तत्र साधर्म्येण यथा—

'रथस्थमालोक्य रथाङ्गपाणिं स्थाने स्थिता श्रीरिति सोऽभिदध्यौ ।
वैराणि कार्योपनिबन्धनानि निर्मत्सरा एव गुणेषु सन्तः ॥'

वैधर्म्येण यथा—

'अन्ययान्यवनितागतचित्तं चित्तनाथमभिशङ्कितवत्या ।
पीतभूरिसुरयापि न मेदे निर्वृतिर्हि मनसो मदहेतुः ॥'

**स्तुत्यै संशयोक्तिः ससंदेहः ।**

---

हि एकस्य पदस्य द्विरुपादानान्न श्लेषः । उपमानात्तूपमेयस्याधिक्यमस्तीति व्यतिरेको भवत्येव ॥ **अर्थान्तरस्येवेति** । यत्र हेतोर्हेतुमता सह व्याप्तिर्गूढत्वात्कथंचित्प्रतीयते, न तु स्पष्टमवभासते, तत्रार्थान्तरस्येवासमानजातीयस्य वस्तुनो यन्न्यसनमसावर्थान्तरन्यासः न तु यद्यत्कृतकं तदनित्यमित्येवंप्रायमित्यर्थः । नन्वन्योक्तिनिदर्शनाभ्यां नायं भिद्यते । तथाहि—'ऐरावणं स्पृशति—'इत्यादावन्योक्तौ विशेषेण महेन्द्रवृत्तान्तेन वाच्येन त्वद्युक्तेन कश्चित्सुखं शेते इति सामान्यं गम्यमानं समर्थ्यते । तथा 'होइ न गुणाणुराओ' इत्यादौ निदर्शने दृष्टान्तेन दार्ष्टान्तिकं समर्थ्यते, तेनास्य लक्षणस्यातिव्याप्तिः । सत्यम् । उभयत्रापि तत्र समर्थ्यसमर्थकभावो गम्यते किं तु यथार्थान्तरन्यासे न तथा तयोः । अर्थान्तरन्यासे हि समर्थ्यस्य स्वकण्ठेनोपात्तस्य समर्थनम् । अन्योक्तौ तु न तत्तथा । निदर्शने च यद्यपि स्वकण्ठेनोपादानं समर्थ्यस्य तथापि न तत्र विशेषं प्रति सामान्यस्य समर्थकभावः । अपि तु सामान्यविशेषौ प्रति विशेषस्य । यतो दृष्टान्तस्य विशेषरूपतयैव प्रतिबि-

स्तुत्यै अलंकारान्तरगर्भीकारेण प्रस्तुतवस्तुवर्णनार्थं संशयस्योक्तिर्निर्णयान्ता अनिर्णयान्ता वा भेदकस्यानुक्तावुक्तौ वा ससंदेहः।

---

स्वभावः संगच्छत इति पृथगवस्थित एवायम्॥ **स्तुत्यै इति।** स्तुतये यत्संशयवद्वचः प्रयुज्यते तत्र संदेहालंकारसंज्ञा। सह संदेहेन अनिश्चयेन वर्तत इति कृत्वा। त्रिधा खलु संदेहवद्वचो भवति। संदेहस्य प्रतिपादकत्वेन अलंकारान्तरच्छायां गर्भीकृत्यासंदेहेऽपि संदेहस्येव जननेन चेति। संशयश्च शुद्धसंकीर्णमूढभेदात्रेधा। तत्र शुद्धः प्रतिपाद्यो यथा—'वामेक्षणे स्फुरति धीः पुरुषस्य कष्टं स्याद्वा न वेति विदधाति गतागतानि। नार्याः पुनः प्रमदनिर्भररूपमास्ते तन्नास्ति यद्विनिमयादशुभं शुभं वा॥' अत्र संदेहनिष्ठत्वमेवेति शुद्धः संदेहः। संकीर्णो यथा—'गिरिरयममरेन्द्रेणाद्य निर्मूलपक्षः क्षतगरुदसुरेशैः किं कृतो वैनतेयः। अपरमिह मनो मे यः पितुः प्राणभूतः किमुत बत स एष व्याततायुर्जटायुः॥' अत्र स्थाणुर्वा पुरुषो वेतिवत्पश्चात्पारमार्थिकेऽपि वस्तुनि परामर्श उदेतीति संकीर्णः संदेहः। यथा किमेष जटायुरिति। पूर्वत्र तु कष्टस्य भविष्यत्त्वेन भावाभावावुभावपि संदिग्धौ। कदाचन तृतीयस्याप्युपेक्षणीयन्यायेन मध्यरूपस्य प्रादुर्भावसंभावनमित्यनयोर्विवेकः। मूढो यथा—'स्पन्दते दक्षिणं चक्षुः फलकाङ्क्षा न मे क्वचित्। न च मिथ्या मुनिवचः कथयिष्यति किं त्विदम्॥' अत्र न संदेहनिष्ठता नापि विद्यमानस्य वस्तुनोऽशेन परामर्श इति मूढः संदेहः। यथा ह्यगृहीतसंकेतस्यापूर्वपदार्थादर्शने सति किमिदं स्यादिति पदार्थानध्यवसानमित्येवंरूप इत्यर्थः। तदेवं प्रतिपाद्यः संदेहो निदर्शितः॥ उत्पाद्यो यथा—'व्यालवन्तो दुरारोहा रत्नवन्तः फलान्विताः। विषमा भूभृतस्तेभ्यो भयमाशु प्रमादिनाम्॥' व्यालाः सर्पाः, दुर्जनाश्च। दुरारोहा दुःखोत्कलनीयाः, चिरकालप्रत्यासत्तिलाभाश्च। रत्नान्युपलविशेषाः, गुणवन्तश्च। भूभृतः पर्वताः, राजानश्च। इत्येतस्माद्वचसः प्रतिपत्तुः पर्वतराजविषयः संदेह[1] उपजायते। अलंकारान्तरच्छायागर्भीकारेण जन्यस्तु 'सरोजपत्रे–' इत्यादिना उदाहृतः। एतेषु संदेहवत्सु वचनेषु बहुधा प्रवृत्तेषु प्रथमस्य प्रतिपाद्यसंदेहपक्षस्य रसभावतदाभासालंकारेष्वन्तर्भावः। वितर्कस्य हि व्यभिचारिणः सद्भावादवश्यं क्वचिद्रसेऽङ्गता भवत्यत एव रसादिसद्भावेनान्तरीयकत्वेन तदाभासतापि भवतीति। द्वितीयस्य तु जन्यसंदेहपक्षस्य

---

१. 'संदेहा' स्यात्.

यथा—

'सरोजपत्रे परिलीनषट्पदे विशालदृष्टेः स्विदमू विलोचने ।
शिरोरुहाः स्युर्नतपक्ष्मसंततेर्द्विरेफवृन्दं नु निशब्दनिश्चलम् ॥
अगूढहासस्फुटदन्तकेसरं मुखं स्विदेतद्विकचं नु पङ्कजम् ।
इति प्रलीनां नलिनीवने सखीं विदांबभूवुः सुचिरेण योषितः ॥'

अत्र रूपकगर्भीकारेण निर्णयान्तः संशयः ।

यथा वा—

'अथ जयाय नु मेरुमहीभृतो रभसया नु दिगन्तदिदृक्षया ।
अभिययौ स हिमाचलमुच्छ्रितं समुदितं नु विलङ्घयितुं नभः ॥'

अत्रातिशयोक्तिगर्भीकारेणानिर्णयान्तः ।

---

प्रतिनियतप्रकरणाभावात्प्रकृतस्य कस्यचिदभावात्कस्य स्तुतिरुत्कर्षाभिधायिकेति संदेहो दोष एवेति दोषरूपतेति । तृतीयस्तु जन्यसंदेहाभासलक्षणः पक्षोऽस्य ससंदेहालंकारस्य विषयोऽवगन्तव्यः ॥ **सरोजपत्रे इत्यादि** । अत्र प्रकृतं विलोचनादि वक्त्रा निश्चितमेव यदि परं रूपकालंकारापादनमाहात्म्यात्संदेहस्येवशब्देन रूपेणावगतिः । तात्पर्यपर्यालोचनावशेन तूपमादावेव विश्रान्तिः । संदेहवर्णनभङ्ग्या तु तस्यैवालंकारता ॥ **अथ जयायेति** । प्रतिकोट्टन्यायेन मेरुजयसंभावना ॥ **रसभयेति**[1] । त्वरितया । अन्यथा दिग्विजयेनोत्तरकालं सर्वदिगवलोकनमर्जुनस्य भविष्यत्येव । **हिमाचलमिति** । हिमाचलैकदेशमिन्द्रप्रस्थाख्यं तपोर्थमिति तात्पर्यम् । **समुदितमिति** । पिण्डीभूतम् । अवा[2](?)जयादिव्यापारकर्तृत्वं हिमाचलस्य व्याख्येयम् ॥ **अतिशयोक्तिगर्भीकारेणेति** । तथा हि योऽसौ पौरुषेयव्यापारतिरस्कारेण नुशब्दत्रितयावद्योत्यमानतया कोटित्रयोल्लेखेनावास्तवः संशयः प्रतिपादितः स स्वसिद्धिनिर्वाहाय तथाविधोत्कटोच्छ्रायशून्येऽपि पर्वते मेरुजयादिव्यापारत्रयसंपादनक्षमतयोच्छ्रायाति-

---

१. 'रभयसयेति' स्यात् मूलानुरोधात्. २. 'अत्र जयादि' स्यात्.

यथा वा—

'अयं मार्तण्डः किं स खलु तुरगैः सप्तभिरितः
कृशानुः किं सर्वाः प्रसरति दिशो वैर्ष नियतम्।
कृतान्तः किं साक्षान्महिषवहनोऽसाविति चिरं
समालोक्याजौ त्वां विदधति विकल्पान्प्रतिभटाः ॥'

अत्र रूपकगर्भीकारेण भेदस्योक्तौ संशयः॥

**प्रकृताप्रकृताभ्यां प्रकृतापलापोऽपह्नुतिः।**

प्रकृतेन प्रकृतस्यापलाप एका **अपह्नुतिः**। अप्रकृतेन प्रकृतस्यापलापोऽन्या।

तत्राद्या यथा—

'शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लस-
द्रोमाञ्चादिविसंस्थुलाखिलविधिव्यासङ्गभङ्गाकुलः।
हा शैत्यं तुहिनाचलस्य करयोरित्यूचिवान्सस्मितं
शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद्वः शिवः॥'

---

शयमाक्षिपन्नसंबन्धेऽपि संबन्धात्मिकामतिशयोक्तिमवगमयति॥ **अयं मार्तण्डः किमिति**। अत्रोपमेयस्य तद्भावमुपमानेनोक्त्वा पश्चाद्भेदे उच्यमाने यद्यप्यामुखे रूपकावभासः पश्चाद्व्यतिरेकाकारता, तथापि नास्मिन्नलंकारद्वयविश्रान्तिः। अपि तु किमित्यादिशब्दोपादानात्संदेह एव वाक्यार्थतया पर्यवस्यति। तस्य परिकरबन्धार्थं रूपकव्यतिरेकावामुखे प्रतिभासेते इति तत्संकराशङ्का न कार्या॥ **भेदकस्योक्ताविति**। पूर्वोदाहरणद्वये तु भेदकस्यानुक्तिरित्यर्थः॥ **अप्रकृतेन प्रकृतस्यापलापोऽन्येति**। अत्र पारमार्थिकस्यासत्यकरणमपारमार्थिकस्य सत्यतया स्थापनं स्थूलदृष्ट्या बोद्धव्यम्। तात्पर्यं तु वाक्यस्य सादृश्ये एव। तथा ह्यत्र पदार्थस्वरूपविपर्यासोऽभिधीयते। न च तत्र स्वेच्छया पुरुषाणां सामर्थ्यमस्ति तेनोन्मत्तवाक्यता, प्रत्युत सौन्दर्यशालितया सहृदयचमत्कारिता भवति। सोऽयं वाक्यार्थापेक्षयापह्नुत्यलंकारो लाक्षणिकार्थपरिग्रहः। उपमेयस्यापह्नुतत्वात् न स्फुटेन रूपेणोपमानोपमेयभावश्चकास्तीति रूपकाशङ्का

---

१. 'नैष' का० प्र०. २. 'भेदकस्योक्तौ' स्यात्.

अत्र गिरिजाकरस्पर्शकारणौ पुलकवेपथू सात्त्विकरूपौ प्रकृतौ प्रकृतेनैव तुहिनाचलशैत्येनापह्नुतौ ।

द्वितीया यथा—

'नेयं विरौति भृङ्गाली मदेन मुखरा मुहुः ।
अयमाकृष्यमाणस्य कन्दर्पधनुषो ध्वनिः ॥'

यथा—

'विलसदमरनारीनेत्रनीलाब्जखण्डा-
न्यधिवसति सदा यः संयमाधःकृतानि ।
न तु ललितकलापे वर्तते यो मयूरे
वितरतु स कुमारो ब्रह्मचर्यश्रियं वः ॥'

यथा वा—'इदं ते केन–' इति । एवमियं भङ्ग्यन्तरैरप्यूह्या ॥

**पर्यायविनिमयौ परावृत्तिः ।**

एकस्यानेकत्रानेकस्य चैकत्र क्रमेण वृत्तिः पर्यायः । समेन समस्योत्कृष्टेन निकृष्टस्य निकृष्टेनोत्कृष्टस्य वा व्यतिहारो विनिमयः । तावेतौ **परावृत्तिः** ।

यथा—

'जो तीएँ[1] अहरराओ रत्तिं उव्वासिओ पिययमेण ।
सो च्चिय दीसइ गोसे सवत्तिनयणेसु संकन्तो ॥'

---

न कार्या ॥ व्यासङ्गो निरोधस्तस्माद्भङ्गो भयम् ॥ **नेयं विरौतीति** । अत्र मदमुखमधुकरावलीविरुतं विरहिणां हृदयं भेदित्वा विशेषेण कामकार्मुककेङ्कृतेन समानमध्यवसाय तदैक्यारोपेण तेनैवापह्नूयत इति ॥ **जो तीए इति** । अत्र

१. 'यस्तस्या अधररागो रात्रावुद्वासितः प्रियतमेन ।
स एव दृश्यते प्रातः सपत्नीनयनेषु संक्रान्तः ॥' [इति संस्कृतम्.]

१. 'हृदयभेदित्वाविशेषेण' स्यात्.

अत्रैकस्यानेकत्र वृत्तिः । रागस्य च वस्तुतो भेदेऽपि एकतयाध्यवसितत्वादेकत्वमविरुद्धम् ॥

'तद्गेहं नतभित्ति–' इति । अत्रानेकं गृहाद्येकत्र द्विजे वर्तते ।

विनिमयः समेन समस्य यथा—

'आदाय कर्णकिसलयमियमस्मादत्र चरणमर्पयति[1] ।
उभयोः सदृशविनिमयादन्योन्यमवञ्चितं मन्ये ॥'

'यो बलौ व्याप्तभूसीम्नि मखेन द्यां जिगीषति ।
अभयं स्वर्गसद्मभ्यो दत्त्वा जग्राह खर्वताम् ॥'

अत्रोत्कृष्टेनाभयेन निकृष्टस्य खर्वत्वस्य ।

'तस्य च प्रवयसो जटायुषः स्वर्गिणः किमिव शोच्यतेऽधुना ।
येन जर्जरकलेवरव्ययात्क्रीतमिन्दुकिरणोज्ज्वलं यशः ॥'

अत्र निकृष्टेनोत्कृष्टस्य ॥

**हेतोः साध्यावगमोऽनुमानम् ।**

अन्यथानुपपत्त्यैकलक्षणाद्धेतोः साध्यस्य जिज्ञासितार्थस्य प्रतीतिर्यत्र वर्ण्यते तदनुमानम् ।

---

स एवेति ताम्बूलादिजनितरागकोपनिर्वृत्तरागयोरभेदोपचारः ॥ यथा वा—'नैत्वाश्रयस्थितिरियं तव कालकूट केनोत्तरोत्तरविशिष्टपदोपदिष्टा । प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ कण्ठेऽधुना वससि वाचि पुनः खलानाम् ॥' **खर्वतामिति** । वामनताम् ॥ **स्वर्गिण इति** । यशःशेषतां गतस्येत्यर्थः ॥ **अर्थस्येति** । भावरूपस्याभावरूपस्य वा । तत्र भावरूपसाध्यार्थप्रतीतिः 'सानुज्ञम्–'

---

१. 'मस्मै चरणमरुणमर्पयति' वामनवृत्तौ.

---

१. 'नन्वा' का० प्र०.

यथा—

'सानुज्ञमागमिष्यन्नूनं पतितोऽसि पादयोस्तस्याः।
कथमन्यथा ललाटे यावकरसतिलकपङ्क्तिरियम्॥'

यथा वा—

'निर्णेतुं शक्यमस्तीति मध्यं तव नितम्बिनि।
अन्यथानुपपत्त्यैव पयोधरभरस्थितेः॥'

यथा वा—

'संकेतकालमनसं विटं ज्ञात्वा विदग्धया।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम्॥'

अत्र [1]कमलिनीमीलनेन निशासमयः प्रतिपाद्यत इत्यनुमानमेवेदम्॥

**सदृशदर्शनात्स्मरणं स्मृतिः।**

पूर्वोपलब्धस्यार्थस्य तादृशदर्शनात्संस्कारोद्बोधे सति यत्स्मरणं सा स्मृतिः।

यथा—

'अदृश्यन्त पुरस्तेन खेलाः खञ्जनपङ्क्तयः।
अस्मर्यन्त च निःश्वस्य प्रियानयनविभ्रमाः॥'

---

इत्यत्र निदर्शिता। अभावरूपसाध्यार्थप्रतीतिस्तु यथा—'पणवसि अव्वअच्छसि सव्वं विअ सो तएण सव्व विओ। णहु होन्ति तम्मि दिठ्ठ······सच्छावच्छाई॥' अत्रादर्शनं साध्यते॥ **निर्णेतुं शक्यमस्तीति**। अत्र स्तननितम्बयोर्मध्ये मध्यं नोपलभ्यते, स्तनभरावस्थानं च दृश्यते, तत्रेयं पयोधरभरस्थितिः सान्यथानुपपद्यमानाधारकं मध्यमनुपलभ्यमानं बोधयति। उदाहरणान्तरस्य चास्यायमभिप्रायः। यथा केनचिदर्थापत्तिलक्षणोऽलंकारः पृथग्लक्षितस्तथा न लक्षणीयोऽर्थापत्तिलक्षणत्वादनुमानस्येति। **अनुमानमेवेदमिति**।

---

१. 'कमलनिमीलनेन' इति स्यात्.

**विपर्ययो भ्रान्तिः।**

सदृशदर्शनाद्विपर्ययज्ञानं **भ्रान्तिः।**

यथा—

'नीलेन्दीवरशङ्कया नयनयोर्बन्धूकबुद्ध्याधरे
पाणौ पद्मधिया मधूककुसुमभ्रान्त्या तथा गण्डयोः।
लीयन्ते कबरीषु बान्धवकुलव्यामोहजातस्पृहा
दुर्वारा मधुपाः कियन्ति भवती स्थानानि रक्षिष्यति॥'

न चैतद्रूपकं प्रथमा वातिशयोक्तिः। तत्र वस्तुतो भ्रमस्याभावात्॥

**क्रियाफलाभावोऽनर्थश्च विषमम्।**

न केवलं क्रियाफलाभावोऽर्थात्कर्तुर्यावदनर्थश्च भवति यत्र तद्विषमम्।

यथा—

'उत्कण्ठा परितापो रणरणको जागरस्तनोस्तनुता।
फलमिदमहो मयाप्तं सुखाय मृगलोचनां दृष्ट्वा॥'

अत्र मृगलोचनादर्शनेन न केवलं सुखं न प्राप्तम्, यावद्विच्छेदे उत्कण्ठादिरनर्थः प्राप्तः॥

**योग्यतया योगः समम्।**

उत्कृष्टमुत्कृष्टस्य निकृष्टं निकृष्टस्य योग्यमिति योग्यतया योगः समम्।

यथा—

'धातुः शिल्पातिशयनिकषस्थानमेषा मृगाक्षी
देवो[1] रूपेऽप्ययमनुपमे[2] दत्तपत्रः स्मरस्य।
जातं दैवादुचितमनयोः संगतं यत्र[3] तस्मि-
ञ्श्रृङ्गारस्योपनतमधुना राज्यमेकातपत्रम्॥'

१. 'रूपो देवो' का० प्र०. २. 'पमो' का० प्र०. ३. 'यत्तदेतच्छ' का० प्र०.

यथा वा—

'चित्रं चित्रं बत बत महच्चित्रमेतद्विचित्रं
जातो दैवादुचितरचनासंविधाता विधाता।
यन्निम्बानां परिणतफलस्फातिरास्वादनीया
यच्चैतस्याः कवलनकलाकोविदः काकलोकः॥'

**हेतौ कार्ये चैकत्र हेतुकार्यान्तरोक्तिर्युगपद्गुणक्रियाश्च समुच्चयः।**

कस्यचित्कार्यस्य एकस्मिन्हेतौ साधके सति हेत्वन्तराभिधानम्, कार्ये चैकस्मिन्प्रस्तुते कुतश्चिन्निमित्तात्कार्यान्तराभिधानं च **समुच्चयः**। युगपद्गुणौ च क्रिये च गुणक्रिये च समुच्चयः। बहुवचनं व्याप्त्यर्थम्।

हेतौ हेत्वन्तरं यथा—

'दुर्वाराः स्मरमार्गणाः प्रियतमो दूरे मनोऽत्युत्सुकं
गाढं प्रेम नवं वयोऽतिकठिनाः प्राणाः कुलं निर्मलम्।

---

न तु सूक्ष्मम्, अनुमानान्तर्भूतत्वात्सूक्ष्मस्येति भावः॥ **समुच्चय इति।** अतुल्यकक्ष्यतामनपेक्ष्यैव समुच्चयनं समुच्चय इति सामान्येन व्युत्पत्तिः करणीया। एवं हि **'समाधिः सुकरं कार्यं कारणान्तरयोगतः'** इत्येवंलक्षणलक्षितः समाधिरपि समुच्चय एवान्तर्भवति। अन्यथा 'मानमस्या निराकर्तुम्' इत्युदाहरिष्यमाणे तुल्यकक्ष्यत्वाभावान्न समुच्चयः स्यादिति। एष एव च समुच्चयः सद्योगे असद्योगे सदसद्योगे च पर्यवस्यतीति न पृथग्लक्ष्यते। तथा हि—'कुलममलिनं भद्रा मूर्तिर्मतिः[1] श्रुतशालिनी भुजबलमलं स्फीता लक्ष्मीः प्रभुत्वमखण्डितम्। प्रकृतिसुभगा ह्येते भावा अमीभिरयं जनो व्रजति सुतरां दर्पं राजंस्त एव तवाङ्कुशाः॥' अत्र सतां योगः। 'दुर्वाराः' इत्यादौ त्वसतां योगः। नववयःप्रभृतिर्हि सत्यपि शोभनत्वे सर्वेषामप्यशोभनत्वकथनम्, अशोभनत्वेनैव विरहिण्या भावितत्वात्। 'शशी दिवसधूसरो गलितयौवना कामिनी सरो

---

1. 'श्रुति' का० प्र०.

स्त्रीत्वं धैर्यविरोधि मन्मथसुहृत्कालः कृतान्तोऽक्षमी[1]
नो सख्यश्चतुराः कथं नु विरहः सोढव्य इत्थं मया ॥'

अत्र विरहासहत्वं स्मरमार्गणा एव कुर्वन्ति, तेषु सत्सु प्रियतमदूरस्थित्याद्युपात्तम् ।

यथा वा—

'मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्येदमुदीर्णं घनगर्जितम् ॥'

कार्ये कार्यान्तरं यथा—

'स्फुरदद्भुतरूपमुत्प्रतापज्वलनं त्वां सृजतानवद्यविद्यम् ।
विधिना ससृजे नवो मनोभूर्भुवि सत्यं सविता बृहस्पतिश्च ॥'

अत्र त्वां सृजतेत्येकस्मिन्कार्ये प्रस्तुते मनोभवादीनां कार्यान्तराणामुपनिबन्धः ।

युगपद्गुणौ यथा—

'विदलितसकलारिकुलं तव बलमिदमभवदाशु विमलं च ।
प्रखलमुखानि नराधिप मलिनानि च तानि जातानि ॥'

---

विगतवारिजं मुखमनक्षरं स्वाकृतेः । प्रभुर्धनपरायणः सततदुर्गतः सज्जनो नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥' अत्र शशिनि धूसरे शल्ये शल्यान्तराणीति शोभनाशोभनयोगः। तथा हि—शशिनः शोभनत्वं प्रकृतिसौन्दर्यात्, अशोभनत्वं धूसरत्वोत्पादात् । एवं चास्य सदसद्रूपस्य तादृशेनैवापरेण योगादिह सदसद्योगः । **गुणक्रियाश्चे**त्यत्र यथा रुद्रटेन **'व्यधिकरणे वा यस्मिन्'** (७।२७) इत्यादिना व्यधिकरणे इति एकस्मिन्देश इति च प्रतिपादितम्, न तथा प्रतिपादनीयम् । 'धुनोति चासिं तनुते च कीर्तिम्' इत्यादेः 'कृपाणपाणिश्च भवान्रणक्षितौ ससाधुवादाश्च सुराः सुरालये' इत्यादेश्चान्यथापि दर्श-

---

१. 'क्षमो' का० प्र०. 'शठः' का० प्र०.

क्रियेयथा—

'प्रतिग्रहीतुं प्रणयिप्रियत्वात्त्रिलोचनस्तामुपचक्रमे च ।
संमोहनं नाम च पुष्पधन्वा धनुष्यमोघं समधत्त बाणम् ॥'

गुणक्रिये यथा—

'कलुषं च तवाहितेष्वकस्मात्सितपङ्केरुहसोदरश्रि चक्षुः ।
पतितं च महीपतीन्द्र तेषां वपुषि प्रस्फुटमापदां कटाक्षैः ॥'

**पृष्टेऽपृष्टे वान्यापोहपरोक्तिः परिसंख्या ।**

पृष्टेऽपृष्टे वा सत्यन्यव्यवच्छेदपरा योक्तिः सा परिसंख्यानात्**परिसंख्या**। उभयत्रोपमानस्य वाच्यत्वं प्रतीयमानता वेति चत्वारोऽस्या भेदाः ।

पृष्टे यथा—

'कोऽलंकारः सतां शीलं न तु काञ्चननिर्मितम् ।
किमादेयं प्रयत्नेन धर्मो न तु धनादिकम् ॥'

'[1]का विसमा दिव्वगई किं लद्धं जं जणो गुणग्गाही ।
किं सोक्खं सुकलत्तं किं [2]दुग्गे जं खलो लोओ ॥'

अत्र दैवगतिरेव विषमेत्यादिरन्यापोहः प्रतीयते ।

अपृष्टे यथा—

'धेहि धर्मे धनधियं मा धनेषु कदाचन ।
सेवस्व सद्गुरूपज्ञां शिक्षां मा तु नितम्बिनीम् ॥'

'कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते ।
काठिन्यं कुचयुगले तरलत्वं नयनयोर्वसति ॥'

---

१. 'का विषमा दैवगतिः किं लब्धं यज्जनो गुणग्राही ।
किं सौख्यं सुकलत्रं किं दुःखं यत्खलो लोकः ॥' [इति छाया.]

२. 'दुक्खं' का० प्र०.

यथा वा—

'राज्ये सारं वसुधा वसुंधरायां पुरं पुरे सौधम् ।
सौधे तल्पं तल्पे वराङ्गनानङ्गसर्वस्वम् ॥'

'दानं वित्तादृसं वाचः कीर्तिधर्मौ तथायुषः ।
परोपकरणं कायादसारात्सारमुद्धरेत् ॥'

'पोढमहिलाण[1] जं सुट्ठु सिक्खियं तं रएसु होवेइ ।
जं जं असिक्खियं नववहूण तं तं दिहिं देई ॥'

एषु कौटिल्यं कचनिचये एवेत्यादि, राज्ये सारं च वसुधैवेत्यादि, वित्तात्सारं दानमेवेत्यादि, प्रौढमहिलानां सुशिक्षितमेवेत्याद्यपोह्यमानस्य प्रतीयमानत्वमन्यापोहाभावे प्रश्नोत्तरोक्तौ न वैचित्र्यं किंचिदिति नोत्तरं पृथग्लक्षितम् ॥ उत्तरात्प्रश्नादिप्रतिपत्तिस्त्वनुमानमेव ।

यथा—

'वाणियय[2] हत्थिदन्ता कुत्तो अम्हाण वग्घकित्तीआ ।
जाव लुलियालयमुही घरम्मि परिसप्पते सोण्हा ॥'

अत्र विशिष्टोत्तरान्यथानुपपत्त्या प्रश्नानुमानम् ।

---

नादिति ॥ **राज्ये सारमिति** । अत्र सारालंकारः कैश्चिदुक्तः, स चान्यापोहमन्तरेण न चमत्कारकारीति परिसंख्यैव युक्तोऽलंकारः ॥ **दानं वित्तादिति, पोढमहिलाणे**त्यत्रापि केनचित्सारालंकार उक्तस्तत्रापि अन्यापोहकृतं चारुत्वमितीयमपि परिसंख्यैव युक्तेति ॥ **अनुमानमेवेति** । न तु रुद्रटोक्तः—'प्र-

---

१. 'प्रौढमहिलानां यत्सुष्ठु शिक्षितं तद्रतेषु भवति ।
यद्यदशिक्षितं नववधूनां तत्तत्••••••ददाति ॥' [इति छाया.]

२. 'वाणिजक हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तयश्च ।
यावल्ललितालकमुखी गृहे परिसर्पते स्नुषा ॥' [इति छाया.]

तथा—

'[1]जं भणह तं सहीओ [2]आम करेहामि तं तहा सव्वम् ।
जइ सरहरुं संभिउं मे धीरं संमुहागए तम्मि ॥'

तत्र भ्रुकुट्यादिभिर्मानं कुर्विति सख्याः पूर्ववाक्यमनुमीयते ॥

**यथोत्तरं पूर्वस्य हेतुत्वे कारणमाला ।**

उत्तरमुत्तरं प्रति पूर्वस्य पूर्वस्य कारणत्वे **कारणमाला** ।

यथा—

'निर्द्रव्यो ह्रियमेति ह्रीपरिगतः प्रभ्रश्यते तेजसो
निस्तेजाः परिभूयते परिभवान्निर्वेदमायाति च ।
निर्विण्णः शुचमेति शोकविवशो बुद्ध्या परित्यज्यते
निर्बुद्धिः क्षयमेत्यहो निधनता सर्वापदामास्पदम् ॥'

कारणमात्रं तु न वैचित्र्यमिति न हेतुरलंकारान्तरम् ॥

---

**आदप्युत्तरं यत्र-'** (७।९३) इत्युत्तरालंकारः ॥ एवं **जं भणहे**त्यत्रापि वाच्यम् ॥ **कारणमात्रं त्विति** । अग्नेर्धूम इत्येवंरूपमित्यर्थः ॥ नन्वीदृशस्य हेतोर्हृद्यत्वाभावादलंकारत्वं मा भवतु । यत्र तु—'वपुःप्रादुर्भावादनुमितमिदं जन्मनि पुरा पुरारे नैवास्मि क्षणमपि भवन्तं प्रणतवान् । नमन्मुक्तः संप्रत्यतनुरहमग्रेऽपि भविता महेश क्षन्तव्यं तदिदमपराधद्वयमपि ॥' इत्यादौ, 'भस्मोद्धूलन भद्रमस्तु भवते रुद्राक्षमाले शुभं हा सोपानपरम्परां गिरिसुता-

---

१. एतस्य शुद्धेर्बुद्धावनारोहात्संस्कृतमसंदिग्धं न स्मर्यते, तथापि समन्वयवाक्यानुसारेण तु—

'यद्भणिष्यत सख्यः सत्यं करिष्यामि तत्तथा सर्वम् ।
यदि..................मे धैर्यं संमुखागते तस्मिन् ॥' इति कल्प्यते.

२. 'आम' इत्यभ्युपगमकाकुः साकाङ्क्षोपहासा' इति ध्वन्यालोकलोचनम्.

**स्वातन्त्र्याङ्गत्वसंशयैकपद्यैरेषामेकत्र स्थितिः संकरः ।**

परस्परनिरपेक्षत्वं **स्वातन्त्र्यम्** । उपकारकत्वमङ्गत्वम् । एकस्य ग्रहेऽन्यस्य त्यागे साधकबाधकप्रमाणाभावादनिर्णयः **संशयः** । एकस्मिन्पदेऽर्थाच्छब्दार्थालंकारयोः समावेश **ऐकपद्यम्** । एभिरेषां पूर्वोक्तानामलंकाराणामेकत्र वाक्ये वाक्यार्थे वावस्थानं संकीर्यमाणस्वरूपत्वात्संकरः ।

स्वातन्त्र्येण शब्दालंकारयोः संकरो यथा—

'कुसुमसौरभसौरपरिभ्रमद्भ्रमरसंभ्रमसंभृतशोभया ।
वलितया विदधे कलमेखलाकलकलोऽलकलोलदृशान्यया ॥'

अत्र यमकानुप्रासयोः ।

---

कान्तालयालंकृतिम् । अद्याराधनरोषितेन[1] विभुना युष्मत्सपर्यासुखालोकोच्छेदिनि मोक्षनामनि महामोहे निधीयामहे ॥' इत्यादौ च अपराधद्वये पूर्वापरजन्मनोरनमनलक्षणो हेतुर्वाक्यार्थीभूतो महामोहे सुखालोकोच्छेदित्वलक्षणश्च पदार्थीभूतो हृद्यतयावसीयते तत्र कथं सालंकारत्वमिति । सत्यमस्ति हृद्यता परं न हेतोः, किं तर्हि अलंकारान्तरस्य । तथा हि प्रथमे उदाहरणेऽनुमानस्य रामणीयकम्, द्वितीये तु मोक्षस्य महामोहतया रूपणमिति रूपकस्येति हेतुर्नालंकारः । तन्निराकरणेन तद्रूपं काव्यलिङ्गमपि निराकृतमेवेति । एवं च '**हेतुमता सह हेतोरभिधानमभेदतो[2] हेतुः** ।' इत्येवंरूपोऽपि हेतुर्न वाच्यः । 'आयुर्घृतं नदी पुण्यं भयं चौरः सुखं प्रिया । वैरं द्यूतं गुरुर्ज्ञानं श्रेयो ब्राह्मणभोजनम्[3] ॥' इत्येवंरूपो ह्येष न भूषणतां कदाचिदर्हति वैचित्र्याभावात् । गौणे ह्युपचारे सादृश्यसंप्रत्ययाद्वैचित्र्यम् । यत्र तु न सादृश्यसंप्रत्ययस्तत्र नेति ॥ 'अविरलकमलविकासः सकलालिमदश्च कोकिलानन्दः । रम्योऽयमेति संप्रति लोकोत्कण्ठाभरः[4] कालः ॥' इत्यत्र तु काव्यरूपतां कोमलानुप्रासमहिम्नैव समा-

---

१. 'तोषितेन' का० प्र०. २. '–दकृद्भवेद्यत्र । सोलंकारो हेतुः स्यादन्येभ्यः पृथग्भूतः ॥' इत्येवं रुद्रटे समुपलभ्यते. ३. 'पूजनम्' रुद्रटव्याख्या. ४. 'करः' रुद्रटे.

अर्थालंकारयोर्यथा—

'लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता॥'

अत्रोत्प्रेक्षोपमयोः।

शब्दार्थालंकारयोर्यथा—

'[1]सो नत्थि एत्थ गामे जो एयं महमहन्तलावण्णम्।
तरुणाण हिययलूडिं परि[2]सक्कन्तिं निवारेइ॥'

अत्रानुप्रासरूपकयोः।

अङ्गत्वेन संकरो यथा—

'कर्कन्धूफलमुच्चिनोति शबरी मुक्ताफलाकाङ्क्षया
क्रुद्धोलूककदम्बकस्य पुरतः काकोऽपि हंसायते।
कीर्त्या ते धवलीकृते त्रिभुवने क्ष्मापाल लक्ष्मीः पुनः
कृष्णं वीक्ष्य बलोऽयमित्युपहितव्रीडं शनैर्जल्पति॥'

अत्रातिशयोक्तिमपेक्ष्य भ्रान्तिरुद्भूता। तदाश्रयेण चातिशयोक्तिश्चमत्कारहेतुरित्यवयवयोरङ्गाङ्गिभावः।

'त्वं समुद्रश्च दुर्वारौ[3] महासत्त्वौ सतेजसौ।
इयता युवयोर्भेदः स जडात्मा पटुर्भवान्॥'

---

न्नासिषुः, न तु हेत्वलंकारकल्पनयेति॥ यद्यप्यव्यभिचारितयैव विकासादीनां नैरन्तर्येण जननमिहोपचारप्रयोजनं व्यङ्ग्यम्, तदसुन्दरमपि काव्यस्य मध्यमत्वनिबन्धनं भवति। तथाप्यलंकारचिन्तायाः प्रक्रान्तत्वादपह्नुत्यैव हेतोरलंकारत्वं निराक्रियते॥ **दुर्वाराविति**। दुर्वारोऽव्याहतप्रसरः, दुष्टं क्षारं वार्जलं च

---

१. 'स नास्त्यत्र ग्रामे य एतां स्फुरल्लावण्याम्।
तरुणानां हृदयलुण्ठनं परिसर्पन्तीं निवारयति॥' [इति संस्कृतम्.]

२. 'सप्पन्ति' का० प्र०. ३. वार्वारशब्दयोरेकशेषस्तु दुःशक इति ध्येयम्.

अत्र श्लेषो व्यतिरेकस्याङ्गम्।

'कृष्णार्जुनानुरक्तापि दृष्टिः कर्णावलम्बिनी।
याति विश्वसनीयत्वं कस्य ते कलभाषिणि॥'

अत्र श्लेषो विरोधस्याङ्गम्।

'आक्षिपन्त्यरविन्दानि मुग्धे तव मुखश्रियम्।
कोशदण्डसमग्राणां किमेषामस्ति दुष्करम्॥'

अत्र श्लेषोऽर्थान्तरन्यासस्याङ्गम्।

संशयेन संकरो यथा—

'निग्गण्डदुरारोहं मा पुत्तय पाडलं समारुहसु।[1]
आरूढनिवडिया के इमिए न कया इह गामे॥

अत्र शठतरपोटापाटलयोरन्यतरस्याः प्राकरणिकत्वाभावान्न ज्ञायते किमियं समासोक्तिरुतान्योक्तिरिति संशयः।

तथा—

'नयनानन्ददायीन्दोर्बिम्बमेतत्प्रसीदति।
अधुना विनिरुद्धाशमपि शीर्णमिदं तमः॥'

अत्र मुखेन सहाभेदारोपात्किमतिशयोक्तिः, किमेतदिति मुखं

---

यस्य दुर्वाः। सत्त्वं धैर्यम्, सत्त्वाश्च प्राणिनः। तेजः प्रभावः, वडवानलश्च। जडात्मेति, उदकस्वभावोऽपि॥ **कृष्णार्जुनेति**। कृष्णा असिताः। अर्जुनाः शुक्लाः। अनुरक्ता लोहिताः। कर्णावलम्बिनी विपुलतया श्रोत्रसमीपसंश्रिता। विरोधे तु कृष्णो हरिः, अर्जुनः पार्थः, तत्र सानुरागा सा कर्णं राधेयं कथमालम्बत इति। अनयैव च विरोधभङ्ग्या अविश्वास्यत्वं निबद्धम्॥ **कोशदण्डसमग्राणामिति**। कोशो भाण्डागारोऽपि। दण्डश्चतुर्थोपायोऽपि॥ **निर्ग-**

---

१. 'निर्गण्डदुरारोहं मा पुत्रक पाटलं समारोह।
आरूढनिपतिताः केऽनेन न कृता इह ग्रामे॥' [इति संस्कृतम्.]

निर्दिश्येन्दुसमारोपणाद्रूपकम्, किं मुखनैर्मल्यप्रस्तावेऽन्योक्तिः, अथैतयोः समुच्चयविवक्षायां दीपकम्, किं प्रदोषवर्णने विशेषणसाम्यात्समासोक्तिः, किं मदनोद्दीपकः कालो वर्तते इति तात्पर्यात्पर्यायोक्तमित्यनेकालंकारसंशयः ।

तथा—

'शशिवदनासितसरसिजनयनासितकुन्ददशनपङ्क्तिरियम् ।
गगनजलस्थलसंभवहृद्याकारा कृता विधिना ॥'

अत्र तु रूपकमुपमा वेति संशयः ॥ यत्र तु—'मोहमहाचलदलने सा सुनिशितवज्रकोटिरेकापि' इत्यादावारोपितकुलिशकोटिरूपाया भक्तेर्मोहस्य महाचलेनोपमितमात्रस्य दलने कर्तृत्वं न हृदयावर्जकं स्यादिति रूपकस्य, 'ज्योत्स्नेव हासद्युतिराननेन्दोः—' इत्यादौ मुख्यतयावगम्यमाना हसितद्युतिर्वक्त्र एवानुकूल्यं भजत इत्युपमायाः साधकं प्रमाणमस्ति, 'स्मरन्ति ज्योत्स्नायाः शशिमुखि चकोरस्तव दृशि' इत्यादौ तत्त्वारोपे 'स्मरणानुपपत्ते रूपकस्य, 'राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम्' इत्यादौ सदृशं प्रति प्रेयसीप्रयुक्तस्यालिङ्गनस्यासंभवादुपमायाश्च बाधकं प्रमाणमस्ति, न तत्र संशयः ।

ऐकपद्येन संकरो यथा—

'मेरूरुकेसरमुदारदिगन्तपत्र-
मामूललम्बिचलशेषशरीरनालम् ।

---

ण्डेति । कठिनदुरारोहम् ॥ **साभिप्रायविशेषणोक्तिरूप इति** । तथा च **'विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तु सः'** इति । यथा—'कर्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य दासाः । राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रं क्वास्ते

येनोद्धृतं कुवलयं ललना सलील-
मुत्तंसकार्थमिव पातु स वो वराहः ॥'

अत्रैकपदानुप्रविष्टौ रूपकानुप्रासौ । यद्यप्यनेकविषयमिदं रूपकमखिलप्राक्पष्यापि (?), तथापि प्रतिपदं रूपकसंद्भावादेकपदानुप्रवेशो न विरुध्यते । इत्युक्ताः शब्दार्थालंकाराः ॥

कः पुनरङ्गाश्रितत्वान्निःशेषेऽप्ययं शब्दस्यालंकारोऽयमर्थस्येति विशेषः । उच्यते—दोषगुणालंकाराणां शब्दार्थोभयगतत्वव्यवस्थायामन्वयव्यतिरेकावेव निमित्तम् । निमित्तान्तरस्याभावात् । ततश्च योऽलंकारो यदीयौ भावाभावावनुविधत्ते स तदलंकारो व्यवस्थाप्यते इति ॥ यद्यपि पुनरुक्तवदाभासार्थान्तरन्यासादयः केचिदुभयान्वयव्यतिरेकानुविधायिनोऽपि दृश्यन्ते, तथापि तत्र शब्दस्यार्थस्य वा वैचित्र्यमुत्कटमिति उभयालंकारत्वमनपेक्ष्यैव नाष्टालंकारत्वेन नार्थालंकारत्वेन चोक्ताः । इह वापुष्टार्थत्वलक्षणदोषाभावमात्रं साभिप्रायविशेषणोक्तिरूपः **परिकरो** भग्नप्रक्रमतादोषाभावमात्रं **यथासंख्यं** दोषाविधानेनैव गतार्थम् । **विनोक्तिस्तु** तथाविधहृद्यत्वविरहात् ॥ **भाविकं** तु भूतभाविपदार्थ-

---

दुर्योधनोऽसौ कथयत न रुषा द्रष्टुमभ्यागतौ स्वः ॥' इति । अत्र हि द्यूतच्छलकर्तृत्वादीनां विशेषणानां क्रोधोद्दीपनविभावतया साभिप्रायत्वमित्यपुष्टार्थत्वदोषाभाव एवायम् । **यथासंख्यमिति** । तथा चाह—'**यथासंख्यं क्रमेणैव क्रमिकाणां समन्वयः**' इति । यथा—'एकस्त्रिधा वससि चेतसि चित्रमेव देव द्विषां च विदुषां च मृगीदृशां च । तापं च संमदरसं च रतिं च पुष्णञ्शौर्योष्मणा च विनयेन च लीलया च ॥' इति । अत्र न यथासंख्यकृतं किमपि वैचित्र्यं किंतु एकस्त्रिधा वससीति आमुखे विरोधप्रतीतिकृतमेवेति ॥ **विनोक्तिस्त्विति** । तथा चाह—'**विनोक्तिः सा विनान्येन यत्रान्यः सन्न नेतरः**' इति । सन् शोभनः, इतरोऽशोभनः । यथा—'मृगलोचनया

---

१. 'मत्र' का० प्र०.

प्रत्यक्षीकारात्मकमभिनेयप्रबन्ध एव भवति । यद्यपि मुक्तकादावपि दृश्यते, तथापि न तत्त्वदते । उदात्तं तु ऋद्धिमद्वस्तुलक्षणमतिशयोक्तेर्जातेर्वा न भिद्यते । महापुरुषवर्णनारूपं च यदि रसपरं तदा ध्वनेर्विषयः ॥

---

विना विचित्रव्यवहारप्रतिभाप्रभाप्रगल्भः । अमृतद्युतिसुन्दराशयोऽयं सुहृदा तेन विना नयेन्द्रसूनुः ॥', 'अरुचिर्निशया विना शशी शशिना सापि विना महत्तमः । उभयेन विना मनोभवस्फुरितं नैव चकास्ति कामिनोः ॥' इति उदाहरणद्वयेऽपि वदन्तु सहृदयाः—यदि किमपि विनोक्तिकृतं वैचित्र्यमवभासते, **सहोक्तौ** तु सहार्थबलात्साम्यसमन्वयप्रतीतेर्युक्तमेव वैचित्र्यमिति । किंच—शब्दमात्रयोगेनालंकारत्वकल्पने हा धिगाद्युक्तावप्यलंकारत्वप्रसङ्गः प्राप्नोतीति ॥ **भाविकमिति** । भावः कवेरभिप्रायः स यत्रास्ति तद्भाविकम् । **भूतभाविपदार्थप्रत्यक्षीकारात्मकमिति** । प्रध्वंसाभावप्रागभावक्रान्ता अपि भावाः स्वमहिम्नार्थः[1] प्रसादवशाच्च यत्पुरः स्फुरन्त इव दृश्यमाना बध्यन्त इत्यर्थः । भूतभाविशब्दस्य परोक्षोपलक्षणपरत्वे परोक्षाणां पुरःस्फुरद्रूपत्वहेतुवर्णनमिति तु व्याख्याने स्वभावोक्तिर्न भिद्यते । **अभिनेयप्रबन्ध एवेति** । प्रवेशकविष्कम्भकादिभिस्तत्रैव तत्र वर्ण्यमानत्वादिति भावः ॥ ननु—'आसीदञ्जनमत्रेति पश्यामि तव लोचने । भाविभूषणसंभारां साक्षात्कुर्वे तवाकृतिम् ॥' अत्राद्येऽर्धे भूतस्य, द्वितीये भाविनो दर्शनमिति मुक्तकविषयमपि भाविकं दृश्यते, ततः कुतो न लक्ष्यत इत्याशङ्क्याह—**यद्यपीति** ॥ **ऋद्धिमद्वस्तुलक्षणमिति** । यदाह—'**उदात्तं वस्तुनः संपत्**' इति । यथा—'मुक्ताः केलिविसूत्रहारगलिताः संमार्जनीभिर्हृताः प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः । दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुका यद्विद्वद्भवनेषु भोजनृपतेस्तत्त्या[2]गलीलायितम् ॥' न ह्यतिशयैश्वर्यो[3]ऽपि मुक्तारत्नानामवकरप्रायत्वेन पुञ्जीकरणं संभवति । उक्तं च—'असंबन्धे संबन्धात्मिकामतिशयोक्तिमवगमयति'। तदाह—**अतिशयोक्तेरिति**[4] । अतिशयोक्तेरलंकारान्न भिद्यत इत्यर्थः ॥ अथ यत्र

---

१. 'चेतःप्रसाद' स्यात्. २. 'स्त्वद्दान' का० प्र०. ३. 'श्वर्ये' स्यात्. ४. 'क्तेरिति' मूलानुसारी.

अथ तथाविधवर्णनीयवस्तुपरम्, तदा गुणीभूतव्यङ्ग्यस्येति नालंकारः ॥ **रसवत्प्रेयस्व्यूर्जस्विभावसमाहितानि** गुणीभूतव्यङ्ग्यप्रकारा एव ॥ **आशीस्तु** प्रियोक्तिमात्रं भावज्ञापनेन गुणीभूतव्यङ्ग्यस्य

---

ऋद्धिमद्वस्तु संभवदेव वर्णयिष्यते तत्रोदात्तं भविष्यतीत्याशङ्क्याह—स्वभावोक्तेर्वेति । किं च । यदि ऋद्धिमद्वस्तुवर्णनमलंकारस्तदा ऋद्धिरहितवस्तुवर्णनमप्यलंकारं कश्चित्प्रसजतीति । **महापुरुषवर्णनारूपमिति** । यदाह—'महतां चोपलक्षणम्' इति । यथा—'तदिदमरण्यं यस्मिन्दशरथवचनानुपालनव्यसनी । निवसन्बाहुसहायश्चकार रक्षःक्षयं रामः ॥' रामो हि पितृवचनमनुतिष्ठन्नयपराक्रमादिधर्मयोगादुत्साहयोगाच्च वीररसवानेवेति रसध्वनिरेवायम् ॥ ननु उपलक्षणमङ्गभावोऽर्थादुपलक्षणीयेऽर्थे । ततश्चोपलक्षणीभूतस्य रामचरितस्य वाक्यार्थीभावाभावादङ्गत्वमेव । दण्डकारण्योत्कर्षप्रतिपत्तिर्हि वाक्यार्थः सैव प्रधानं ततः कथं ध्वनिविषयतेत्याशङ्क्याह—**अथेति** । **गुणीभूतव्यङ्ग्यप्रकारा एवेति** । मध्यमकाव्यप्रभेदविषयत्वेन ये प्रतिपादिताः । **आशीस्त्विति** । आशासनमप्राप्तप्राप्तीच्छारूपमाशीः प्रयोक्तृधर्मः । अथ वा आशास्यमानो योऽसावर्थोऽनर्थप्राप्त्यनर्थोपरमात्मकः स एव प्राप्तकालतयाभ्यनुज्ञात आशीर्विषयत्वादाशीरिति । तत्र पक्षद्वयेऽपि स्नेहाभावे लोकव्यवहारमात्रानुसरणार्थत्वेनाशीर्यदि प्रयुज्यते तदा 'गतोऽस्तमर्कः' इत्यादिवद्वार्तावर्णनमात्रत्वाद्दूरापेतैवालंकारतेत्याह—**प्रियोक्तिमात्रमिति** । सहृदयानां किमप्येतदिति चमत्काराभावादित्यर्थः ॥ अथ स्नेहातिशयेनोच्यते, तदा ध्वनेर्विषयः । तदा हि कश्चित्कस्मैचित्स्नेहनिर्भरहृदयतया आशिषं प्रयुङ्क्ते तत्र च तस्य चेतोवृत्तिविशेषः स्नेहात्मा रतिभावविशेषरूप आशीर्द्वारेण प्रतीयत इति भावध्वनिरेवायम् । यथा—'अस्मिञ्जहीहि सुहृदि प्रणयाभ्यसूयामाश्लिष्य गाढममुनानतमादरेण । विन्ध्यं महानिव घनः समयेऽभिवर्षन्नानन्दजैर्नयनवारिभिरुक्षतु त्वाम् ॥' कयोश्चिन्मैत्रीसंबन्धे पिशुनजनानुप्रवेशनविच्छायैः(?)[1] कृते सति कस्यचिन्नायकस्य तत्स्नेहदार्ढ्यसंपादनायेयमुक्तिः । अत्र च सौहृदमप्यर्थप्राप्तिरूपं मैत्रीसंबन्धस्य प्रवर्धमानतयोपनिबद्धम् । जहीहीति आश्लिष्येति च प्रार्थना पञ्चम्यन्तौ[2] । उक्षत्विति प्राप्तकालतायां पञ्चमी[3] । तेनात्राशास्यमानस्य

---

१. 'विच्छायीकृ' स्यात्. २.-३. लोटो लकारस्य पञ्चमीनामाभिधेयत्वं स्यात्.

विषयः । प्रत्यनीकं च प्रतीयमानोत्प्रेक्षाप्रकार एवेति नालंकारान्तरतया वाच्यम् ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायामलंकारचूडामणिसंज्ञस्वोपज्ञकाव्यानुशासनवृत्तौ शब्दार्थालंकारवर्णनः षष्ठोऽध्यायः ।

---

मैत्रीसंबन्धस्योपनिबन्धो न त्वप्राप्तप्राप्तीच्छात्मिका आशिषः । तथा—'मदान्धमातङ्गविभिन्नशाला हतप्रवीराद्भुतभीतपौराः । त्वत्तेजसा दग्धसमस्तलीला द्विषां पुरीः पश्यतु राजलोकः ॥' अत्र शत्रुनगरीविनाशोपनिबन्धद्वारेणानर्थोपरमस्य दर्शितत्वादाशास्यमानार्थोपनिबन्ध एव ॥ नन्विदं भूयादित्येवमात्मिकायाः प्रयोक्तृधर्मत्वेनावस्थिताया आशिषोऽत्रोपदर्शनम् । तथा ह्येवंविधा शत्रुनगरी राजलोको दृश्यादिति नायमत्रार्थः संपन्नत्वादेतस्यार्थस्य किंतु तथाविधानां शत्रुनगरीणां दर्शनमत्र प्राप्तकालतयाभ्यनुज्ञायते । अत्रापि शत्रुविनाशलक्षणविभावद्वारेण हर्षात्मनो भावस्योपनिबन्धात्पूर्ववद्भावध्वनिरेवेति । तदाह—**भावज्ञापनेनेति । प्रत्यनीकमिति ।** अनीकप्रतिनिधितुल्यत्वात्प्रत्यनीकम् । यथानीकेऽभियोज्ये तत्प्रतिनिधिभूतमपरं मूढतया केनचिदभियुज्यते तथेह प्रतियोगिनि विजेये तदीयोऽन्यो विजीयत इत्यर्थः । तथा चाह—**'प्रतिपक्षमशक्तेन प्रतिकर्तुं तिरस्क्रिया । या तदीयस्य तत्स्तुत्यै प्रत्यनीकं तदुच्यते ॥'** यथा—'त्वं विनिर्जितमनोभवरूपः सा च सुन्दर भवत्यनुरक्ता । पञ्चभिर्युगपदेव शरैस्तां ताडयत्यनुशयादथ कामः ॥' तां त्वय्यनुरक्तां मनोभवशरैस्ताडयतीति वास्तवोऽर्थः । तत्र च मनोभवस्य त्वद्रूपेण विनिर्जितत्वाद्योऽसावनुशयः स कारणत्वेनोत्प्रेक्षित इत्युत्प्रेक्षा । सा च प्रतीयमाना इवादिशब्दाप्रयोगात् ॥ जातिगतिरीतिवृत्तिच्छायामुद्रोक्तियुक्तिभणितिगुम्फनाशय्यापीति वाक्ये वाक्याध्येयाप्रेक्ष्यगेयाभिनेयानि शब्दालंकाराः संभवप्रत्यक्षागमोपमानार्थापत्त्यभावलक्षणाश्चार्थालंकारा ये भोजराजेन प्रतिपादितास्ते केनचिदुक्तेष्वेवान्तर्भवन्ति । केचिच्च कंचनापि चमत्कारं नावहन्ति, केचिच्च ये काव्यशरीरस्वभावा एवेति न सूत्रिताः ॥

इत्याचार्यश्रीहेमचन्द्रविरचिते विवेके षष्ठोऽध्यायः ।

---

१. 'दिव कामः' का० प्र०. २. 'भवः' स्यात्.

सप्तमोऽध्यायः ।

इह च काव्यं नायकादिप्रतिबद्धं भवतीति नायकादिलक्षणमुच्यते । तत्र तावदुत्तममध्यमाधमभेदेन पुंसां स्त्रीणां च तिस्रः प्रकृतयो भवन्ति। तत्र केवलगुणमय्युत्तमा । स्वल्पदोषा बहुगुणा मध्यमा । दोषवत्यधमा । तत्राधमप्रकृतयो नायकयोरनुचरा विटचेटीविदूषकादयो भवन्ति । उत्तममध्यमप्रकृतियुक्तस्तु—

**समग्रगुणः कथाव्यापी नायकः ।**

समग्रगुणो नेतृत्वादिगुणयोगी वक्ष्यमाणशोभान्वितश्च। तत्र नेतृत्वादिगुणबाहुल्यात् मध्यमप्रकृतावपि समग्रगुणता ।

नेतृगुणाश्चेमे—

'नेता विनीतो मधुरस्त्यागी दक्षः प्रियंवदः ।
रक्तलोकः शुचिर्वाग्मी व्यूढवंशः स्थिरो युवा ॥
बुद्ध्युत्साहस्मृतिप्रज्ञाकलामानसमन्वितः ।
शूरो दृढश्च तेजस्वी शास्त्रचक्षुश्च धार्मिकः ॥'

कथाप्रबन्धस्तद्व्यापी। नयति व्याप्नोति इतिवृत्तं फलं चेति **नायकः**।

तस्य सात्विकान्गुणानाह—

**शोभाविलासमधुरललितमाधुर्यस्थैर्यगाम्भीर्यौदार्यतेजांस्यष्टौ सत्त्वजास्तद्गुणाः ।**

सत्त्वं देहविकारस्तस्माज्जाताः ।

क्रमेण लक्षयति—

**दाक्ष्यशौर्योत्साहनीचजुगुप्सोत्तमस्पर्धागमिका शोभा ।**

यतः शरीरविकाराद्दाक्ष्यादि गम्यते सा **शोभे**त्यर्थः ।

दाक्ष्यं यथा—

'स्फूर्जद्वज्रसहस्रनिर्मितमिव प्रादुर्भवत्यग्रतो
रामस्य त्रिपुरान्तकृद्दिविषदां तेजोभिरिद्धं धनुः ।
शुण्डारः कलभेन यद्वदचले वत्सेन दोर्दण्डक-
स्तस्मिन्नाहित एव गर्जितगुणं कृष्टं च भग्नं च तत् ॥'

शौर्यं यथा—

'खरेण खण्डिताशेषगात्रेण रणमूर्धनि ।
रामव्याजेन लोकेषु शौर्यमुत्सारितं नृणाम् ॥'

उत्साहो यथा—

'मूर्ध्ना जाम्बवतोऽभिवाद्य चरणावापृच्छ्य सेनापती-
नाश्वास्याश्रुमुखान्मुहुः प्रियसखान्प्रेष्यान्समादिश्य च ।
आरम्भं जगृहे महेन्द्रशिखरादम्भोनिधेर्लङ्घने
रंहस्वी रघुनाथपादरजसामुच्चैः स्मरन्मारुतिः ॥'

नीचजुगुप्सा यथा—

'उत्तालताडकोत्पातदर्शनोऽप्यप्रकम्पितः ।
प्रयुक्तस्तत्प्रमाथाय स्त्रैणेन विचिकित्सति ॥'

उत्तमस्पर्धा यथा—

'एतां पश्य पुरस्तटीमिह किल क्रीडाकिरातो हरः
कोदण्डेन किरीटिना सरभसं चूडान्तरे ताडितः ।
इत्याकर्ण्य कथाद्भुतं हिमनिधावद्रौ सुभद्रापते-
र्मन्दं मन्दमकारि येन निजयोर्दोर्दण्डयोर्मण्डनम् ॥'

**धीरे गतिदृष्टी सस्मितं वचो विलासः ।**

यथा—

'दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीम् ।
कौमारकेऽपि गिरिवद्गुरुतां दधानो
वीरो रसः किमयमेत्युत दर्प एव ॥'

मृदुशृङ्गारचेष्टा ललितम् ।

यथा—

'कश्चित्कराभ्यामुपगूढनालमालोलपत्त्राभिहतद्विरेफम् ।
रजोभिरन्तःपरिवेषबन्धि लीलारविन्दं भ्रमयांचकार ॥'

क्षोभेऽप्यनुल्बणं माधुर्यम् ।

महत्यपि युद्धनियुद्धव्यायामादौ क्षोभहेतौ अनुल्बणत्वं मधुरा चेष्टा माधुर्यम् । यथा—

'कपोले जानक्याः करिकलभदन्तद्युतिमुषि
स्मरस्मेरं गण्डोड्डमरपुलकं वक्त्रकमलम् ।
मुहुः पश्यञ्शृण्वन्रजनिचरसेनाकलकलं
जटाजूटग्रन्थिं द्रढयति रघूणां परिवृढः ॥'

विघ्नेऽप्यचलं स्थैर्यम् ।

सत्यपि विघ्न उद्यमादपभ्रंशः स्थैर्यम् । यथा—

'यथा यथा समारम्भो दैवात्सिद्धिं न गच्छति ।
तथा तथाधिकोत्साहो धीराणां हृदि वर्धते ॥'

हर्षादिविकारानुपलम्भकृद्गाम्भीर्यम् ।

---

१. 'सत्यपि' ख्यात.

यस्य प्रभावाद्बहिर्हर्षक्रोधादीनां विकारा दृष्टिविकासरागादयो नोपलभ्यन्ते तन्निस्तिमितदेहस्वभावं गाम्भीर्यम् । यथा—

'आहूतस्याभिषेकाय विसृष्टस्य वनाय च ।
न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः ॥'

**स्वपरेषु दानाभ्युपपत्तिसंभाषणान्यौदार्यम् ।**

अभ्युपपत्तिः परित्राणाद्यर्थिनोऽङ्गीकरणम् । परजनविषयं दानादि चेष्टात्मकमेवौदार्यम् । स्वग्रहणं तु दृष्टान्तार्थम् । स्वेष्विव परेष्वपीत्यर्थः ।

दानं यथा—

'शिरामुखैः स्यन्दत एव रक्तमद्यापि देहे मम मांसमस्ति ।
तृप्तिं न पश्यामि तवैव तावत्किं भक्षणात्त्वं विरतो गरुत्मन् ॥'

अभ्युपपत्तिर्यथा—

'एते वयममी दाराः कन्येयं कुलजीवितम् ।
ब्रूत केनात्र वः कार्यमनास्था बाह्यवस्तुषु ॥'

संभाषणं यथा—

'उत्पत्तिर्जमदग्नितः स भगवान्देवः पिनाकी गुरुः
शौर्यं यत्तु न तद्गिरां पथि ननु व्यक्तं यतः कर्मभिः ।
त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिः
सत्यब्रह्मतपोनिधेर्भगवतः किं वा न लोकोत्तरम् ॥'

**पराधिक्षेपाद्यसहनं तेजः ।**

पराच्छत्रोर्न तु गुरोर्मित्रादेर्वाधिक्षेपापमानादेरसहनं तेजः । यथा—

'ब्रूत नूतनकूष्माण्डफलानां किं भवन्त्यमी ।
अङ्गुलीदर्शनाद्येन न जीवन्ति मनस्विनः ॥'

नायकभेदानाह—

**धीरोदात्तललितशान्तोद्धतभेदात्स चतुर्धा।**

स इति नायकः। धीरशब्दः प्रत्येकमभिसंबध्यते। तेन धीरोदात्तः, धीरललितः, धीरशान्तः, धीरोद्धत इति।

**दक्षिणधृष्टानुकूलशठभेदादेकैकश्चतुर्धा।**

एते शृङ्गाररसाश्रयिणो भेदाः। इति षोडश भेदा नायकस्य।

धीरोदात्तादींल्लक्षयति—

**गूढगर्वः स्थिरो धीरः क्षमावान् अविकत्थनः महासत्त्वो दृढव्रतो धीरोदात्तः।**

गूढगर्वो विनयच्छन्नावलेपः। अविकत्थनोऽनात्मश्लाघापरः। महासत्त्वः क्रोधाद्यनभिभूतान्तःसत्त्वः। दृढव्रतोऽङ्गीकृतनिर्वाहकः। यथा—रामादिः।

**कलासक्तः सुखी शृङ्गारी मृदुर् निश्चिन्तो धीरललितः।**

कलासु गीताद्यास्वासक्तः। सुखी भोगप्रवणः। शृङ्गारप्रधानः सुकुमाराकारः। सचिवादिसंविहितयोगक्षेमत्वाच्चिन्तारहितः। यथा—वत्सराजः।

**विनयोपशमवान् धीरशान्तः।**

यथा मालतीमाधव-मृच्छकटिकादौ—माधव-चारुदत्तादिः।

**शूरो मत्सरी मायी विकत्थनश् छद्मवान् रौद्रोऽवलिप्तो धीरोद्धतः।**

मत्सरी असहनः। मन्त्रादिबलेनाविद्यमानवस्तुप्रकाशको मायी। छद्म वञ्चनमात्रम्। रौद्रश्चण्डः। अवलिप्तः शौर्यादिमदवान्। यथा—जामदग्न्यरावणादिः।

'देवा धीरोद्धता ज्ञेयाः स्युर्धीरललिता नृपाः ।
सेनापतिरमात्यश्च धीरोदात्तौ प्रकीर्तितौ ॥
धीरप्रशान्ता विज्ञेया ब्राह्मणा वणिजस्तथा ।
इति चत्वार एवेह नायकाः समुदाहृताः ॥'

इत्यन्तरश्लोकौ ।

अथ नायकस्य शृङ्गारित्वेऽवस्थाभेदानाह—

**ज्येष्ठायामपि सहृदयो दक्षिणः ।**

कनिष्ठायां रक्तो ज्येष्ठायामपि समानहृदयो दाक्षिण्यशीलत्वाद्दक्षिणः ।

---

**देवा धीरोद्धता इति** । अत्र हि 'धीरोदात्तं जयति चरितं रामनाम्नश्च विष्णोः' इत्यादेर्दर्शनाज्जनकप्रभृतीनां रामादीनां च न धीरललितत्वानुचितत्व-मिति धीरललितत्वं राज्ञ एव वर्णनीयं नान्यस्य । सेनापत्यमात्ययोर्धीरोदात्तत्व-मेव । देवानां धीरोद्धतत्वमेव । द्विजादीनां धीरप्रशान्तत्वमेवेत्येवं परं व्याख्ये-यम् । धीरोद्धतादिशब्दाश्च यथोक्तगुणसमारोपितावस्थाभिधायिनो वत्सवृषम-होक्षादिवन्न जात्या कश्चिदवस्थितरूपो धीरोद्धतादिरस्ति । तत्त्वे हि महाकवि-प्रबन्धेषु विरुद्धानेकरूपाभिधानमसंगतमेव स्यात् । जातेरनपायित्वात् । तथा च भवभूतिना एक एव जामदग्न्यः 'कैलासोद्धारसार–' इत्यादिभी रामादीन् प्रति प्रथमं धीरोद्धतत्वेन, पुनः 'ब्राह्मणातिक्रमत्यागो भवतामेव भूयते'[1] इत्यादिना रावणं प्रति धीरोदात्तत्वेन, 'पुण्या ब्राह्मणजातिः–' इत्यादिभिश्च धीरशान्तत्वे-नोपवर्णितः । न चावस्थान्तराभिधानमनुचितम् । अङ्गभूतनायकानां नायका-न्तरपेक्षया[2] महासत्त्वादेरव्यवस्थितत्वात् । अङ्गिनस्तु रामादेरेकप्रबन्धोपात्तान् प्रत्येकरूपत्वादारम्भोपात्तावस्थातोऽवस्थान्तरोपादानमन्याय्यम् । यथोदात्ताभि-मतस्य रामस्य छद्मना वालिवधादमहासत्त्वतया स्वावस्थापरित्याग इति । वक्ष्य-माणानां च दक्षिणाद्यवस्थानां पूर्वां प्रत्यन्यया हृत इति नित्यसापेक्षत्वेनावि-र्भावानुपात्तावस्थातोऽवस्थान्तराभिधानमङ्गाङ्गिनोरप्यविरुद्धमिति । अन्तरश्लो-

१. 'भूतये' का० प्र०. २. 'न्तरापेक्षया' स्यात्.

यथा—

'प्रसीदत्यालोके किमपि किमपि प्रेमगुरवो
रतक्रीडाः कोऽपि प्रतिदिनमपूर्वोऽस्य विनयः।
सविस्रम्भः कश्चित्कथयति च किंचित्परिजनो
न चाहं प्रत्येमि प्रियसखि किमप्यस्य विकृतम् ॥'

**व्यक्तापराधो धृष्टः।**

यथा—

'लाक्षालक्ष्म ललाटपट्टमभितः केयूरमुद्रा गले
वक्त्रे कज्जलकालिमा नयनयोस्ताम्बूलरागोऽपरः।
दृष्ट्वा कोपविधायि मण्डनमिदं प्रातश्चिरं प्रेयसो
लीलातामरसोदरे मृगदृशः श्वासाः समाप्तिं गताः ॥'

**एकभार्योऽनुकूलः।**

यथा—

'इयं गेहे लक्ष्मीरियममृतवृष्टिर्नयनयो-
रसावस्याः स्पर्शो वपुषि बहलश्चन्दनरसः।
अयं कण्ठे बाहुः शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥'

**गूढापराधः शठः।**

यथा—'एकत्रासनसंगते प्रियतमे—' इति।

नायकविजेयं प्रतिनायकमाह—

**व्यसनी पापकृल्लुब्धः स्तब्धो धीरोद्धतः प्रतिनायकः।**

यथा—रामयुधिष्ठिरयो रावणदुर्योधनौ।

नायिकालक्षणमाह—

**तद्गुणा स्वपरसामान्या नायिका त्रेधा।**

तद्गुणा यथोक्तसंभविनायकगुणयोगिनी नायिका। सा च स्वकीया, परकीया, सामान्या, चेति त्रेधा।

स्वस्त्रीलक्षणमाह—

**स्वयमूढा शीलादिमती स्वा।**

आदिग्रहणादार्जवलज्जागृहाचारनैपुण्यादिपरिग्रहः।

शीलं यथा—

'[1]कुलबालियाएँ पेच्छह जोव्वणलायण्णबिब्भमविलासा।
पवसन्ति व पवसिए एन्ति व पिए घरम इन्ति॥'

**वयःकौशलाभ्यां मुग्धा मध्या प्रौढेति सा त्रेधा।**

वयः शरीरावस्थाविशेषः, कौशलं कामोपचारनैपुण्यम्, ताभ्यां मुग्धा, एवं मध्या प्रौढा चेति।

तत्र वयसा मुग्धा यथा—

'दोर्मूलावधिसूत्रितस्तनमुरः स्निह्यत्कटाक्षे दृशौ
किंचित्ताण्डवपण्डिते स्मितसुधासिक्तोक्तिषु भ्रूलते।
चेतः कन्दलितं स्मरव्यतिकरैर्लावण्यमङ्गैर्धृतं
तन्वङ्ग्यास्तरुणिम्नि सर्पति शनैरन्यैव काचिद्गतिः॥'

कौशलेन यथा—

'उदितो रसादमथ वेपथुमत्सुदृशोभिभर्तृविधुरं त्रपया।
वपुरादरातिशयशंसि पुरः प्रतिपत्तिमूढमपि बाढमभूत्॥'

---

**काविति।** अन्तरे मध्ये वक्तव्यशेषाभिधायकौ श्लोकावन्तरश्लोकौ। **वयसा मुग्धेति।** वयसा संपूर्णेत्यर्थः। एवं कौशलेनापि॥

---

१. 'कुलबालिकायाः प्रेक्षध्वं यौवनलावण्यविभ्रमविलासाः।
प्रविशन्तीव प्रवसिते आगच्छन्तीव प्रिये गृहमागते॥' [इति च्छाया].

वयसा मध्या यथा—

'तरन्तीवाङ्गानि स्खलदमललावण्यजलधौ
प्रथिम्नः प्रागल्भ्यं स्तनजघनमुन्मुद्रयति च ।
दृशोर्लीलारम्भाः स्फुटमपवदन्ते सरलता-
महो सारङ्गाक्ष्यास्तरुणिमनि गाढः परिचयः ॥'

कौशलेन यथा—

'स्वेदाम्भःकणिकाचितेऽपि वदने जातेऽपि रोमोद्गमे
विस्रम्भेऽपि गुरौ पयोधरभरे कम्पे च वृद्धिं गते ।
दुर्वारस्मरनिर्भरेऽपि हृदये नैवाभियुक्तः प्रिय-
स्तन्वङ्ग्या हठकेशकर्षणघनश्लेषामृते लुब्धया ॥'

वयसा प्रौढा यथा—

'नितम्बो मन्दत्वं जनयति गुरुत्वाद्द्रुतगते-
र्महत्त्वादुद्वृत्तः स्तनकलशभारः शमयति ।
विकासिन्या कान्त्या प्रकटयति रूपं मुखशशी
ममाङ्गानीमानि प्रसभमभिसारे हि रिपवः ॥'

कौशलेन यथा—

'उद्धृतैर्निभृतमेकमनेकैश्छेदवन्मृगदृशामविरामैः ।
श्रूयते स्म मणितं कलकाञ्चीनूपुरध्वनिभिरक्षतमेव ॥'

**धीराधीराधीराधीराभेदादन्त्ये त्रेधा ।**

अन्त्ये मध्याप्रौढे । त्रेधा धीरामध्या, धीराधीरामध्या, अधीरामध्या । एवं प्रौढापि त्रेधा ।

**षोढापि ज्येष्ठाकनिष्ठाभेदाद्द्वादशधा । मध्याप्रौढयोः प्रत्येकं त्रिभेदत्वम् ।**

---

**वयसा मध्येति ।** किंचिदसंपूर्णेत्यर्थः । **वयसा प्रौढेति ।** संपूर्णेत्यर्थः ।

षड्विधापि ज्येष्ठाकनिष्ठाभेदाद्द्वादशधा स्वस्त्री भवति । तत्र प्रथममूढा ज्येष्ठा । पश्चादूढा कनिष्ठा ।

अथासां क्रोधचेष्टामाह—

**सोत्प्रासवक्रोक्त्या सबाष्पया वाक्पारुष्येण क्रोधिन्यो मध्याधीराद्याः ।**

मध्याधीराद्यास्तिस्रोऽपि यथासंख्यं सोत्प्रासवक्रोक्त्यादिभिः क्रोधं कुर्वन्ति ।

तत्र सोत्प्रासवक्रोक्त्या धीरामध्या यथा—

'न खलु वयममुष्य दानयोग्याः
पिबति च पाति च यासकौ रहस्त्वाम् ।
व्रज विटपममुं ददस्व तस्यै
भवतु यतः सदृशोश्चिराय योगः ॥'

सबाष्पया सोत्प्रासवक्रोक्त्या धीराधीरा यथा—'बाले नाथ—' इति ।

वाक्पारुष्येणाधीरा यथा—

'धिङ्मां किं समुपेत्य चुम्बसि बलान्निर्लज्ज लज्जा क्व ते
वस्त्रान्तं शठ मुञ्च मुञ्च शपथैः किं धूर्त निर्बाधसे ।
खिन्नाहं तव रात्रिजागरतया तामेव याच प्रियां
निर्माल्योज्झितपुष्पदाननिकरे का षट्पदानां रतिः ॥'

**उपचारावहित्थाभ्यामानुकूल्यौदासीन्याभ्यां संतर्जनघाताभ्यां प्रौढाधीराद्याः ।**

प्रौढाधीराद्यास्तिस्रोऽपि यथासंख्यमुपचारावहित्थादिद्विकत्रयेण क्रोधिन्यो भवन्ति ।

तत्र धीरा प्रौढा सोपचारा यथा—

'एकत्रासनसंगतिः परिहृता प्रत्युद्गमाद्दूरत-
स्ताम्बूलानयनच्छलेन रभसाश्लेषोऽपि संविघ्नितः ।
आलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्यान्तिके
कान्तं प्रत्युपचारतश्चतुरयो[1] कोपः कृतार्थीकृतः ॥'

सैव सावहित्था यथा—

'वरं भ्रूभङ्गास्ते प्रकटितगुरुक्रोधविभवा
वरं सोपालम्भाः प्रणयमधुरा गद्गदगिरः ।
वरं मानो येन प्रसभजनितोऽनादरविधि-
र्न गूढान्तःकोपा कठिनहृदये संवृतिरियम् ॥'

प्रौढा धीराधीरानुकूला यथा—

'यत्पाणिर्न निवारितो निवसनग्रन्थिं समुद्ग्रन्थय-
न्भ्रूभेदो न कृतो मनागपि मुहुर्यत्खण्ड्यमानेऽधरे ।
यन्निःशङ्कमिहार्पितं वपुरहो पत्युः समालिङ्गने
मानिन्या कथितोऽनुकूलविधिना तेनैव मन्युर्महान् ॥'

सैवोदासीना यथा—

'आयस्ता कलहं पुरेव कुरुते न स्रंसते वाससो
भग्नभ्रूरतिखण्ड्यमानमधरं धत्ते न केशग्रहे ।
अङ्गान्यर्पयति स्वयं भवति नो वामा हठालिङ्गने
तन्व्या शिक्षित एष संप्रति कुतः कोपप्रकारोऽपरः ॥'

प्रौढाधीरा संतर्जनेन यथा—

'तथाभूदस्माकं प्रथममविभिन्ना तनुरियं
ततोऽनु त्वं प्रेयानहमपि हताशा प्रियतमा ।

---

१. 'चतुरया' स्यात्.

इदानीं त्वं नाथो वयमपि कलत्रं किमपरं
मयाप्तं प्राणानां कुलिशकठिनानां फलमिदम् ॥'

सैव साघाता यथा—'कोपात्कोमलबाहुलोल–' इति ।

परस्त्रीलक्षणमाह—

**परोढा परस्त्री कन्या च ।**

परेणोढा परस्य स्त्री परस्त्री । सा च नाङ्गिनि रसे उपकारिणीति नास्याः प्रपञ्चः कृतः । ऊढेत्युपलक्षणम् । अवरुद्धापि परस्त्रीत्युच्यते ।

परोढा यथा—'दृष्टिं हे प्रतिवेशिनि–' इति ।

कन्या तु पित्राद्यायत्तत्वादनूढापि परस्त्री । यथा—

'दृष्टिः शैशवमण्डना प्रतिकलं प्रागल्भ्यमभ्यस्यते
पूर्वाकारमुरस्तथापि कुलयोः[1] शोभां नवामीहते ।
नो धत्ते गुरुतां तथाप्युपचिताभोगा नितम्बस्थली
तन्व्याः स्वीकृतमन्मथं विजयते नेत्रैकपेयं वपुः ॥'

सामान्यां लक्षयति—

**गणिका सामान्या ।**

कलाप्रागल्भ्यधौर्त्याभ्यां गणयति कलयति गणिका सामान्या सगुणस्य निर्गुणस्य च साधारणी केवलधनलोभालम्बनेन कृत्रिमप्रेमत्वात् । यथा—

'गाढालिङ्गनपीडितस्तनतटं स्विद्यत्कपोलस्थलं
संदष्टाधरमुक्तसीत्कृतलसद्भ्रूभ्रान्तनृत्यत्करम् ।
चाटुप्रायवचोविचित्रभणितं घातै रुतैश्चाङ्कितं
वेशानां धृतिधाम पुष्पधनुषः प्राप्नोति धन्यो रतम् ॥'

१. 'कुचयोः' स्यात्.

स्वपरस्त्रीणामवस्था आह—

**स्वाधीनपतिका प्रोषितभर्तृका खण्डिता कलहान्तरिता वासकसज्जा विरहोत्कण्ठिता विप्रलब्धा अभिसारिका चेति स्वस्त्रीणामष्टावस्थाः ।**

रतिगुणाकृष्टत्वेन पार्श्वस्थितत्वात्**स्वाधीन** आयत्तः **पति**र्यस्याः सा तथा । यथा—

'[1]सालोए च्चिय सूरे घरिणी घरसामियस्स घित्तूण ।
णेच्छन्तस्स [2]वि चलणे धुयइ हसन्ती हसन्तस्स ॥' इति ।

कार्याय **प्रोषितो** देशान्तरं गतो **भर्ता** यस्याः सा तथा । यथा—

'श्वासा बाष्पजलं गिरः सकरुणा मार्गे च नेत्रार्पणं
केनेदं न कृतं प्रियस्य विरहे कस्यासवो निर्गताः ।
सख्येवं यदि नास्मि तेन कलिता पान्थः कथं प्रोषितः
प्राणाः संप्रति मे कलङ्कमलिनास्तिष्ठन्तु वा यान्तु वा ॥'

वनितान्तरव्यासङ्गादनागते प्रिये दुःखसंतप्ता **खण्डिता** । यथा—

'नवनखपदमङ्गं गोपयस्यंशुकेन
स्थगयसि मुहुरोष्ठं पाणिना दन्तदष्टम् ।
प्रतिदिशमपरस्त्रीसङ्गशंसी विसर्प-
न्नवपरिमलगन्धः केन शक्यो वरीतुम् ॥'

ईर्ष्याकलहेन निष्क्रान्तभर्तृकत्वात्तत्संगमसुखेनान्तरिता **कलहान्तरिता** । यथा—

---

१. 'सालोके एव सूर्ये गृहिणी गृहस्वामिकस्य गृहीत्वा ।
अनिच्छतश्च चरणे धावति हसन्ती हसतः ॥' [इति च्छाया.]

२. 'वि पाए' इति पाठे 'अपि पादौ' इत्यर्थः.

'निःश्वासा वदनं दहन्ति हृदयं निर्मूलमुन्मूल्यते
निद्रा नैति न दृश्यते प्रियमुखं नक्तंदिनं रुद्यते।
अङ्गं शोषमुपैति पादपतितः प्रेयांस्तथोपेक्षितः
सख्यः कं गुणमाकलय्य दयिते मानं वयं कारिताः॥'

'परिपाट्यां फलार्थे वा नवे प्रसव एव वा।
दुःखे चैव प्रमोदे च षडेते वासकाः स्मृताः॥
उचिते वासके स्त्रीणामृतुकाले तु वा बुधैः।
द्वेष्याणामथ वेष्टानां कर्तव्यमुपसर्पणम्॥'

इति नयेन वासके रतिसंभोगलालसतयाङ्गरागादिना सज्जा प्रगुणा **वासकसज्जा**। यथा—

'तल्पकल्पनविधेरनन्तरं भर्तृमार्गमवलोकते मुहुः।
दर्पणेक्षणमुदीक्षते वपुर्हर्षभूषणमनिन्द्यभूषणा॥'

---

**परिपाट्यामिति**। परिपाटिर्यथा कल्पितानुपूर्वी। अस्या एकेन दिनेन वारः अस्या द्वाभ्यामित्यादिः॥ तदपवादमाह—**फलार्थे इति**। ऋताविति यावत्। **नव इति**। नवत्वे प्रसवे वृत्ते चिरविरहखिन्नां सुखयितुम्। दुःखे तदीयबन्धुव्यापत्त्यादौ दुःखिता आश्वसनीयेति। **प्रमोद इति**। तदीयपुत्रोत्सवादौ। उत्सवो हि माननीय इत्युक्तम्। वासयन्ति तत्र स्थाने रात्रिमिति वासका रात्र्युचिताः कामोपचाराः। फलार्थ इत्यस्य हेतोः सत्त्वापवादकत्वं दर्शयितुं धर्मवृत्तिना राज्ञा परिपाट्या दुर्भगापि सेव्येति च निरूपयितुमाह—**उचिते वासके इति**। आर्तवकालो हि भूयानपि फलतः परिमितीभवति। यथोक्तम्—'ऋतुः षोडश तेऽत्राद्याश्चतस्रो दशमात्पराः। त्रयोदशी च निन्द्याः स्युरयुग्माः कन्यकोद्भवाः। षष्ठ्यष्टमी च दशमी द्वाभ्यां वर्णैश्च साधिका। युग्मा पुत्राय रात्रिः स्यात्' इति।

---

१. 'नक्तंदिवं' स्यात्.

प्रियमन्या चिरयति भर्तरि **विरहोत्कण्ठिता** । यथा—

'अन्यत्र व्रजतीति का खलु कथा नाप्यस्य तादृक्सुहृ-
द्यो मां नेच्छति नागतश्च स हहा कोऽयं विधेः प्रक्रमः ।
इत्यल्पेतरकल्पनाकवलितस्वान्ता निशान्तान्तरे
बाला वृत्तविवर्तनव्यतिकरा नाप्नोति निद्रां निशि ॥'

दूतीमुखेन स्वयं वा संकेतं कृत्वा केनापि कारणेन वञ्चिता **विप्रलब्धा** । यथा—

'तत्संकेतगृहं प्रियेण कथितं संप्रेष्य दूतीं स्वयं
तच्छून्यं सुचिरं निषेव्य सुदृशा पश्चाच्च भग्नाशया ।
स्थानोपासनसूचनाय विगलत्सान्द्राञ्जनैरश्रुभि-
र्भूमावक्षरमालिकेव लिखिता दीर्घं रुदत्या शनैः ॥'

अभिसरत्यभिसारयति वा कामार्तं कान्तमि**त्यभिसारिका** । यथा—

'उरसि निहितस्तारो हारः कृता जघने घने
कलकलवती काञ्ची पादौ रणन्मणिनूपुरौ ।
प्रियमभिसरस्येवं मुग्धे त्वमाहतडिण्डिमा
यदि किमपरं त्रासोद्भ्रान्ता दिशो मुहुरीक्षसे ॥'

तथा—

'न च मेऽवगच्छति यथा लघुतां करुणां यथा च कुरुते स मयि ।
निपुणमथैनमभिगम्य वदेरभिदूति कांचिदिति संदिदिशे ॥'

---

तत्रापि नक्षत्रविशेषपरिवर्जनम् । पुत्रश्च राज्ञां मुख्यं फलम् । यथाह—'प्रजायै

१. 'अनेककार्यव्यासङ्गाद्यस्या नागच्छति प्रियः । तस्यानुगमदुःखार्ता विरहोत्कण्ठिता भवेत् ॥' इति भरतसंवादात् 'कार्यासक्त्या' इति भवेत्.

अन्वर्थ एवासां लक्षणमित्याहत्य लक्षणं न कृतम् ।

**अन्त्यत्र्यवस्था परस्त्री ।**

परस्त्रियौ तु कन्योढे । संकेतात्पूर्वं विरहोत्कण्ठिते, पश्चाद्विदूषकादिना सहाभिसरन्त्यावभिसारिके, कुतोऽपि कारणात्संकेतस्थानमप्राप्ते नायके विप्रलब्धे इति त्र्यवस्थतैवानयोरिति ।

नायिकानां प्रतिनायिकामाह—

**ईर्ष्याहेतुः सपत्नी प्रतिनायिका ।**

यथा—रुक्मिण्याः सत्यभामा । दूत्यश्च नायिकानां लोकसिद्धा एवेति नोक्ताः ।

अथ स्त्रीणामलंकारानाह—

**सत्त्वजा विंशतिः स्त्रीणामलंकाराः ।**

संवेदनरूपात्प्रसृतं यत्ततोऽन्यद्देहधर्मत्वेनैव स्थितं सत्त्वम् । यदाह—'देहात्मकं भवेत्सत्त्वम्' इति । ततो जाताः सत्त्वजाः राजसतामसशरीरेष्वसंभवात् । चाण्डलीनामपि हि रूपलावण्यसंपदो दृश्यन्ते न तु चेष्टालंकारा इति । तासामपि वा भवन्तु । उत्तमतामेव सूचयन्ति । अलंकारा देहमात्रनिष्ठा न तु चित्तवृत्तिरूपाः । ते यौवने उद्रिक्ता दृश्यन्ते । बाल्येऽनुद्भिन्ना वार्धके तिरोभूताः । यद्यपि च ते पुरुषस्यापि सन्ति, तथापि योषितां न एवालंकारा इति तद्गतत्वेनैव वर्णिताः ।

पुंसस्तूत्साहवृत्तान्त एव परोऽलंकारः । तथा च सर्वेष्वेव नायकभेदेषु धीरत्वमेव विशेषणतयोक्तम् । तदाच्छादितास्तु शृङ्गारादयो धीरललित इत्यादौ ।

अलंकाराश्च केचन क्रियात्मकाः केचिद्गुणस्वभावाः । क्रियात्मका अपि केचन प्राग्जन्माभ्यस्तरतिभावमात्रेण सत्त्वोद्बुद्धेन देहमात्रे सति

भैवति ते अङ्गजा इत्युच्यन्ते । अन्ये त्वद्यतनजन्मसमुचितविभाववशस्फुटीभवद्रतिभावानुविद्धे देहे परिस्फुरन्ति ते स्वाभाविकाः । स्वसाद्रतिभावात् हृदयगोचरीभूताद्भवन्तीति । तथाहि कस्याश्चिन्नायिकायाः कश्चिदेव स्वभावबलाद्भवति अन्यस्या अन्यः कस्याश्चिद्द्वौ त्रयः इत्याद्यतोऽपि स्वाभाविकाः । भावहावहेलास्तु सर्वा एव सर्वास्वेव सत्त्वाधिकासूत्तमाङ्गनासु भवन्ति । तथा शोभादयः सप्त । एवमङ्गजाः स्वाभाविकाः क्रियात्मानः । शोभादयस्तु गुणात्मानः ।

**ते चायत्नजाः ।**

यत्नाज्जाताः क्रियात्मकाः । इच्छातो यत्नतस्ततो देहे क्रियेति पदार्थविदः । ततोऽन्येऽयत्नजाः ।

तान्क्रमेण लक्षयन्ति—

**भावहावहेलास्त्रयोऽङ्गजा अल्पभूयोविकारात्मकाः ।**

यद्यपि

> 'देहात्मकं भवेत्सत्त्वं सत्त्वाद्भावः समुत्थितः ।
> भावात्समुत्थितो हावो हावाद्धेला समुत्थिता ॥'

इति भरतवचनात्क्रमेणैतेषां हेतुभावः, तथापि परम्परया तीव्रतमसत्त्वस्याङ्गस्यैव करणत्वादङ्गजा इत्युक्ताः । एवं च परस्परसमुत्थितत्वेऽप्यमीषामङ्गजत्वमेव । तथा हि—कुमारीशरीरे प्रौढतरकुमार्यन्तरगतहेलावलोकने हावोद्भवो भावश्चेदुल्लासितपूर्वः । अन्यथानुभावस्यैवोद्भवः । एवं भावेऽपि दृष्टे हावो हेला वा । यदा तु हावावस्थोद्भिन्नपूर्वा परत्र च हेला दृश्यते तदा हेलातोऽपि हेला । एवं हावात् हावः, भावाद्भाव इत्यपि वाच्यम् । एवं परकीयभावादिस्मरणात्सरसकाव्यादेरपि हेलादीनां

---

१. 'भवन्ति' स्यात्.

योगो भवतीति मन्तव्यम् । एतदन्योन्यसमुत्थितत्वं तत्राङ्गस्याल्पो विकारोऽन्तर्गतवासनात्मतया वर्तमानं रत्याख्यं भावं भावयन् सूचयन् भावः । यथा—

'दृष्टिः सालसतां बिभर्ति न शिशुक्रिडासु बद्धादरा
श्रोत्रं प्रेषयति प्रवर्तितसखीसंभोगवार्तास्वपि ।
पुंसामेकमपेतशङ्कमधुना नारोहति प्राग्यथा
बाला नूतनयौवनव्यतिकरावष्टभ्यमाना शनैः ॥'

बहुविकारात्मा भ्रूतारकचिबुकग्रीवादेर्धर्मः स्वचित्तवृत्तिं परत्र जुह्वतीं ददतीं कुमारीं हावयतीति हावः । सा चाद्यापि स्वयं रतेः प्रबोधं न मन्यते केवलं तत्संस्कारबलात्तथा विकारान्करोति यैर्दृष्टा तथा कल्पयति । यथा—

'स्मितं किंचिन्मुग्धं तरलमधुरो दृष्टिविभवः
परिस्पन्दो वाचामभिनवविलासोक्तिसरसः ।
गतीनामारम्भः किसलयति लीलापरिकरः
स्पृशन्त्यास्तारुण्यं किमिव न हि रम्यं मृगदृशः ॥'

यदा तु रतिवासनाप्रबोधात्तां प्रबुद्धां रतिमभिमन्यते केवलं समुचितविभावोपग्रहविरहान्निर्विषयतया स्फुटीभावं न प्रपद्यते तदा तज्जनितबहुतराङ्गविकारात्मा हेला हावस्य संबन्धिनी क्रिया प्रसरत्वावेगवाहित्वमित्यर्थः । वेगेन हि गच्छन् हेलतीत्युच्यते लोके इति । एवं चोद्भिद्योद्भिद्य विश्राम्यन् हावः । स एव प्रसरणैकस्वभावो हेलेति । यथा— 'कुरङ्गीवाङ्गानि—' इति ।

अत्र ह्यन्तर्गतिरतिप्रबोधमात्रमुक्तं न त्वभिलाषशृङ्गार इति मन्तव्यम् । तदेतद्ब्राह्मणस्योपनयनमिव भविष्यत्पुरुषार्थसद्मपीठबन्धत्वेन योषितामामनन्ति ।

**लीलादयो दश स्वाभाविकाः ।**

विशिष्टविभावलाभे रतौ सविषयत्वेन स्फुटीभूतायां तदुपबृंहणकृता देहविकारा लीलाविलासविच्छित्तिविव्वोकविभ्रमकिलिकिंचितमोट्टायितकुट्टमितललितविहृतनामानः । एते च प्राप्तसंभोगेऽप्राप्तसंभोगे च भवन्ति । शोभादयश्च सप्त वक्ष्यमाणाः प्राप्तसंभोगतायामेव ।

लीलादीन् लक्षयति ।

**वाग्वेषचेष्टितैः प्रियस्यानुकृतिर्लीला ।**

प्रियगतानां वाग्वेषचेष्टानां प्रियबहुमानातिशयेन नत्वघट्टकरूपेणात्मनियोजनमनुकृतिर्लीला ।

यथा—

'[1]जं जं करेसि जं जं च जंपसे जह तुमं नियंसेसि ।
तं तमणुसिस्किरीए दियहो दियहो न संवडइ ॥'

**स्थानादीनां वैशिष्ट्यं विलासः ।**

स्थानमूर्धता । आदिशब्दादुपवेशनगमनहस्तभ्रूनेत्रकर्मपरिग्रहः । तेषां वैशिष्ट्यं विलासः । यथा—

'अत्रान्तरे किमपि वाग्विभवातिवृत्तं
वैचित्र्यमुल्लसितविभ्रममायताक्ष्याः ।
तद्भूरिसात्त्विकविकारविशेषरम्य-
माचार्यकं विजयि मान्मथमाविरासीत् ॥'

**गर्वादल्पाकल्पन्यासः शोभाकृद्विच्छित्तिः ।**

सौभाग्यगर्वादनादरेण कृतो माल्याच्छादनभूषणविलेपनरूपस्याल्पस्याकल्पस्य न्यासः सौभाग्यमहिम्ना शोभाहेतुर्विच्छित्तिः । यथा—

---

१. 'यद्यत्करोषि यद्यच्च जल्पसे यथा त्वं नियमयसि ।
तत्तदनुस्वीकुर्वे दिवसो दिवसो न संवर्धते ॥' [इति च्छाया.]

'सिहिपिच्छकण्णऊरा जाया वाहस्स गब्बिरी भमइ ।
मुत्ताहलरइयपसाहणाण मज्झे सवत्तीणम् ॥'[1]

**इष्टेऽप्यवज्ञा विव्वोकः ।**

सौभाग्यगर्वादिष्टेऽपि वस्तुन्यनादरो विव्वोकः । यथा—

'निर्विभुज्य दशनच्छदं ततो वाचि भर्तुरवधीरणापरा ।
शैलराजतनया समीपगामाललाप विजयामहेतुकम् ॥'

**वागङ्गभूषणानां व्यत्यासो विभ्रमः ।**

वचनेऽन्यथावक्तव्येऽन्यथाभाषणं हस्तेवादातव्ये[2] पादेनादानं रसनायाः कण्ठे न्यासः । यथा—

'चकार काचित्सितचन्दनाङ्के काञ्चीकलापं स्तनभारपृष्ठे ।
प्रियं प्रति प्रेषितचित्तवृत्तिर्नितम्बबिम्बे च बबन्ध हारम् ॥'

**स्मितहसितरुदितभयरोषगर्वदुःखश्रमाभिलाषसंकरः किलिकिंचितम् ।**

सौभाग्यगर्वात्स्मितादीनां संकरः किलिकिंचितम् । यथा—

'रतिक्रीडाद्यूते कथमपि समासाद्य समयं
मया लब्धे तस्याः क्वणितकलकण्ठार्धमधरे ।
कृतभ्रूभङ्गासौ प्रकटितविलक्षार्धरुदित-
स्मितक्रुद्धोद्भ्रान्तं पुनरपि विदध्यान्मयि सुखम् ॥'

**प्रियकथादौ तद्भावभावनोत्था चेष्टा मोट्टायितम् ।**

प्रियस्य कथायां दर्शने वा तद्भावभावनं तन्मयत्वं ततो योद्भूता चेष्टा लीलादिका सा मदनाङ्गपर्यन्ताङ्गपर्यन्ताङ्गमोटनान्मोट्टायितम् । यथा—

---

१. 'शिखिपिच्छकर्णपूरा जाया व्याधस्य गर्विणी भ्रमति ।
मुक्ताफलरचितप्रसाधनानां मध्ये सपत्नीनाम् ॥' [इति च्छाया.]

२. 'हस्तेना' स्यात्.

'स्मरदवथुनिमित्तं गूढमन्वेतुमस्याः
सुभग तव कथायां प्रस्तुतायां सखीभिः ।
हरति विनतपृष्ठोदग्रपीनस्तनाग्रा
नतवलयितबाहुर्जृम्भितैः साङ्गभङ्गैः ॥'

**अधरादिग्रहाद्दुःखेऽपि हर्षः कुट्टमितम् ।**

अधरस्तनकेशादीनां ग्रहणात् । प्रियतमेनेति शेषः । दुःखेऽपि हर्षः कुट्टमितम् । यथा—

'ईषन्मीलितलोललोचनयुगं व्यावर्तितभ्रूलतं
संदष्टाधरवेदनाप्रलपितं मा मेति मन्दाक्षरम् ।
तन्वङ्ग्याः सुरतावसानसमये दृष्टं मया यन्मुखं
स्वेदार्द्रीकृतपाण्डुगण्डपुलकं तत्केन विस्मार्यते ॥'

**मसृणोऽङ्गन्यासो ललितम् ।**

अङ्गानां हस्तपादभ्रूनेत्राधरादीनां मसृणः सुकुमारो विन्यासो ललितम् । यथा—

'सभ्रूभङ्गं करकिसलयावर्जनैरालपन्ती
सा पश्यन्ती ललितललितं लोचनस्याञ्चलेन ।
विन्यस्यन्ती चरणकमले लीलया स्वैरपातै-
र्निःसंगीतं प्रथमवयसा नर्तिता पङ्कजाक्षी ॥'

**कर्तव्यवशादायते एव हस्तादिकर्मणि यद्वैचित्र्यं स विलासः ।**

यत्र तु बाह्यव्यापारयोग एव न कश्चिदस्ति नादातव्यबुद्धिरथ च सुकुमारकरादिव्यापारणं तल्ललितम् । अन्ये तु 'लड विलासे' इति पाठं प्रमाणयन्तो विलासमेव सातिशयं ललितसंज्ञमाहुः ।

---

गृहमेधिनाम्' इति ॥ अनेनेति । अलक्तकोपरक्तस्य हि चन्द्रमसि परं भाग-

**व्याजादेः प्राप्तकालस्याप्यवचनं विहृतम् ।**

व्याजो मौग्ध्यादिप्रख्यापनाशयः । आदिग्रहणान्मौर्ख्यलज्जादिपरिग्रहः । ततो भाषणावसरेऽप्यभाषणं विहृतम् । यथा—

'पत्युः शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम् ।
सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान ॥'

केचिद्बाल्यकौमारयौवनसाधारणविहारविशेषं क्रीडितम् । क्रीडितमेव च प्रियतमविषयं केलिं चालंकारावाहुः । यथा—

'मन्दाकिनीसैकतवेदिकाभिः सा कन्दुकैः कृत्रिमपुत्रकैश्च ।
रेमे मुहुर्मध्यगता सखीनां क्रीडारसं निर्विशतीव बाल्ये ॥'

'व्यपोहितं लोचनतो मुखानिलैरपारयन्तं किल पुष्पजं रजः ।
पयोधरेणोरसि काचिदुन्मनाः प्रियं जघानोन्नतपीवरस्तनी ॥'

**शोभादयः सप्तायत्नजाः ।**

शोभाकान्तिदीप्तिमाधुर्यधैर्यौदार्यप्रागल्भ्यनामानः सप्तालंकारा अयत्नजाः ।

क्रमेण लक्षयति—

**रूपयौवनलावण्यैः पुंभोगोपबृंहितैर्मन्दमध्यतीव्राङ्गच्छाया शोभा कान्तिर्दीप्तिश्च ।**

तान्येव रूपादीनि पुरुषेणोपभुज्यमानानि छायान्तरं श्रयन्तीति सा छाया मन्दमध्यतीव्रत्वं क्रमेण संभोगपरिशीलनादाश्रयन्ती शोभा कान्तिर्दीप्तिश्च भवति ।

शोभा यथा—

'करकिसलयं धूत्वा धूत्वा विमार्गति वाससी
क्षिपति सुमनोमालाशेषं प्रदीपशिखां प्रति ।

---

लाभः । अनवरतपादपतनप्रसादनैर्विना न प्रत्युज्झटिति यथेष्टानुवर्तिन्या भाव्य-

स्थगयति मुहुः पत्युर्नेत्रे विहस्य समाकुला
सुरतविरतौ रम्या तन्वी मुहुर्मुहुरीक्षितुः ॥'

कान्तिर्यथा—

'उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा
धृत्वा चान्येन वासो विगलितकबरीकेशमंसं वहन्त्याः ।
भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः
शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥'

दीप्तिर्यथा—

'आलोलामलकावलीं विलुलितां बिभ्रच्चलत्कुण्डलं
किंचिन्मृष्टविशेषकं तनुतरैः स्वेदाम्बुनः शीकरैः ।
तन्व्या यत्सुरतान्तकान्तनयनं वक्त्रं रतिव्यत्यये
तत्त्वां पातु चिराय किं हरिहरस्कन्दादिभिर्दैवतैः ॥'

**चेष्टामसृणत्वं माधुर्यम् ।**

ललितेषु व्रीडादिषु यथा मसृणत्वं चेष्टायास्तथा दीप्तेष्वपि क्रोधादिषु यत्तन्माधुर्यम् । यथा—

'कृतो दूरादेव स्मितमधुरमभ्युद्गमविधिः
शिरस्याज्ञा न्यस्ता प्रतिवचनमत्यानतिमतिः ।
न दृष्टेः शैथिल्यं मिलितमिति चेतो दहति मे
निगूढान्तःकोपा कठिनहृदये संवृतिरियम् ॥'

**अचापलाविकत्थनत्वे धैर्यम् ।**

चापलानुपहतत्वमात्मगुणानाख्यानं च धैर्यम् । यथा—

'ज्वलतु गगने रात्रौ रात्रावखण्डकलः शशी
दहतु मदनः किं वा मृत्योः परेण विधास्यति ।

मम तु दयितः श्लाघ्यस्तातो जनन्यमलान्वया
कुलममलिनं न त्वेवायं जनो न च जीवितम् ॥'

**प्रश्रय औदार्यम्।**

अमर्षेर्ष्या क्रोधाद्यवस्थास्वपि प्रश्रय औदार्यम्। यथा—

'भ्रूभङ्गे सहसोद्गतेऽपि वदनं नीतं परां नम्रता-
मीषन्मां प्रतिभेदकारि हसितं नोक्तं वचो निष्ठुरम्।
'अन्तर्बाष्पजडीकृतं प्रभुतया चक्षुर्न विस्फारितं
क्रोधश्च प्रकटीकृतो दयितया मुक्तश्च न प्रश्रयः ॥'

**प्रयोगे निःसाध्वसत्वं प्रागल्भ्यम्।**

प्रयोगे कामकलादौ। चातुःषष्टिके इत्यर्थः।

यदाह—

'अन्यदा भूषणं पुंसः शमो लज्जेव योषितः।
पराक्रमः परिभवे वैयात्यं सुरतेष्विव ॥'

मनःक्षोभपूर्वकोऽङ्गसादः साध्वसं तदभावः प्रागल्भ्यम्।

यथा—'आशु लङ्घितवतीष्टकराग्र—' इति।

अत्र शोभाकान्तिदीप्तयो बाह्यरूपादिगता एव विशेषा आवेगचापलामर्षत्रासानां त्वभाव एव माधुर्याद्या धर्मा न चित्तवृत्तिस्वभावा इति नैतेषु भावशङ्कावकाशः। **शाक्याचार्यराहुलादयस्तु**—मौग्ध्यमदभाविकत्वपरितपनादीनप्यलंकारानाचक्षते। तेऽस्माभिर्भरतमतानुसारिभिरुपेक्षिताः ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायामलंकारचूडामणिसंज्ञस्वोपज्ञकाव्यानुशासनवृत्तौ नायकवर्णनः सप्तमोध्यायः समाप्तः।

---

मिति चोपदेशः। शिरोविधृता च या चन्द्रकला तामपि परिभवेति सपत्नीलोकविजय उक्तः ॥

इत्याचार्यश्रीहेमचन्द्रविरचिते विवेके सप्तमोऽध्यायः।

## अष्टमोऽध्यायः ।

अथ प्रबन्धात्मकान्काव्यभेदानाह—

**काव्यं प्रेक्ष्यं श्रव्यं च ।**

नानृषिः कविः 'कवृ वर्णे' इति च दर्शनाद्वर्णनाच्च कविस्तस्य कर्म काव्यम् । एवं च दर्शने सत्यपि वर्णनाया अन्तर्भावादितिहासादीनां न काव्यत्वमिति तल्लक्षणं न वक्ष्यते ।

तथा चाह **भट्टतोतः**—

'नानृषिः कविरित्युक्तमृषिश्च किल दर्शनात् ।
विचित्रभावधर्मांशतत्त्वप्रख्या च दर्शनम् ॥
स तत्त्वदर्शनादेव शास्त्रेषु पठितः कविः ।
दर्शनाद्वर्णनाच्चाथ रूढा लोके कविश्रुतिः ॥
तथा हि दर्शने स्वच्छे नित्येऽप्यादिकवेर्मुनिः ।
नोदिता कविता लोके यावज्जाता न वर्णना ॥'

इति प्रेक्ष्यमभिनेयम् ।

प्रेक्ष्यं विभजते—

**प्रेक्ष्यं पाठ्यं गेयं च ।**

तत्र पाठ्यं भिनत्ति—

**पाठ्यं नाटकप्रकरणनाटिकासमवकारेहामृगडिमव्यायोगोत्सृष्टिकाङ्कप्रहसनभाणवीथीसट्टकादि ।**

तथा च नाटकादीनि वीथ्यन्तानि वाक्यार्थाभिनयस्वभावानि भरतमुनिनोपदर्शितानि । सट्टकश्च कैश्चिद्यथा—

'प्रख्यातवस्तुविषयं प्रख्यातोदात्तनायकम् ।
राजर्षिवंश्यचरितं तथैव दिव्याश्रयोपेतम् ॥

---

**प्रख्यातेति** । प्रख्यातमितिहासाख्यानादि वस्तु विषयो यस्य । तत्र हि

नानाविभूतिभिर्युतमृद्धिविलासादिभिर्गुणैश्चापि।
अङ्कप्रवेशकाढ्यं भवति हि तन्नाटकं नाम॥'

---

लोकस्य कथापरिचयादादरातिशयो भवति। यद्वा प्रकर्षेण ख्यातं वस्तु विष्टितं तथा विषयो मालवपञ्चालादिर्यस्मिन्। चक्रवर्तिनोऽपि हि वत्सराजस्य कौशाम्बीव्यतिरिक्ते विषये कार्यान्तरोपक्षेपेण विना यन्निरन्तरं निर्वर्णनं तद्वैरस्याय भवति। वस्तुविषययोः प्रख्यातिमुक्त्वा तृतीयां प्रख्यातिमाह—**प्रख्यातोदात्तेति**। उदात्त इति वीररसयोग्य उक्तः। तेन धीरललितधीरप्रशान्तधीरोद्धतधीरोदात्ताश्चत्वारोऽपि गृह्यन्ते। राजर्षिवंश्येत्यनेन प्रख्यातमपि यद्वस्तु ऋषितुल्यानां राज्ञां वंशेन साधुनोचितं तथा प्रख्यातत्वेऽपि देवचरितं वरप्रभावादिबाहुल्येनोपायोपदेशायायोग्यमिति नैतदुभयं निबन्धनीयमिति फलतः प्रतिषेधो दर्शितः। राजान ऋषय इवेत्युपमितिसमासः। तद्वंशसाधु चरितं यस्मिन्निति बहुव्रीहिः। न च सर्वथा देवचरितं तत्र न वर्णनीयम्, किं तु दिव्यानामाश्रयत्वेनोपायत्वेन प्रकरीपताकानायकादिरूपेणोपेतमुपगमोऽङ्गीकरणं यत्र। तथाहि नागानन्दे भगवत्याः पूर्णकरुणाभरनिर्भरायाः साक्षात्करणे व्युत्पत्तिर्जायते। निरन्तरभक्तिभावितानामेवं नाम देवताः प्रसीदन्ति। तस्माद्देवताराधनपुरःसरमुपायानुष्ठानं कार्यमिति॥ ननु दिव्यनायकाश्रययुक्तकथाशरीरमपि नाटकं भवतीति कस्मान्न व्याख्यायते। व्याख्यायेत यद्येवं लक्षणेन नाटकेन कश्चिदर्थो व्युत्पाद्येत। न चैतदेवं दिव्यानां दिव्यप्रभावैश्वर्ययोगाद्दुरुपपादेष्वर्थेष्विच्छामात्रमेव प्रयत्नो नैव सिद्धौ व्याहन्यते। तस्माच्चरितं मर्त्यैर्विधातुमशक्यमिति नैवोपदेशयोग्यम्। तथा ह्युक्तम्—'देवानां मानसी सिद्धिर्गृहेषूपवनेषु च। क्रियायत्नाभिनिष्पन्नाः सर्वे भावा हि मानुषाः। तस्माद्देवकृतैर्भावैर्न विस्पर्धेत मानुषः॥' इति। तस्मादिष्टानिष्टदैवमानुषकर्मोपपादितशुभाशुभफलभाजां मर्त्यानामेव समुपभोगविपत्प्रतिविधानमत्युत्पादकं चरितमाश्रित्य नाटकं निबन्धनीयमिति नृपतय एव नाटकेषु युज्यन्ते। नायिका तु दिव्याप्यविरोधिनी। यथोर्वशी। नायकचरितेनैव तद्वृत्तस्याक्षेपात्। प्रसिद्धमपि वस्तु न निष्फलं व्युत्पत्तये भवतीत्यत आह—**नानाविभूतिभिर्युतमिति**। धर्मार्थकाममोक्षविभावैः फलभूतैर्विचित्ररूपैर्युक्तम्। तत्राप्यर्थकामौ सर्वजनाभिलषणीयाविति तद्बाहुल्यं दर्शनीयमिति। **ऋद्धिविलासादिभिरिति**। ऋद्धिरर्थस्य राज्यादेः

'यत्र कविरात्मशक्त्या वस्तु शरीरं च नायकं चैव।
औत्पत्तिकं प्रकुरुते प्रकरणमिति तद्बुधैर्ज्ञेयम् ॥
यदनार्षमथाहार्यं काव्यं [१]प्रकरोत्यभूतगुणयुक्तम्।
उत्पन्नबीजवस्तु प्रकरणमिति तदपि विज्ञेयम् ॥

संपत्तिः। विलासेन कामो लक्ष्यते। आदिशब्दः प्रधानवाची। तत्प्रधानाभिः फलसंपत्तिभिर्युक्तमित्यर्थः। तेन राज्ञा सर्वं राज्यं ब्राह्मणेभ्यो दत्त्वा वानप्रस्थं गृहीतमित्येवंप्रायं फलं नोपनिबद्धव्यम्। धर्ममोक्षबहुलमिति। दृष्टसुखार्थी हि बाहुल्येन लोक इति तत्रास्य प्रतीतिर्विरसी भवेत्। **गुणैरिति**। अप्रधानभूतानि यानि चेष्टितानि हेयानि प्रतिनायकगतागतान्यपनयप्रधानानि तैर्युक्तम्। तेषां पूर्वपक्षस्थानीयानां प्रतिक्षेपेण सिद्धान्तकल्पस्य नायकचरितस्य निर्वाहात् जनकोशादिसंपत्तिर्ऋद्धिः। कौमुदीमहोत्सवादयो विलासाः। संधिविग्रहादयो गुणा इति चाणक्यपरिया(?)वेदनमात्रफलम्। वस्तुशब्देन राजर्षिवंश्यचरितशब्देन च सर्वस्याप्यर्थस्य राशेः संग्रहात्। अवान्तरवस्तुसमाप्तौ विश्रान्ताय ये विच्छेदा अङ्कास्तैः पश्चाद्यैर्दशाधरैः ये च निमित्तबलादप्रत्यक्षदृष्टानां चेष्टितानामावेदकाः प्रवेशकास्तैश्चाढ्यं तन्नाटकं नाम रूपकम् ॥ **आत्मशक्त्येति**। इतिहासादिप्रसिद्धिं निरस्यति—**वस्त्विति**। साध्यं फलम्। **शरीरमिति**। तदुपायम्। **नायकमिति**। साधयितारम्। चकारः पूर्वसमुच्चये। द्वितीयस्त्वसमग्रसमुच्चये। एवकारः समुच्चयाभावे। उत्पत्तौ भवमौत्पत्तिकं निर्मितम्। तदयमर्थः—त्रितयमपि यत्र विकृतं द्वयमेकं वा, अन्यत्तु पूर्वोपनिबद्धं तत्सर्वं प्रकरणम्। भेदसप्तकमयम्। वस्त्वादिकं काव्याभिधेयमात्मशक्त्या प्रकुरुते यत्र काव्ये तत्प्रकरणमिति बुधैर्ज्ञेयमिति संबन्धः॥ यत्र सर्वमुत्पाद्यं भवति तत्र योऽनुत्पाद्योंऽशः स कुत्रस्थो ग्राह्य इति दर्शयितुमाह—**यदनार्षमिति**। पुराणादिव्यतिरिक्तबृहत्कथाद्युपनिबद्धं मूलदेवतच्चरितादि ॥ **आहार्यमिति**। पूर्वकविकाव्यादाहरणीयं समुद्रदत्ततच्चेष्टितादि ॥ ननु च तत्रांशे कविकृतत्वाभावात्कथं प्रकरणवाचोयुक्तिरित्याह—**उत्पन्नेति**। पूर्वसिद्धे बीजं वस्तु च यत्र तादृशमपि तद्यदिति यस्मादभूतैर्बृहत्कथादौ काव्यान्तरे वा प्रसिद्धैर्गुणैर्युक्तं

१. 'कुरुते प्रभूत' भरते.

यन्नाटके मयोक्तं वस्तु शरीरं च वृत्तिभेदाश्च ।
तत्प्रकरणेऽपि योज्यं सलक्षणं सर्वसंधिषु तु ॥
विप्रवणिक्सचिवानां पुरोहितामात्यसार्थवाहानाम् ।
चरितं यन्नैकविधं तज्ज्ञेयं **प्रकरणं** नाम ॥
नोदात्तनायककृतं न दिव्यचरितं न राजसंभोगः ।
बाह्यजनसंप्रयुक्तं तज्ज्ञेयं **प्रकरणं** नाम ॥

---

प्रकरोति तदिति तस्माद्धेतोरेतदपि प्रकरणम् । तेन बृहत्कथादिसिद्धस्य मूलदेवादेरधिकावापं कविशक्तिर्यदा विधत्ते तदा प्रकरणम् । एवं पूर्वकविसमुत्प्रेक्षितसमुद्रदत्तचेष्टितादिवर्णनेऽप्यधिकावापं विदधत्कविः प्रकरणं कुर्यादिति तात्पर्यम् ॥ नन्वस्येतिवृत्तस्य कथं योजनेत्याशङ्क्य पूर्वोक्तमेवातिदेशद्वारेण स्मारयितुमाह— **यन्नाटके इति** । 'नानाविभूतिभिर्युतमृद्धिविलासादिभिः' इत्यादिना यत्फलचयमुक्तं तद्वस्तुशरीरमित्यङ्कप्रवेशकाद्यम् ॥ **वृत्तिभेदाश्चेति** । नानारसभावचेष्टितैर्बहुधा सुखदुःखोत्पत्तिकृतमिति ॥ **सलक्षणमिति** । लक्षणमङ्कपरिमाणम् । अङ्कान्तरसंनिधानहेतुषु च प्रवेशकेषु यत्प्रयोज्यमुक्तं 'दिवसावसानकार्यं यद्यङ्केनोपपद्यत' इत्यादि तत्सर्वं प्रकरणेऽपि योज्यम् ॥ अतिदेशायातमतिप्रसङ्गं वारयत्यार्याद्वयेन—**विप्रेत्यादि** । अमात्योऽधिकृतः । सार्थवाहो दिगन्तरात्पण्यानामाहर्ता । तद्देशक्रयविक्रयकृतो वणिजोऽन्य एव । **नैकविधमित्यने**करसयुक्त इति । तदितिदेशमात्रमिति[1] सूचि ं प्रख्यातोदात्तत्यतिप्रसक्तं निषेधति । तन्निषेधे[2] चार्थान्नाटकवैपरीत्यमायातम् । नाटके च देवो नायकत्वेन निषिद्ध इति प्रकरणे कर्तव्यत्वेनापाद्यत इत्यत आह—**न दिव्यचरितमिति** । तथा दिव्याश्रयमिति यदतिदेशाद्देवानामुपायत्वेन प्रयोज्यत्वं प्रसक्तम्, तदप्यनेन निषिद्धम् । नाटके देवानामिवेहापि राज्ञः प्रवेशं शङ्कमानो निराकरोति—**न राजसंभोग इति** । यदि वात्रौत्पत्तिकत्वेऽपि न राजोचितसंभोगोत्प्रेक्षा विप्रादिषु करणीयेत्यनेन शिक्षयति । अत एव राजनि य उचितोऽन्तःपुरजनः कञ्चुकिप्रभृतिस्तद्व्यतिरिक्तो बाह्यजनोऽत्र चेटदासादिः प्रवेशकादौ कार्य इत्यर्थः ।

---

१. कार्यं केवलमुत्पाद्यवस्तु स्यात्' भरतैकपुस्तके.

---

१. 'तदतिदेशमात्र' स्यात्. २. 'नोदात्तनायकेति' इति प्रतीकं त्रुटितं भवेत्.

दासविटश्रेष्ठियुतं वेशस्त्र्युपचारकारणोपेतम् ।
मन्दकुलस्त्रीचरितं काव्ये कार्यं **प्रकरणे** तु ॥'
'प्रकरणनाटकभेदादुत्पाद्यं वस्तु नायकं नृपतिम् ।
अन्तःपुरसंगीतककन्यामधिकृत्य कर्तव्या ॥
स्त्रीप्राया चतुरङ्का ललिताभिनयात्मिका सुविहिताङ्गी ।
बहुगीतनृत्यवाद्या रतिसंभोगात्मिका चैव ॥
राजोपचारयुक्ता प्रसादनक्रोधदम्भसंयुक्ता ।
नायकदेवीदूतीसपरिजना **नाटिका** ज्ञेया ॥'

---

एतदेव दर्शयति—**दासविटेति** । कञ्चुकिस्थाने दासः, विदूषकस्थाने विटः, अमात्यस्थाने श्रेष्ठीत्यर्थः । वेश्यावाटो वेशस्तत्र या स्त्री तस्या उपचारो वैशिके प्रसिद्धः स कारणं यस्य शृङ्गारस्य तेनोपेतम् । कुलस्त्रीविषयं चेष्टितम् । **प्रकरणेति** । बहुषु प्रकरणभेदेषु नाटकभेदेषु च स्त्रीप्राप्तिफलात्संभोगशृङ्गारप्रायात् कैशिकीप्रधानाच्च प्रकरणभेदान्नाटकभेदाच्च नाटिका ज्ञेयेति दूरेण संबन्धः ॥ उत्पाद्यं वस्तुचरितं नायकं च नृपतिमन्तःपुरकन्यां संगीतकशालाकन्यां वाधिकृत्य प्राप्यत्वेनाभिसंधाय कर्तव्या च । तेन स्त्रीप्राप्तिः संभोगशृङ्गारोऽभ्यन्तरः कैशिकी च वृत्तिः तथावस्थासंध्यङ्गार्थं प्रकृतिपताकाप्रकरीपताकास्थानाङ्कविष्कम्भकप्रवेशकादीन्युभयभेदसाधारणानि नाटिकायां प्रयोज्यानि । यदपि किंचित्साधारणं तदपि योज्यते । अतश्च 'उत्पाद्यं वस्तु' इति प्रकरणधर्मः । 'नायकं नृपतिम्' इति नाटकधर्मः । 'अन्तःपुरसंगीतककन्याम्' इति कन्यायोगे ईर्ष्याविप्रलम्भश्च नाटकधर्म एव । अथास्य विशेषलक्षणमाह—**स्त्रीप्रायेति** । स्त्रियः प्रायेण बाहुल्येन यत्र । चत्वारोऽङ्का यस्याम् । कस्याश्चिदवस्थायाः सरसेऽवस्थान्तरे समावापः कर्तव्य इति यावत् । सुष्ठु पूर्णतया विहितानि चत्वार्यपि कैशिक्यङ्गानि यत्र । एतेन स्त्रीप्रायेति ललितेति बहुनृत्येति च कैशिकीं वृत्तिं बाहुल्येन दर्शयति । रतिपुरःसरः संभोगो राज्यप्राप्त्यादिलक्षण आत्मा प्रधानभूतं फलं यस्याम् । अत एवाह—राजगतैरुपचारैर्व्यवहारैर्युक्ता । अन्यां चेदुद्दिश्य तत्र व्यवहारस्तदा पूर्वनायिकागतैः क्रोधप्रसादनवञ्चनैरवश्यं भाव्यमिति दर्शयति—**प्रसादनेति** । आर्यानुरोधात्क्रोधस्य पश्चात्पाठः । ननु यस्याः क्रोधो भवति सा न कदाचिदुक्तेत्याशङ्क्याह—**नायकेति** । नायकस्य येयं देवी आद्य-

समवकारस्तु—

'देवासुरबीजकृतः प्रख्यातोदात्तनायकश्चैव।
त्र्यङ्कस्तथा त्रिकपटस्त्रिविद्रवः स्यात्त्रिशृङ्गारः।
द्वादशनायकबहुलो ह्यष्टादशनालिकाप्रमाणश्च॥' इति।
'दिव्यपुरुषाश्रयकृतो दिव्यस्त्रीकारणोपगतयुद्धः।
सुविहितवस्तुनिबद्धो विप्रत्ययकारणश्चैव॥

---

नायिका तथाभिलषितनायकान्तरविषया येयं दूती तत्कृतं सपरिजनं परिजनसमृद्धिर्यस्याम्॥ **देवासुरेति**। देवासुरस्य यद्बीजं फलसंपादनोपायस्तेन कृतो विरचितः। देवासुरा अपि वा प्रख्याता बृहत्कथादौ श्रूयन्ते स्वयं वा केनचिदूह्यन्त इति तन्निरासार्थं प्रख्यातपदम्। यद्यपि देवाः पुरुषापेक्षया दृप्तास्तथापि स्वापेक्षया गाम्भीर्यप्रधानतयोदात्ता उच्यन्ते भगवत्त्रिपुररिपुप्रभृतयः, प्रशान्ता ब्रह्मादयः, उद्धता नृसिंहादयः। अर्थत्रयस्य तावत्येव समापन्ना(?)त्र्यङ्क इत्युक्तम्। कपटो वञ्चना मिथ्याकल्पितः सत्यानुकारी प्रपञ्च इत्यर्थः। स त्रिधा—यत्रानपराद्ध एव वञ्चकेन वञ्च्यते स एकः। यत्र तु वञ्चनीयोऽपि सापराधः स द्वितीयः। यत्र तु द्वयोरपि न कश्चिदभिसंधिदोषः काकतालीयेन तुल्यफलाभिसंधानवतोरप्येक उपचयेनापरस्त्वपचयेन युज्यते स दैवकृतस्तृतीयः। चेतनकृतमन्यकृतमुभयकृतं वा यदनर्थात्मकं वस्तु यतो विद्रवन्ति जनाः स विद्रव इति। तत्र चेतनं गजेन्द्रादि। अचेतनं जलवाय्वादि। उभयं नगरोपरोधादिति[1]। तस्य युद्धाग्निदानादिसंपाद्यत्वात्। शृङ्गारस्त्रिधा—धर्मार्थकामभेदात्। धर्मो यत्र हेतुः साध्यो वा नायिकालाभे स धर्मशृङ्गारः। एवमर्थकामयोर्वाच्यम्। अथ नायकयोगं कार्यनिष्पत्तिकालविभागं चाह—**द्वादशेति**। द्वादशनायकबहुलमिति प्रत्येकमिति केचित्। अन्ये तु प्रत्यङ्कं नायकप्रतिनायकौ तत्सहायौ चेति। चतुर आह—समुदायापेक्षया हि द्वादशेति। बहुलग्रहणान्न्यूनाधिकत्वेऽप्यदोषः। **अष्टादशेति**। अष्टादशनालिकमेव तत्र कार्यं निबन्धनीयमित्यर्थः॥ **दिव्येति**। दिव्यानां पुरुषाणां च यदाश्रयणं नायकतया

---

१. 'प्रहितो' भरते.

---

१. 'दीति' स्यात्.

उद्धतपुरुषप्रायस्त्रीरोषग्रथितकाव्यबन्धश्च ।
संक्षोभविद्रवकृतः संस्फोटकृतस्तथा चैव ॥
स्त्रीभेदनापहरणावमर्दनप्राप्तवस्तुशृङ्गारः ।
ईहामृगस्तु कार्यः सुसमाहितकाव्यबन्धश्च ॥
यद्व्यायोगे कार्यं ये पुरुषावृत्तयो रसाश्चैव ।
ईहामृगेऽपि तत्स्यात्केवलमत्र स्त्रिया योगः ॥'
'प्रख्यातवस्तुविषयः प्रख्यातोदात्तनायकश्चैव ।
षड्रसलक्षणयुक्तश्चतुरङ्को वै डिमः कार्यः ॥

---

तेन कृतः । दिव्यस्त्रीनिमित्तमुपगतं युद्धं यत्र । दिव्यानुप्रवेशात्समवकारवदसंबद्धार्थता मा प्रसाङ्क्षीदित्याह—सुविहितेन संश्लिष्टेन वस्तुना निबद्धः । विगतानि प्रत्ययकारणानि विश्वासहेतवो यत्र । मध्ये चात्र दिव्यानामपि प्रवेशो भवतीति दर्शयति—**उद्धतेति** । उद्धता उद्वृत्ताः पुरुषाः प्रायेण यत्र स्त्रीनिमित्तको रोषः । संक्षोभ आवेगः । विद्रवो व्याख्यातः । संस्फोटो विरोधिनां विद्याविक्रमसंघर्षजो व्यासङ्गः । तथेत्युक्तसादृश्यार्थः । चः समुच्चये । एवशब्दोऽवधारणे । एतल्लक्षणयुक्त एवेत्यर्थः । स्त्रीनिमित्तं भेदनापहरणावमर्दनानि यथायोगं स्त्रीविषयाण्यन्यविषयाणि वा तैः प्राप्तं वस्त्वधिष्ठानं प्रमदालक्षणं यस्य तादृशः शृङ्गारो यस्मिन् । भेदसामदानादिना अवमर्दनं दण्डः । ईहा चेष्टा मृगस्येव स्त्रीमात्रार्था यत्र । **सुसमाहितकाव्यबन्ध** इत्यनेन वीथ्यङ्गानि अत्र योज्यानीति । अङ्कपरिमाणं नायकसंख्यं वृत्तिरसविभागं च व्यायोगातिदेशेनाह—**यदिति** । कार्यशब्देनाङ्क उच्यते । तेन एक एवाङ्कः । नायकास्तु द्वादश समवकारातिदेशेन व्यायोगे तल्लाभात् । अत्र तु समवकारातिदेशेन सर्वासंपत्तेर्गौरवं स्यात् ॥ **प्रख्यातेति** । षड्रसा यस्मिन् तल्लक्षणं षड्रसं तेन युक्तः । नाटकतुल्यं सर्वमन्यत्केवलं संधीनां रसानां च समग्रतात्र शृङ्गारहास्यवर्जं षड्रसत्वे उक्ते पर्यायेण शान्तस्य

---

१. 'श्चतुरङ्कविभूषितश्चैव' भरतैकपुस्तके.

शृङ्गारहास्यवर्जं शेषैरन्यै रसैः समायुक्तः ।
दीप्तरसकाव्ययोनिर्नानाभावोपसंपन्नः ॥
निर्घातोल्कापातैरुपरागेणेन्दुसूर्ययोर्युक्तः ।
युद्धनियुद्धाधर्षणसंस्फोटकृतश्च विज्ञेयः ॥
मायेन्द्रजालबहुलो बहुपुस्तोत्थानयोगयुक्तश्च ।
देवभुजगेन्द्रराक्षसयक्षपिशाचावकीर्णश्च ॥
षोडशनायकबहुलः सात्वत्यारभटिवृत्तिसंपन्नः ।
कार्यो **डिमः** प्रयत्नान्नानाश्रयभावसंपन्नः ॥'
'[1]व्यायामस्तु विधिज्ञैः कार्यः प्रख्यातनायकशरीरः ।
अल्पस्त्रीजनयुक्तस्त्वेकाहकृतस्तथा चैव ॥

---

प्रयोगः स्यादित्याह—**दीप्तरसेति** । दीप्ता रसा वीररौद्रादयस्ते काव्ययोनिर्यत्र । नानाविधाभावा व्यभिचारिणः । आधर्षणं बलात्काररूपः पराभवः । माया शब्दरूपादीनामन्यथापादम[1]सतां वा प्रकाशनम् । पुस्तं लेप्यं किलिञ्चचर्मवस्त्रकाष्ठकृतानि रूपाणि । देवादयो बाहुल्येनात्र । बहुलग्रहणं व्यभिचारार्थम् । तेन न्यूनाधिका अपि नायकाः प्रयोज्याः । सात्वती चारभटी चेति 'द्वन्द्वेऽप्राणिपश्वादेः' इत्येकवद्भावो 'द्वन्द्वैकत्वाव्ययीभावौ' इति नपुंसकलिङ्गता च । वृत्तिसमुदाये च वर्तमानेन वृत्तिशब्देन कर्मधारयः । तया संपन्नः । डिमो डिम्बो विद्रव इति पर्यायास्तद्योगादयं **डिमः** ॥ **नानाश्रयभावसंपन्न इति** । नानेत्येकस्यान्योऽपरस्यान्य इति नानारूप आश्रयो येषां ते नानाश्रया भावास्तैः संपन्नः । बहूनां नायकानां विभागेन हि भावा व्यवतिष्ठन्ते । अत एवेति वृत्तवैचित्र्यमत्रोपदिशन्ति । **व्यायोगस्त्विति** । व्यायोगः पुनर्डिमस्यैव शेषभूतो दिव्यनायकाभावात् केवलमत्रोदात्तस्य राजादेर्न नायकता, अपि त्वमात्यसेनापतिप्रभृतेर्दीप्तरसस्य । अत एव प्रख्यातनायकेत्यत्र उदात्तग्रहणं न कृतम् । शरी-

---

१. 'व्यायोगस्तु' भरते विवेके च.

---

१. 'नम्, असतां' स्यात्.

बहवश्च तत्र पुरुषा व्यायच्छन्ते यथा समवकारे ।
न तु तत्प्रमाणयुक्तः कार्यस्त्वेकाङ्क एवायम् ॥
न च दिव्यनायककृतः कार्यो राजर्षिनायकनिबद्धः ।
युद्धनियुद्धाधर्षणसंघर्षकृतश्च कर्तव्यः ।
एवंविधस्तु कार्यो **व्यायोगो** दीप्तकाव्यरसयोनिः ॥'
'वक्ष्याम्यतः परमहं लक्षण**मुत्सृष्टिकाङ्क**स्य ।
प्रख्यातवस्तुविषयस्त्वप्रख्यातः कदाचिदेव स्यात् ।
दिव्यपुरुषैर्वियुक्तः शेषैरन्यैर्भवेत्पुंभिः ॥

---

रमितिवृत्तम् । प्रख्यातो नायकः शरीरं च यत्र स तथा । अल्पश्च स्त्रीजनश्च तेन युक्तः । चेट्यादिना न तु नायिकादूत्यादिभिः कौशिकीहीनत्वात् । **एकाहः-कृत इति** । एकदिवसनिर्वर्त्यं यत्कार्यं[१] तत्कृतम् । **यथा समवकार इति** । द्वादशेत्यर्थः । तावदङ्कपरिमाणाशङ्कामिति देशात्प्रत्यासत्त्या वा प्रसक्तां वारयितुमाह—**एकाङ्क एवेति** । एवकारेण एकाहचरितविषयत्वान्न्यायप्राप्तमेवात्रैकाङ्कत्वमित्याह—ननु प्रख्यातनायकशब्देन किमत्र गृहीतमित्यतिप्रसङ्गं शमयति—**न चेति** । चो भिन्नक्रमः । दिव्यैर्देवैर्नृपैर्ऋषिभिश्च नायकैर्न निबद्धोऽयं भवतीत्यर्थः ॥ ननु कस्मादयं व्यायोग इत्याह—**युद्धनियुद्धेति** । व्यायोगे युद्धनियुद्धप्राये युज्यन्ते पुरुषा यत्रेति व्यायोग इत्यर्थः । संघर्षः शौर्यविद्याकुलधनरूपादिकृता स्पर्धा । दीप्तं काव्यमोजोगुणयुक्तम्, दीप्ता रसा वीररौद्राद्याः, तदुभयं योनिः कारणमस्य । **प्रख्यातेति** । प्रख्याते भारतादियुद्धे विषये निमित्ते सति यत्तत्करुणबहुलं चेष्टितं वर्ण्यते तत्ख्यातम् । श्रीपर्ववृत्तान्तवद्भवतु मा वा भूदित्यप्रख्यातग्रहणेनोक्तम् । तेनोभयोपादानस्य परस्परविरुद्धार्थत्वादकिंचित्करत्वं नाशङ्कनीयम् । **दिव्यपुरुषैर्वियुक्त इति** । दुःखात्मकत्वात् । **शेषैरन्यैरिति** । अर्थापत्तिफलम् । करुणो रसः प्रायो यत्रेति काव्यशरीरमुच्यते । तत्र कृतः । निवृत्तयुद्धा उद्धतप्रहाराः पुरुषा यस्मिन् । परिदेवितं देवोपालम्भा-

---

१. सविसर्गपाठः प्रामादिकः. २. 'मतिदेशा' स्यात्.

करुणरसप्रायकृतो निवृत्तयुद्धोद्धतप्रहारश्च ।
स्त्रीपरिदेवितबहुलो निर्वेदितभाषितश्चैव ॥
नानाव्याकुलचेष्टः सात्वत्यारभटिकैशिकीहीनम् ।
कार्यः काव्यविधिज्ञैः सततं ह्युत्सृष्टिकाङ्कस्तु ॥'
'प्रहसनमपि विज्ञेयं द्विविधं शुद्धं तथा च संकीर्णम् ।
वक्ष्यामि तयोर्युक्त्या पृथक्पृथग्लक्षणविशेषम् ॥
भगवत्तापसविप्रैरन्यैरपि हासवादसंबद्धम् ।
कापुरुषसंप्रयुक्तं परिहासाभाषणप्रायम् ॥
अधिकृतभाषाचारं विशेषभावोपपन्नचरितमिदम् ।
नियतगतिवस्तुविषयं शुद्धं ज्ञेयं प्रहसनं तु ॥
वेश्याचेटनपुंसकविटधूर्ता बन्धकी च यत्र स्युः ।
अनियतवेषपरिच्छदचेष्टितकरणं च संकीर्णम् ॥'

---

त्मनिन्दादिरूपमनुशोचनं यत्र । निर्वेदितानि येषु श्रुतेषु निर्वेदो जायते तादृंश्चि भाषितानि यत्र । व्याकुलाश्चेष्टा भूमिनिपातविवर्तिताद्याः । **सात्वत्यारभटिकैशिकीहीनमिति** । समाहारद्वन्द्वगर्भद्वन्द्वान्तरगर्भस्तृतीयासमासः । उत्क्रमेणोन्मुखा दृष्टिर्जीवितं प्राणा यासां ता उत्सृष्टिकाः शोचन्त्यः स्त्रियस्ताभिरङ्कित इति तथोक्तः ॥ **प्रहसनमपीति** । अपिशब्दो भिन्नक्रमः । **तथेति** । सामान्ये लक्षणम् । तदयमर्थः । द्विविधमपि प्रहसनरूपं हास्यरसप्रधानमित्यर्थः । लक्षणविशेषं विशेषलक्षणम् । भगवत्तापसविप्रा यतिवानप्रस्थगृहस्थाः । अन्ये शाक्यादयस्तैरुपलक्षितं हास्यप्रधानवचनसंबद्धं शीलादिना कुत्सितैः पुरुषैः अत एव प्रहस्यमानैः सामर्थ्यात्तैरेव भगवदादिभिर्युक्तम् । तथापि च भाषाचारौ यत्र न विकृतावसत्याश्लीलरूपौ तथा विशेषेण भावैर्व्यभिचारिभिरुपपन्नानि पदानि कथाखण्डानि यस्मिन् । नियतगति एकप्रकारं यद्वस्तु तद्विषयः प्रहसनीयलक्षणोऽर्थो यत्र तच्छुद्धं प्रहसनम् । अत्र निर्वचनं यतः परिहासप्रधानान्या-

---

१. 'सृष्टि' स्यात्.

'आत्मानुभूतशंसी परसंशयवर्णनाप्रयुक्तश्च ।
विविधाश्रयो हि भाणो विज्ञेयस्त्वेकहार्यश्च ॥
परवचनमात्मसंस्थैः प्रतिवचनैरुत्तरोत्तरग्रथितैः ।
आकाशपुरुषकथितैरङ्गविकारैरभिनयेच्च ॥
धूर्तविटसंप्रयोज्यो नानावस्थान्तरात्मकश्चैव ।
एकाङ्को बहुचेष्टः सततं कार्यो बुधैर्भाणः ॥'

---

भाषणान्यत्र बाहुल्येन भवन्ति । तेन यत्रैकस्यैव कस्यचिच्चरितं दुष्टत्वात्प्राधान्येन प्रहस्यते तच्छुद्धमित्यर्थः । यत्र तु वेश्यादिभिर्योगोऽत्युल्बणं वा कल्पादि तदेकद्वारेणानेकवेश्यादिचरितेन हसनीयेन संकीर्णत्वात्संकीर्णम् । **आत्मानुभूतशंसीति** । एकेन पात्रेण हरणीयः सामाजिकहृदयं प्रापयितव्योऽर्थो यत्र स भाणः । एकमुखेनैव भण्यन्ते उक्तिमन्तः क्रियन्ते अप्रविष्टा अपि पात्रविशेषा यत्रेति स भाणः । तत्र स प्रविष्टपात्रविशेष आत्मानुभूतं वा शंसति परगतं वा शंसति परगतं वा वर्णयति । तत्र च प्रयोगयुक्तिमाह—**परवचनमिति** । परसंबन्धि वचनं स्वयमङ्गविकारैरभिनयेत् । (आहो)आकाशे यानि पुरुषकथितानि दृष्टानि यत्र ह्यन्ये तं पश्यन्त्येकश्च पश्यत्याकर्णयति च तत्र तद्वचनं स एवानुवदन् सामाजिकान्बोधयति । यथा रामाभ्युदये—'**तापसः**[२]—(आकाशे ।) भावाद्वलेत्कावकाशे(१)रामभद्रस्तिष्ठति । किं ब्रवीषि । सोऽस्या एव पथिकजनमनोहारिण्याः पुष्करिण्याः परिसरे सीतया लक्ष्मणेन सह न्यग्रोधच्छायायां सुखोपविष्टस्तिष्ठति ।' इति । न केवलं परवचनमभिनयेत् । किं तु प्रतिवचनैः स्वोक्तैः सह । अत एवोत्तरोत्तरग्रथितैर्योजनाभिरुपलक्षितैः । ननु योऽसावेकोऽत्र प्रविशति स क इत्याह—**धूर्तेति** । नानाप्रकारावस्थाविशेषा लोकोपयोगिव्यवहारात्मका आत्मा वाच्यं यस्य । अत एव बहुचेष्टः सततं कार्य इति । सकलसामान्यपृथग्जनोपयोग्यत्र लोकव्यवहारो वेश्याविटादिवृत्तान्तात्मा निरूप्यत इति । बाहुल्येन पृथग्जनव्युत्पत्त्युपयोगिरूपकमिदम् । राजपुत्रादीनामपि शंभ-

---

१. प्रमादपतितं भवेत्. २. 'तस्मा' स्यात्.

'सर्वरसलक्षणाढ्या युक्ता ह्यङ्गैस्तथा त्रयोदशभिः ।
वीथी स्यादेकाङ्का तथैकहार्या द्विहार्या वा ॥'
'विष्कम्भकप्रवेशकरहितो वस्त्वेकभाषया भवति ।
अप्राकृतसंस्कृतया स सट्टको नाटिकाप्रतिमः ॥'

इति । आदिशब्दात्कोलाहलादिलक्षितास्तोटकादयो ग्राह्याः ।

---

लावृत्तान्तो ज्ञेय एवावचनार्थमिति स प्रयोज्य इत्यर्थः । **सर्वरसे**ति । सर्वै रसैः शृङ्गारादिभिर्लक्षणैश्च विभूषणादिभिः षट्त्रिंशता तत्साहचर्याद्गुणालंकारादिभिरपि सर्वैराढ्या । तदुपरि चाङ्गैस्त्रयोदशभिर्युक्ता तथाशब्दादुक्तप्रकारव्यतिरिक्तवक्रोक्त्यन्तरसहस्रसंकुलापीत्यर्थः । **एकाङ्के**ति । इतिवृत्तसंक्षेपमस्यां दर्शयति—**एकहार्ये**ति । आकाशपुरुषभाषितैरित्यर्थः । **द्विहार्ये**ति । उक्तिप्रत्युक्तिवैचित्र्येणेत्यर्थः ॥ पुमर्थोपयोगश्चामीषां प्रदर्श्यते । तथा हि—**नाटके** धर्मकामानामन्यतमस्य गुणीभूतेतरार्थद्वयवृत्तेराधनं राज्ञां वृत्तं नाट्ये साक्षादिव पश्यन्त उपादेयतया प्रतिपद्यन्ते । तत्रापि धर्माराधने दानतपोयोगरूपमनुष्ठानं यशस्करं दृष्टफलमामुष्मिकफलं च व्युत्पाद्यते । अर्थाराधने तु शत्रूच्छेदपुरःसरा यशोवतंसा लाभपालनसमेधनफलविनियोगपर्यन्ता कपटातिसंधानबहुला संधिविग्रहात्मिका राजवृत्तिर्व्युत्पाद्यते । कामाराधने चानुपजातसंभोगासु च दिव्यासु कुलजासु कृतशौचासु च स्वाधीनपतिकादिषु अष्टासु परस्परावलोकनादि, दिवा संभोगो रात्रौ वा सोपचार इत्याभ्यन्तरः कामोपभोगो राज्ञस्तासां च राजनि व्युत्पाद्यते । तथा राज्ञामभ्यन्तरोपभोगे महादेवी देवी स्वामिनी स्थापिता भोगिनी शिल्पकारिका नाटकीया नर्तकी अनुचारिकापचारिका प्रेषणकारिका महत्तरा प्रतीहारी कुमारी स्थविरा युक्तिकासु यथोचिता राज्ञो वृत्तिस्तासां च यथास्वं राजनिवृत्तिः । तथा स्थापत्यकञ्चुकिवर्षवरोपस्थायिकनिर्मुण्डादीनामन्तर्भवनकक्षासंचारः । तथा युवराजसेनापतिमन्त्रिसचिवप्राड्विवाककुमाराधिकृतानां बाह्यसंचारिणां वृत्तम् । तथा विदूषकशकारचेटादिवृत्तं व्युत्पाद्यते । नायकप्रतिपक्षाणां च राज्ञामुक्तगुणविपर्ययादशुभोदयं वृत्तं त्याज्यतया व्युत्पाद्यते ॥ **प्रकरणे**

---

१ 'धर्मार्थकामाना' स्यात्. २. 'राराधनं' स्यात्.

गेयं विभजते—

**गेयं डोम्बिकाभाणप्रस्थानशिङ्गभाणिकाप्रेरणरामाक्रीडहल्लीसकरासकगोष्ठीश्रीगदितरागकाव्यादि ।**

---

तु सचिवसार्थवाहादीनां पूर्ववत्स्वोचिता त्रिवर्गप्राप्तिस्तदर्जनस्थैर्यधैर्यादि, व्यापत्स्वमूढता, कुलस्त्रियां वृत्तं कुलस्त्रियाश्च भर्तरि वृत्तिर्वेश्यासु संभोगो विशिष्टनायकलक्षणं विटस्य गुणा दूतकर्मणि योज्यविवेको दूतकर्मसमागमे देशकालौ नायिकाया रागापरागलिङ्गानि नायकयोरपरागकारणानि नायका हृदयग्रहणमप्रयोगः । उत्तममध्यमाधमनायिकालक्षणयैव न लाभाः । चतुरोत्तममध्यमा नायकाः सामदानभेददण्डोपेक्षाणामुपायानां प्रयोगविभाग इत्यादि प्रयोगतो व्युत्पाद्यते ॥ **नायिकायां** तु विलासपराणां राज्ञां धर्मार्थाविरोधिरतिफलं वृत्तं नाटक इव व्युत्पाद्यते ॥ **समवकारे** च देवासुरनिमित्तो युद्धादिसंभवो विद्रवस्तथा कपटः संक्षिप्तश्च शृङ्गारो हास्यादि सर्वमेव लौकिकीभिरुपपत्तिभिर्हीनं दिव्यप्रभावसाध्यं व्युत्पाद्यते । पूर्वापरानुसंधानशून्यधियां प्रहसनकपटविद्रवादिरुचीनां पुस्तावप्लुतलङ्घनच्छेद्यमायेन्द्रजालचित्रयुद्धादि बहुलयारभट्या परितोष उत्पाद्यते । तथा चाह—'शूरास्तु वीररौद्रेषु नियुद्धेष्वाहवेषु च । बाला मूर्खाः स्त्रियश्चैव हास्यशोकभयादिषु ॥' तुष्यन्तीति गम्यते । इष्टं देवता कर्मप्रभावानुकीर्तनाच्च तद्भक्तानां प्रीतिः । यात्राजागरादिषु च प्रेक्षाप्रवर्तनं च ॥ **ईहामृगडिमयो**रप्येवमेव ॥ **व्यायोगे** तु मन्त्रिसेनापतिप्रभृतीनां वृत्तं युद्धनियुद्धाधर्षणसंघर्षबहुलं व्युत्पाद्यते ॥ **उत्सृष्टिकाङ्के** चोत्तमानां मध्यमानां च वैरस्यार्दितानां स्त्रीपरिदेवितबहुलं वृत्तं प्रेक्षकाणां चित्तस्थैर्यं विधातुं व्युत्पाद्यते । एवंविधव्यसनपतितानां चित्तस्थैर्यात्पुनरुत्पत्तिर्दृश्यते इति तत्प्रयोगदर्शनात्प्रतिपद्यमाना व्यसनेऽपि न विषीदन्ति ॥ **प्रहसने** तु स्त्रीबालमूर्खाणां हास्यप्रयोगदर्शनेन नाट्ये प्ररोचना क्रियते । ततः क्रमेण नाट्ये प्रवृत्ताः शेषरूपकैर्धर्मार्थकामेषु व्युत्पाद्यन्ते । प्रसङ्गतश्च भगवत्तापसविप्रादीनां वृत्तच्युतानां कापुरुषाणां वृत्तं शुद्धं तथा वेश्याचेटनपुंसकविटधूर्तवण्टकीप्रभृतीनां प्रवर्तकाख्यस्य च कामिनो वृत्तं संकीर्णं लोकवार्तादम्भधूर्तविवादबहुलं त्याज्यतया व्युत्पाद्यते ॥ **भाणे** च धूर्तविटवेश्या-

---

१ 'स्वोचिता' स्यात्.

पदार्थाभिनयनस्वभावानि डोम्बिकादीनि गेयानि रूपकाणि चिरंतनैरुक्तानि। तद्यथा—

'छन्नानुरागगर्भाभिरुक्तिभिर्यत्र भूपतेः।
आचर्यते मनः सा तु मसृणा **डोम्बिका** मता॥'
'नृसिंहशूकरादीनां वर्णनं जल्पयेद्यतः।
नर्तकी तेन **भाणः** स्यादुद्धताङ्गः प्रवर्तितः॥'
'गजादीनां गतिं तुल्यां कृत्वा प्रवसनं तथा।
अल्पाविद्धं सुमसृणं तत्**प्रस्थानं** प्रचक्षते॥'
'सख्याः समक्षं पत्युर्यदुद्धृतं वृत्तमुच्यते।
मसृणं च क्वचिद्धूर्तचरितं **शिङ्गकस्तु** सः॥'
'बाला क्रीडानियुद्धादि तथा शूकरसिंहजा।
धवलादिकृता क्रीडा यत्र सा **भाणिका** मता॥'

---

शम्भलीनां परस्य वञ्चनपरं प्रेक्षकाणामवञ्चनीयत्वमवबोधादापादयितुं वर्ण्यते॥ **वीथ्यां** तु बहुविधा वक्रोक्तिविशेषा व्युत्पाद्यन्ते॥ **सट्टके** च नाटिकायामिव रतिफलं वृत्तं व्युत्पाद्यते। एवं नाटकादीनां स्वरूपं तत्फलं च दर्शितम्। तच्छरीरभूतसंधिसंध्यङ्गाधिलक्षणम्। विस्तरतस्तु भरतादेवावसेयः॥ **मसृणेति**। त्रिविधो हि गेयकाव्यस्य प्रयोगः। मसृण उद्धतो मिश्रश्च। तथा हि—डोम्बिकासु नरपतिचाटुकप्राधान्येन प्रवृत्तासु सुकुमारमेव शुद्धं रूपम्॥ भाणकेषु नृसिंहादिचरितवर्णने उद्धतमेव। यत्पुनर्मसृणेऽप्युद्धतं प्रविशति तदुचितमेव। तत्राप्यल्पत्वबहुत्वकृतो भेदः। पूर्वप्रस्थानप्रबन्धः। उत्तरः शिङ्गटकभेदः। उद्धते तु मसृणानुप्रवेशोद्भाणिकाभेदः। अन्यदपि प्रेरणरामाक्रीडरासकहल्लीसकादिकमल्पत्वबहुत्ववैचित्र्यकृतमिहैव प्रविष्टं वेदितव्यम्॥ ननु डोम्बिकाशिङ्गटकादौ अन्योन्याननुचितत्वं वाक्यानां ततश्चानन्वये कथं रञ्जकत्वमिति चेत्, न। देवतास्तुतेः स्त्रीपुंभावसमाश्रयस्य च शृङ्गारस्य सर्वत्रानुगमात्। तथा चाह—'देवस्तुत्याश्रयकृतं स्त्रीपुंभावसमाश्रयम्।' इति। तत एव चूडामणिडोम्बिकादौ तु काम-

१ 'संध्यङ्गादिलक्षणविस्तरस्तु' स्यात्.

'हासप्रायं प्रेरणं तु स्यात्प्रहेलिकयान्वितम् ।'
'ऋतुवर्णनसंयुक्तं रामाक्रीडं तु भाष्यते ॥'
'मण्डलेन तु यन्नृत्तं हल्लीसकमिति स्मृतम् ।
एकस्तत्र तु नेता स्याद्गोपस्त्रीणां यथा हरिः ॥'

---

स्यैव प्रच्छन्नानुरागपरमरहस्योपदेशात् । यद्वामाभिनिवेशित्वमित्यनेन मन्मथसारत्वेनाभिधानात् । सिंहशूकरधवलादिवर्णनेनापि भाणकप्रेरणभाणिकादावप्रस्तुतप्रशंसार्थान्तरन्यासनिदर्शनादिना पुरुषार्थस्यैवोपदेशदर्शनात् । अथ पाठ्यस्य गेयस्य च रूपकस्य को विशेषः । अयमाख्यायते—पाठ्ये हि अङ्गं गीतं चेत्युभयमप्रतिष्ठितम् । तथा हि करकरणचारी मण्डलादि यत्तत्राङ्गोपयोगि तत्स्वरूपेण लयादिव्यवस्थया चानियतमेव यथारसं प्रयुज्यमानत्वेन विपर्यासात् । गेये तु गीतमङ्गं च द्वयमपि स्वप्रतिष्ठम् । तथा हि—यस्य यादृशं लक्षयति स्वरूपादिकं निरूपितं तन्न विपर्ययेति[1] मन्त्रादिवत् । यद्यपि क्वचिद्वर्णाङ्गप्राधान्यं यथा प्रस्थानादौ, क्वचिद्वाद्यप्राधान्यं यथा भाणकादिषु भग्नतालपरिक्रमणादौ, क्वचिद्गीयमानरूपकाभिधेयप्राधान्यं यथा शिङ्गटकादौ, क्वचिन्नृत्यप्राधान्यं यथा डाम्बिलिकादिप्रयोगानन्तरं हुड्डुत्काराद्यवसरे । अत एव तत्र लोकभाषया वह्लिमार्ग इति प्रसिद्धिः । तथापि गीताश्रयत्वेन वाद्यादेः प्रयोग इति गेयमिति निर्दिष्टम् ॥ रागकाव्येषु च गीतेनैव निर्वाहः । तथा हि—राघवविजयस्य विचित्रवर्णनीयत्वेऽपि ढक्करागेणैव निर्वाहः, मारीचवधस्य तु ककुभग्रामरागेणैवेति ॥ किं च पाठ्ये साक्षात्कारकल्पानुव्यवसायसंपत्त्युपयोगिनः पात्रं प्रति भाषानियमस्य नियतस्य छन्दोलंकारादेश्चाभिधानं दृश्यते । गीयमानं च नाभिधीयते असंगत्यापत्तेरपि तु यादृशा लयतालादिना यादृगर्थसूचनयोग्योऽभिनयः सात्विकादिः प्र[2]भानरसानुसारितया प्रयोगयोग्यस्तदुचितार्थपरिपूरणं ध्रुवागीतेन क्रियते । गेये च स्त[3]दादेरिव वस्तुभूतरूपरसादिमध्यपातिविषयविशेषयोजनया कृता प्रतीतिः साध्या । डोम्बिकादेर्न नै[4]टस्येवालौकिकरूपप्रादुर्भावनया । तथा हि—डोम्बिकादौ च वर्णच्छटा वर्णादिप्रयोगे तावदभिनयकथैव नास्ति किं तत्र

---

१. 'विपर्येति' स्यात्. २. 'प्रधान' स्यात्. ३. 'सूदादे' स्यात्. ४. 'नेदस्येवा' स्यात्.

'अनेकनर्तकीयोज्यं चित्रताललयान्वितम्।
आचतुःषष्टियुगलाद्रासकं मसृणोद्धतम्॥'
'गोष्ठे यत्र विहरतश्चेष्टितमिह कैटभद्विषः किंचित्।
रिष्टासुरप्रमथनप्रभृति तदिच्छन्ति गोष्ठीति॥'
'यस्मिन्कुलाङ्गना पत्युः सख्यग्रे वर्णयेद्गुणान्।
उपालम्भं च कुरुते यत्र श्रीगदितं तु तत्॥'
'लयान्तरप्रयोगेण रागैश्चापि विवेचितम्।
नानारसं सुनिर्वाह्यकथं काव्यमिति स्मृतम्॥'

---

विचार्यते केवलवृत्तस्वभावं हि तत्। तदनन्तरं तु धारापरिक्रमपूर्वकलयप्रयोगावसरे 'पाआलूअलोससाहिणिहु जय जय लच्छिवच्छमतिआ' इत्यादि यद्गीयते तत्कस्योक्तिरूपम्। यदि तावन्नर्तितुमागताया लौकिक्या डोम्बिकाप्रभृतेर्नर्तक्यास्तदा सैवेदानीमेवंभूतं वस्तुरूपं लौकिकं वचनमभिधत्ते। गायनादिसंक्रमितस्ववास्तव्यतयेति कः साक्षात्कारकल्पत्वाध्यवसायगोचरीकार्यत्वे च पाठ्यस्य प्रधानोऽशः। तेन यथा लोके कश्चित्कंचिदन्योपदेशगानादिक्रमेण वस्तूद्बोधनकरणद्वारेण वा छन्दोनुप्रवेशितया वाक्यस्य चिन्मनस्यावर्जनातिशयं विधत्ते नृत्यन्नपि गायन्नपि। तद्वदेव डोम्बिकाकाव्यादौ द्रष्टव्यम्॥ 'हठे वि डोम्बी' इत्यादावपि वचसि सैव। डोम्बिका नयपतिपरितोषकार्थाभिधायिवचननिष्ठेन गीतेन वाद्येन नृत्येन च राजानमनुरञ्जयितुं गृहीतोद्यमा वक्रीत्वेन पूर्वस्थिता मध्ये काचिदीदृशी चौर्यकामुककेलिलालसमानसा, काचित्पुनरेवंविधा, कश्चिदेवंभूतश्चौर्यकामुकः, कोऽप्येवंभूतस्तत्र काचिदेवं प्रौढदूतीत्येवमादिराजपुत्रहृदयानुप्रवेशयोग्यं तत्प्रसादनेन धनाद्यर्जनोपायमभिदधती तमेव राजपुत्रं परत्वेन तथैव वा समुद्दिश्य अन्यदपि चेष्टितमभिधायान्ते डोम्बिकाकृत्यमेवोपसंहरति। गुणमालायां 'जामि तारा अनुडिअपुणुणम्बीसमि' इत्यादौ। तत्र तु सा नृत्यन्ती डोम्बिका बहुतरोपरञ्जकगीतादिपट्टुपेटकपरिवृता त्वां प्रत्येवमहमुपश्लोकितवतीति तन्मध्यवर्तिगायनमुखसंक्रमितनिजवचना लौकिकेनैव रूपेण तद्गीयमानरूपकगतलयताल-

---

१. 'वा कस्यचि' स्यात्.

आदिग्रहणात् शम्याच्छलितद्विपद्यादिपरिग्रहः । प्रपञ्चस्तु ब्रह्मभरतकोलाहलादिशास्त्रेभ्योऽवगन्तव्यः ।

प्रेक्ष्यमुक्त्वा श्रव्यमाह—

**श्रव्यं महाकाव्यमाख्यायिका कथा चम्पूरनिबद्धं च ।**

एतानि क्रमेण लक्षयति—

**पद्यं प्रायः संस्कृतप्राकृतापभ्रंशग्राम्यभाषानिबद्धभिन्नान्त्यवृत्तसर्गाश्वाससंध्यवस्कन्धकबन्धं सत्संधि शब्दार्थवैचित्र्योपेतं महाकाव्यम् ।**

छन्दोविशेषरचितं प्रायः संस्कृतादिभाषानिबद्धैर्भिन्नान्त्यवृत्तैर्यथासंख्यं सर्गादिभिर्निर्मितं सुश्लिष्टमुखप्रतिमुखगर्भविमर्शनिर्वहणसंधिसुन्दरं शब्दार्थवैचित्र्योपेतं महाकाव्यम् ।

---

साम्येन तावन्नृत्यति । तद्गीयमानपदार्थस्य च सातिशयमावर्जनीये राजादौ हृदयानुप्रवेशितां दर्शयितुं लौकिकव्यवहारगतहस्तस्तू(?) कर्मरोमाञ्चाक्षिविकारतुल्ययोगक्षेमतयैवाङ्गविकारादिसंभवमप्याक्षिपति । एवं गीतेन रञ्जनं प्राधान्येन विधाय तदुपयोगिनं चाङ्गव्यापारं प्रदर्श्य नृत्येन पुनश्चित्तग्रहणं कुर्वती नृत्यं प्रधानभावं गीतं च तदुपसर्जनभावं नयन्ती तत एव तदभिनयमनाद्रियमाणा तद्गीयमानाङ्गभावाक्षिप्ततत्समुचितभावमेवाङ्गविक्षेपं करोति लयपरिष्वष्कणादौ । तत्रेयत्यंशे लौकिकमात्रस्वभाव एव रामनटादिव्यवहारवत्काप्रयोज्यप्रयोजकभावाशङ्का । तदनन्तरं च यथैव सा गीतनृत्यादि प्रयुङ्क्ते तथैव तत्सदृशं नर्तकी प्रयुङ्क्ते । न तु डोम्बिकां साक्षात्कारकल्पेन दर्शयति तदीयाहार्यादिना स्वात्मरूपप्रच्छादनाद्यभावात् । तत एव न डोम्बिकां साक्षात्कारकल्पेन सा दर्शयति, अपि तु तदैव नृत्यं साभिनयं केवलं च प्रदर्शयतीति सा लौकिकरूपान्तरप्रादुर्भावेनेति । व्युत्पत्त्यभिसंधानं च गेये नास्ति । पाठ्ये तु तदेव प्रधानं भरतमुनिप्रभृतीनां तथैव मूलतः प्रवृत्तेरित्यलं बहुना अप्रस्तुतप्रपञ्चेनेति ॥ **भिन्नान्त्यवृत्तैरिति** । उपक्रान्तवृत्तव्युदासेन सर्गादीनां वृत्तान्तरैरुपसंहारः कर्तव्य

मुखादयः संधयो भरतोक्ता इमे—

'यत्र बीजसमुत्पत्तिर्नानार्थरससंभवा।
काव्ये शरीरानुगता तन्मुखं परिचक्षते॥'

---

इत्यर्थः। यथा कुमारसंभवे—'अथ स ललितयोषिद्भ्रूलता चारुशृङ्गं रतिवलयपदाङ्के चापमासज्य कण्ठे। सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः शतमखमुपतस्थे प्राञ्जलिः पुष्पधन्वा॥' यथा वा हरिप्रबोधे आर्यागीतिच्छन्दोबद्धाश्वासकान्ते पुष्पिताग्रा—'भगवति शयिते विभावरीणां द्युतिमपहृत्य यशोविभावरीणाम्। गततमसतया विभावरीणां सघनमहः समतां विभावरीणाम्॥ संधिबन्धेषु[1] च नाराचतोटकादीनि विचित्राणि छन्दांसि दृश्यन्ते॥ **यत्र बीजेति**। बीजस्य यत्र समुत्पत्तिः कविप्रयत्नतो निबन्धः। नानारूपोऽर्थः प्रयोजनं येषां ते नानार्थाः संभवन्तीति संभवः। नानार्थरसानां संभवो यस्याः सा तथा। काव्ये नाटकादौ। तत्र च संधीनां युक्ततयावभासात्। अत एव तत्रैवोदाहरिष्यते—**शरीरानुगता इति**[2]। वृत्तानुगता इति वृत्तव्यापिनी। तन्मुखम्। यथा वेणीसंहारे कुरुपाण्डवानामुभयेषां क्षेमप्रतिपादकं स्थापकस्य वचनं सहदेवः क्रुद्धस्य भीमसेनस्यानुकूल्येन शमनाय कुरुनिधनपरं व्याचचक्षे—'निर्वाणवैरदहना प्रशमादरीणाम्' इति। अत्र प्रशमोऽवसानमुदयनिरोधात्। यथा शान्तो वायुः शान्तोऽग्निरवसित इत्यर्थः। तदेवमरीणामवसानेन दाह्याभावान्निर्वाणवैराग्नयः पाण्डुतनया नन्दन्तु सह माधवेन। कुरुराजसुतास्तु सभृत्या रुधिरप्रसाधितभुवः क्षतशरीराः स्वर्गस्था भवन्त्विति शत्रुक्षयपूर्वस्थस्य पाण्डवानां समृद्धिरूपस्य फलस्य बीजं कविप्रयत्नादुत्पन्नम्। नानारससंभवा चास्योत्पत्तिः। नाटकानेकत्वेन पात्रानेकत्वविवक्षया नानार्थता रसानाम्। तथा हि—अत्र, 'एष कुरुसंधानममृष्यमाणः पृथुललाटतटघटितभीषणभ्रुकुटिरापिबन्निव नः सर्वान् दृष्टिपातेन सहदेवानुयातः क्रुद्धो भीम इत एवाभिवर्तते' इति पारिपार्श्वकवचनात्सूचितक्रोधस्थायिभावानुभावः 'लाक्षागृहानलविषान्नसभाप्रवेशैः–' इत्यादिस्ववचनप्रकाशितस्वविभावो भीमसेनस्य रौद्रो रसः कुरुक्षयप्रयोजनो बीजेन प्रकाशितत्वाद्बीजोत्पत्तेरेव संभवन्निबद्धः। कुरूणां च कुलक्षयनिमित्तकः करुणः, पाण्ड-

---

१. 'संधिविषेषु' ख. २. 'शरीरानुगता' स्यात्.

'बीजस्योद्धाटनं यत्र दृष्टनष्टमिव क्वचित् ।
मुखन्यस्तस्य सर्वत्र तद्वै प्रतिमुखं स्मृतम् ॥'
'उद्भेदस्तस्य बीजस्य प्राप्तिरप्राप्तिरेव वा ।
पुनश्चान्वेषणं यत्र स गर्भ इति संज्ञितः ॥'

---

वसिद्धिप्रयोजनो बीजोत्पत्तेरेव संभवन्निबद्धः । यथा दुर्योधनः शोचन्नाह— 'अथैवावां रणमुपगतौ तातमम्बां च दृष्ट्वा घ्रातस्ताभ्यां शिरसि विनतो हन्त दुःशासनश्च । तस्मिन्बाले प्रसभमरिणा प्रापिते तामवस्थां पार्श्वे पित्रोरपगतघृणः किं नु वक्ष्यामि गत्वा ॥' तदेवं भीमसेनस्येव क्रोधात्मकं चेष्टितं शत्रुक्षयफलमित्युपादेयम् । दुर्योधनस्येव च दौरात्म्यभूयिष्ठं चेष्टितं शोकफलत्वात्त्याज्यमिति विधिनिषेधविषयव्युत्पत्तेर्नानार्थता पात्रानेकत्वाश्रया रसानाम् । नाटकानेकत्वायथा सागरिकाप्राप्त्यर्थो वत्सराजस्य शृङ्गारः बीजसमुत्पत्तिरिति । बीजं समुत्पन्नमुक्तैर्विशेषणैर्विशिष्टमिष्यते । तथा हि बीजमेव काव्यशरीरव्यापि यतो मुखसंधौ तस्योत्पत्तिः । प्रतिमुखे दृष्टनष्टमिव तस्योद्धाटनं गर्भे चोद्भेदस्तस्य अवमर्शे च गर्भनिर्भेदः । निर्वहणे च समानयनमिति काव्यशरीरव्यापिता ॥ **बीजस्योद्धाटनमिति** । अयमर्थः—दृष्टनष्टमिव कृत्वा तावन्मुखे 'द्वीपादन्यस्मात्–' इत्यादिना न्यस्तं भूमाविव बीजम् अमात्येन सागरिकाचेष्टितं वसन्तोत्सवकामदेवपूजादिना तिरोहितत्वान्नष्टमिव, नहि तन्नष्टमेव । सागरिकाचेष्टितस्य हि बीजस्येव तदाच्छादकमप्युत्सवादिरूपं भूमिवत्प्रत्युत कार्यजननशक्त्युद्बोधकम् । तस्य दृष्टनष्टतुल्यं कृत्वा न्यस्यते । एवं कुङ्कमबीजस्य यदुद्धाटनं तत्कल्पं यत्रोद्धाटनं सर्वत्रैव कथाभागसमूहे स प्रतिमुखम् । प्रतिराभिमुख्ये । मुखस्याभिमुख्येन यतोऽत्र वृत्तिः । पराङ्मुखता हि दृष्टनष्टकल्पता । तथा हि रत्नावल्याम्—'परपेसणकरिसिदं पि सरीरमेदस्स दंसणेण अज्ज मे बहुमदं संपण्णम्' इत्यादिसागरिकोक्तेरनन्तरं सुसंगतारचितराजतत्समागमपर्यन्तं काव्यं द्वितीयाङ्कगतं प्रतिमुखसंधिरुद्धाटितत्वाद्बीजार्थस्य ॥ **उद्भेदस्तस्येति** । प्राप्तिरप्राप्तिरन्वेषणमित्येवंभूताभिरवस्थाभिः पुनः पुनर्भवन्तीभिर्युक्तो गर्भसंधिः । प्राप्तिसंभवाख्ययावस्थया युक्तत्वेन फलस्य गर्भीभावात् । तथा हि रत्नावल्यां द्विती-

---

१. 'परप्रेषणकर्षितमपि शरीरमेतस्य दर्शनेनाद्य मे बहुमदं संपन्नम्' इति च्छाया.

याङ्के सुसंगता—'सहि, अदक्खिणासि तुमम् । दाणीं जा एवं भट्टिणा हत्थेण गहिदा वि कोवं न मुञ्चसि' इति प्राप्तरूप उद्भेदः । ततोऽत्र 'सागरिका—(सभ्रूभङ्गम् ।) सुसंगदे, इआणिं पि न विरमसि' इति कुमारीभावसमुचितकृतकोपेनापि परिपूर्णरतिप्रकाशनादन्वेषणम् । ततो 'भो, एसा खु अवरा देवी वासवदत्ता' इति विदूषकोक्ते राजनि सचकितं सागरिकां मुञ्चति सागरिकासुसंगतयोश्च निष्क्रमाद्वासवदत्ताप्रवेशाच्चारभ्य तृतीयाङ्के प्रवेशके 'साहु रे वसन्तय, साहु । अदिसइदो ते अमच्चजोअन्धराअणो इमाए संधिविग्गहचिन्ताए' इति काञ्चनमालयोक्तं यावदप्राप्तिस्ततोऽस्याः 'अज्ज क्खु मए राअउलाओ पडिणीव्वत्तन्तीए चित्तसालिआदुआरे वसन्तअस्स सुसंगदाए सह आलावो सुदो' इत आरभ्य 'ह्रिया सर्वस्यासौ हरति विदितास्मीति वदनं द्वयोर्दृष्ट्वालापं कवयति कथामात्मविषयाम् । सखीषु स्मेरास्ते प्रकटयति वैलक्ष्यमधिकं मे प्रिया प्रायेणास्ते हृदयनिहितातङ्कविधुरम् ॥ तद्वार्तान्वेषणाय गतश्चिरयति वसन्तकः' इति वत्सराजोक्तिं यावदन्वेषणम् । ततश्च 'ही ही कोसन्बीरज्जलम्भेणावि ण तादिसो पिअवअस्सस्स परिदोसो आसि, जादिसो मम सआसादो पियवयणं सुणिअ भविस्सदि ।' इत्यादिविदूषकोक्तेन प्राप्तिरसोऽस्यां समागमसंकेतस्थानप्राप्तिं यावदन्वेषणम् । ततः 'प्रिये, पश्य पश्य । उदयोर्वीभृत एष त्वद्वदनापहृतकान्तिसर्वस्वः । पूत्कर्तुमिवोर्ध्वकरः स्थितः पुरस्तान्निशानाथः ॥' इति राजोक्तिपर्यन्तं परिपूर्णा प्राप्तिः । ततः 'दर्पः स्यादमृतेन चेदिह तदप्यस्त्येव बिम्बाधरे' इति वासवदत्तामुखोद्घाटनादनन्तरम् 'राजा—कथं देवी वासवदत्ता । वयस्य, किमेतत् । विदू-

---

१. 'सखि, अदक्षिणासि त्वम् । इदानीं या एवं भर्त्रा हस्तेन गृहीतापि कोपं न मुञ्चसि' इति च्छाया. २. 'सुसंगते, इदानीमपि न विरमसि' इति च्छाया. ३ 'भोः, एषा खलु अपरा देवी वासवदत्ता' इति च्छाया. ४. साधु रे वसन्तक, साधु । अतिशयितस्त्वयामात्ययौगन्धरायणोऽनया संधिविग्रहचिन्तया' इति च्छाया. ५. 'अद्य खलु मया राजकुलात्प्रतिनिवर्तमानया चित्रशालिकाद्वारे वसन्तकस्य सुसंगतया सह आलापः श्रुतः' इति च्छाया. ६. 'स्वाधो नयति' कलिकातामुद्रितपुस्तके. ७. 'मधिकम्' कलिकातामुद्रितपुस्तके. ८. 'आश्चर्यम् । कौशाम्बीराज्यलाभेनापि न तादृशः प्रियवयस्यस्य परितोष आसीत्, यादृशो मम सकाशात्प्रियवचनं श्रुत्वा भविष्यति' इति च्छाया.

'गर्भनिर्भिन्नबीजार्थो वि¹लोभनकृतोऽपि वा ।
क्रोधव्यसनजो वापि स **विमर्शः** प्रकीर्तितः ॥'

---

षकः—[1]अम्हाणं जीविदसंसओ' इत्यादिना अप्राप्तिः । अस्यां च '[2]दिट्ठिआ इमिणा विरइदभट्टिणीवेसेण केण वि इमादो चित्तसालादो णिक्कमन्ती ण लक्खिदम्हि' इति सागरिकोक्त्या अन्वेषणम् । ततश्च सागरिकाया लतापाशे कृते '[3]कहं एसा देवी वासवदत्ता उब्बन्धिय अप्पाणअं वावादेदि' इति विदूषकोक्ते राजनि च समुपेत्य कण्ठपाशमपनयति, सागरिकया '[4]अज्जउत्त, मुञ्च मुञ्च । पराहीणो क्खु अअं जणो ण पुण मरिदुं ईदिसं अवसरं पावेदि । (पुनः कण्ठे पाशं दातुमिच्छति ।) राजा—(निर्वर्ण्य सहर्षम् ।) कथं प्रिया मे सागरिका । अलमलमतिमात्रं साहसेनामुना ते त्वरितमयि विमुञ्च त्वं लतापाशमेनम् । चलितमपि निरोद्धुं जीवितं जीवितेशे क्षणमिह मम कण्ठे बाहुपाशं निधेहि ॥' इत्यादिना स्फुटमेव प्राप्तिरित्येवं गर्भः । अप्राप्त्यंशश्चात्रावश्यंभावी । अन्यथा हि संभावनात्मा प्राप्तिसंभवः कथं निश्चय एव हि स्यात् । विमर्शे त्वप्राप्तेरेव प्रधानाप्राप्त्यंशस्य च न्यूनतेति विशेषः । **गर्भनिर्भिन्नेति** । बीजशब्देन बीजफलम् । अर्थशब्देन निवृत्तिरुच्यते । तेन गर्भान्निर्भिन्नं प्रदर्शितमुखं बहिर्निःसरणोन्मुखं यद्बीजफलं तस्या योऽर्थो निवृत्तिः पुनस्तत्रैव प्रवेश इव यत्र स विमर्शसंधिः । **स इति** । तच्छब्देन यत्रेत्याक्षिप्तम् । सा च निवृत्तिः क्रोधेन वा निमित्तेन लोभेन वा व्यसनेन वा शापादिना वा । अपिशब्दाद्विघ्ननिमित्तान्तराणां प्रतिपदमशक्यनिर्देशानां संग्रहः । तत्र क्रोधाद्यथा रत्नावल्यां तृतीयेऽङ्के [5]क्रोधोवेशेन वासवदत्तया कारानिक्षिप्तायां सागरिकायाम् । तथा हि तत्र चतुर्थेऽङ्के प्रवेशकः सागरिकाप्राप्तिसंदेहेन करुणरसात्मकः । अत्रैव सागरिकाप्राप्तिसंदेहं

---

१. 'विकल्पन' भरतैकपुस्तके.

---

१. 'अस्माकं जीवितसंशयः' इति च्छाया. २. 'दिष्ट्या अनेन विरचितभर्त्रिवेषेण केनापि अस्याश्चित्रशालिकाया निष्क्रामन्ती न लक्षितास्मि' इति च्छाया. ३. 'कथमेषा देवी वासवदत्ता उद्बध्यात्मानं व्यापादयति' इति च्छाया. ४. 'आर्यपुत्र, मुञ्च मुञ्च । पराधीनः खल्वयं जनः न पुनर्मर्तुमीदृशमवसरं प्राप्नोति' इति च्छाया. ५. 'क्रोधावेशेन' स्यात्.

'समानयनमर्थानां मुखाद्यानां सबीजिनाम्।
नानाभावोत्तराणां यद्भवेन्निर्वहणं तु तत्॥' इति।

---

मन्यमान आह—'राजा—अम्भोजगर्भसुकुमारतनुस्तदासौ कण्ठग्रहे प्रथमरागघने विलीय। सद्यः पतन्मदनमार्गणरन्ध्रमार्गैर्मन्ये मम प्रियतमा हृदयं प्रविष्टा॥ योऽपि मे विश्वासस्थानं वसन्तकः सोऽपि देव्या संयतः। तत्कस्याग्रतो बाष्पमोक्षं करिष्ये।' पुनरत्रैव 'अप्पिअं[1] दे ण पारेमि आचक्खिदुम्' इति विदूषकोक्ते 'राजा—(समाश्वस्य।) प्राणाः परित्यजत मां ननु सत्पथोऽयं [2]हे दक्षिणा भवत मद्वचनं कुरुध्वम्। शीघ्रं न यात यदि तन्मुषिताः स्थ मूढा याता सुदूरमधुना गजगामिनी सा॥' इति राज्ञः सागरिकाप्राप्तिनैराश्यरूपैव '[3]भो, मा अण्णहा संभावेहि। सा खु देवीए उज्जेणिं पेसिदा। अदो मए अप्पिअं ति भणिदम्' इति विदूषकोक्त्या संदेहमानीता। तथा हि। तद्विसृष्टां रत्नमालां हृदये विन्यस्य पुनराह—'अहह। कण्ठाश्लेषं समासाद्य तस्याः प्रभ्रष्टयानया। तुल्यावस्था सखी चेयं तनुराश्वास्यते मम॥' इतीन्द्रजालप्रयोगं यावद्विघ्ने वासवदत्ताक्रोधो निमित्तम्'। एवं लोभादावुदाहार्यम्॥ **समानयनमर्थानामिति।** मुखाद्यानां चतुर्णां संधीनां येऽर्थाः प्रारम्भयत्नप्रत्याशानियताप्तिलक्षणास्तेषां सह बीजिभिर्बीजविकारैः क्रमेणावस्थाचतुष्टये भवद्भिरित्युद्घाटनोद्भेदलक्षणैर्वर्तमानानां नानाविधैः सुखदुःखात्मकै रतिहासशोकक्रोधादिभिर्भावैरुत्तराणां चमत्कारास्पदत्वेन जातोत्कर्षाणां यत्समानयन्ति यस्मिन्नर्थराशौ समानीयन्ते फलनिष्पत्तौ योज्यन्ते तन्निबर्हणं फलयोगोऽवस्थया व्याप्तम्। तत्र यदा सुखप्राप्तेः फलत्वं तदा रतिहासोत्साहविस्मयस्थायिभावबाहुल्यं धृतिहर्षगर्वौत्सुक्यमदादिव्यभिचारिभावबाहुल्यं च प्रारम्भादीनाम्, दुःखहानेस्तु फलत्वं क्रोधशोकभयजुगुप्सास्थायिभावबाहुल्यं आलस्यौग्र्यव्यभिचारिभावबाहुल्यं च द्रष्टव्यम्। रत्नावल्यामैन्द्रजालिकप्रवेशात्प्रभृत्यासमाप्तेरेषामवस्थासंध्यादीनां नायकप्रतिनायक-

---

१. 'अप्रियं ते न पारयामि आख्यातुम्' इति च्छाया. २. 'रे' कलिकातामुद्रितपुस्तके. ३. 'भोः, मान्यथा संभावय। सा खलु देव्योज्जयिनीं प्रेषिता। अतो मया प्रियमिति भणितम्' इति च्छाया.

शब्दवैचित्र्यं यथा—असंक्षिप्तग्रन्थत्वम्, अविषमबन्धत्वम्, अनतिविस्तीर्णपरस्परनिबद्धसर्गादित्वम्, आशीर्नमस्कारवस्तुनिर्देशोपक्रमत्वम्, वक्तव्यार्थतत्प्रतिज्ञानतत्प्रयोजनोपन्यासकविप्रशंसासुजनदुर्जनस्वरूपवदादिवाक्यत्वम्, दुष्करचित्रादिसर्गत्वम्, स्वाभिप्रायस्वनामेष्टनाममङ्गलाङ्कितसमाप्तित्वम्, इति ।

---

तदमात्यतत्परिवारनायिकादिमुखेनापि नियोजनम् । न त्वेकमुखेनैवेति । **असंक्षिप्तग्रन्थत्वमिति** । अनेन ग्रन्थगौरवमाचक्षाणः कथारसविच्छेदशङ्किनां मनांस्यावर्जयति । **अविषमबन्धत्वमिति** । अनेन शब्दसंदर्भवेदिनां मनो मुदमादधाति । **अनतिविस्तीर्णपरस्परनिबद्धसर्गादित्वमिति** । अनेन ग्रन्थविस्तरभीरूणां चित्तमाकर्षति । सर्गादीनां परस्परमेकवाक्यतया महावाक्यात्मकस्य प्रबन्धस्योपकारितां च दर्शयति—**आशीर्नमस्कारवस्तुनिर्देशोपक्रमत्वमिति** । तत्र आशीर्यथा हरविलासे—'ओमित्येकाक्षरं ब्रह्म श्रुतीनां मुखमक्षरम् । प्रसीदतु सतां स्वान्तेष्वेकं त्रिपुरुषीमयम् ॥' नमस्कारो यथा रघुवंशे—'वागर्थाविव–' इत्यादि । वस्तुनिर्देशो यथा हयग्रीववधे—'आसीद्दैत्यो हयग्रीवः' इत्यादि । **वक्तव्यार्थेत्यादि** । वक्तव्यार्थप्रतिज्ञानं यथा सेतुबन्धे—'तं[1] तिअसबन्दिमोक्खं समत्तलोअस्स हिअअसल्लुद्धरणम् । सुणह अणुराइइण्हं सीयादुक्खक्खयं दसमुहस्स वहम् ॥' प्रयोजनोपन्यासो यथा—'परिवड्ढइ[2] विन्नाणं संभाविज्जइ जसो विढप्पन्ति गुणा । अव्वइसुपरिसुचरिअं कित्तं जेण हरन्ति कव्वालावा ॥' कविप्रशंसा यथा रावणविजये—'सयलं[3] चेव निबन्धं दोहिं पएहिं कलुसं पसण्णन्तविअं । जाणन्ति कईण कई सुद्ध सहोवेहिं लोअणेहिं व हिअअम् ॥' सुजनदुर्जनस्वरूपं यथा हरविलासे—'इतस्ततो भषन्भूरि न पतेत्पिशुनः शुनः । अवदाततया किं च न भेदो हंसतः सतः ॥' **दुष्करचित्रादिसर्गत्वमिति** । आदिग्रहणेन यमकश्लेषादयो गृह्यन्ते । ते च किरातार्जुनीयादौ दृश्यन्त एव ॥ **स्वाभिप्रायेत्यादि** । तेष्वभिप्रायाङ्कता यथा—धैर्य-

---

१. 'तं त्रिदशबन्दिमोक्षं समस्तलोकस्य हृदयशल्योद्धरणम् ।
श्रृणुतानुरागचिह्नं सीतादुःखक्षयं दशमुखस्य वधम् ॥' [इति च्छाया]

२. '........................................ ।
........................................ ॥' [इति च्छाया]

३. '........................................ ।
........................................ ॥' [इति च्छाया]

अर्थवैचित्र्यं यथा—चतुर्वर्गफलोपायत्वम् 'चतुरोदात्तनायकत्वम्, रसाभावनिरन्तरत्वम्, विधिनिषेधव्युत्पादकत्वम्, सुसूत्रसंविधानकत्वम्, नगराश्रमशैलसैन्यावासार्णवादिवर्णनम्, ऋतुरात्रिंदिवार्कास्तमयचन्द्रोदयादिवर्णनम्, नायकनायिकाकुमारवाहनादिवर्णनम्, मन्त्रदूतप्रयाणसंग्रा-

---

मायुराजस्य, उत्साहः सर्वसेनस्य, अनुरागः प्रवरसेनस्येति । स्वनामाङ्कता यथा—राजशेखरस्य हरविलासे । इष्टनामाङ्कता यथा—लक्ष्म्यङ्कता किराते भारवेः, श्र्यङ्कता शिशुपालवधे माघस्य । मङ्गलाङ्कता यथा—अभ्युदयः कृष्णचरिते, जय उषाहरणे, आनन्दः पञ्चशिखशूद्रककथायाम् । इति । **चतुर्वर्गफलोपायत्वमिति ।** अनेन चत्वारो वर्गा धर्मार्थकाममोक्षाः त एव व्यस्ताः समस्ता वा फलं तस्योपायतया महाकाव्यं ज्ञापयन् मुक्तकादिभ्यो भेदमाचष्टे । **चतुरोदात्तनायकत्वमिति ।** अनेन कथाशरीरव्यापिनो नायकस्य धर्मार्थकाममोक्षेषु वैचक्षण्यमभिदधान आशयविभूत्योरप्युत्कर्षमभिदधाति । **रसभावनिरन्तरत्वमिति ।** अनेन रसग्रहणेनापि तत्कारणभूतानां भावानां परिग्रहे पृथग्भावग्रहणेन रसभावानां परस्परं कार्यकारणभावमभिदधद्रसेभ्यो भावाभावेभ्यो रसा रसेभ्यश्च रसा इति नैरन्तर्यस्य रसभावसाध्यत्वेन भोजनस्येवैकरसस्य प्रबन्धस्यापि वैरस्यमपाकरोति । **विधिनिषेधव्युत्पादकत्वमिति ।** अनेन गुणवतो नायकस्योत्कर्षप्रकाशनेन दोषवतश्चोच्छेदप्रदर्शनेन जिगीषुणा गुणवतैव भाव्यं न दोषवतेति व्युत्पादयति । **सुसूत्रसंविधानकत्वमिति ।** अनेन प्रोक्तलक्षणाः पदार्थास्तथा निबन्धनीया यथा प्रबन्धस्य शोभायै भवन्तीति कवीन् शिक्षयति । **नगराश्रमेत्यादिना** देशप्रशंसामुपदिशति । नगरवर्णनं यथा हरिविजय-रावणविजय-शिशुपालवध-कुमारसंभवादौ । आश्रमवर्णनं यथा रघुवंश-किरातार्जुनीयादौ । शैलवर्णनं किरातार्जुनीयादौ । सैन्यावासवर्णनं माघे । अर्णववर्णनं सेतुबन्धादौ । **ऋत्वित्यादिना** कालावस्थावर्णनं लक्षयति । तत्र ऋतुवर्णने शरद्वसन्तग्रीष्मवर्षादिवर्णनानि सेतुबन्ध-हरिविजय-रघुवंश-हरिवंशादौ । रात्रिवर्णनं किरातार्जुनीय-कुमारसंभव-शिशुपालवध-हयग्रीववधादौ । दिवसवर्णनं प्रभातपूर्वाह्णमध्याह्नापराह्णवर्णनानि शिशुपालवध-किरातार्जुनीयादौ । अर्कास्तसमयवर्णनं कुमारसंभव-हरिविजय-रावणविजय-सेतुबन्धादौ । चन्द्रोदयवर्णनं कुमारसंभव-किरातार्जुनीय-शिशुपालवध-सेतुबन्धादाविति । **नायकेत्यादिना** पात्रविशेषाभिनन्दनं सूचयति । तत्र नायकवर्णनं

**माभ्युदयादिवर्णनम्, वनविहारजलक्रीडामधुपानमानापगमरतोत्सवादिवर्णनम्, इति।**

---

हरिविजय-रावणविजय-जानकीहरण-रघुवंशादौ । नायिकावर्णनं कुवलयाश्वचरित-कुमारसंभव-जानकीहरण-सुभद्राहरणादौ । कुमारवर्णनं रघुवंशादौ । वाहनवर्णने हस्त्यश्वगरुत्मत्पुष्पकवर्णनानि हरिविजय-रावणविजयादौ । **मन्त्रेत्यादिना** अर्थप्रधानचेष्टानामुपदेशाच्चतुर्वर्गफलत्वेऽपि भूयसार्थोपदेशकृन्महाकाव्यं भवतीत्यभिधत्ते । तत्र मन्त्रः पञ्चाङ्गः प्रतिपादितः । स यथा—किरातार्जुनीय-शिशुपालवध-भट्टिकाव्य-हयग्रीववधादौ । दूतस्त्रिधा—निसृष्टार्थः, परिमितार्थः, शासनहरश्च । निसृष्टार्थो यथा—उद्योगपर्वणि वासुदेवः, हरिविजये वा सात्यकिः । परिमितार्थो यथा—रामायणेऽङ्गदः । शासनहरो यथा—कादम्बर्यां केयूरक इति । प्रयाणं त्रिधा—स्वशक्त्यपचये, परव्यसने, अभिमतार्थसिद्धये च । तत्र स्वशक्त्यपचये यथा—रघुवंशे । परव्यसने यथा—जरासंधव्यसनिनः शिशुपालस्योच्छेदाय वासुदेवस्य शिशुपालवधे । अभिमतार्थसिद्धये यथा—विष्णोः पारिजातहरणाय हरिविजये, यथा वा—दिव्यास्त्रलाभायार्जुनस्य किरातार्जुनीये इति । संग्रामस्त्रिधा—समः, विषमः, समविषम इति । तत्र समः—द्वन्द्वयुद्धे चतुरङ्गयुद्धे च । द्वन्द्वयुद्धं यथा—रामरावणयोः । चतुरङ्गयुद्धं कुरुपाण्डवानाम् । विषमो यथा—रामस्य खरदूषणत्रिशिरोभिः सह 'चतुर्दश सहस्राणि चतुर्दश च राक्षसाः । हतान्येकेन रामेण मानुषेण पदातिना ॥' इति । समविषमो यथा—महेश्वरार्जुनयोः किरातार्जुनीये रघुमघोनोर्वा रघुवंश इति । अभ्युदयस्त्रिधा—अरिविजयः, स्त्रीलाभः, पुत्रोत्पत्तिः । तत्रारिविजयो द्विधा—शत्रूच्छेदेन, तदुपनत्या च । स पूर्वो रावणवधादौ द्वितीयो हरिविजयादौ । स्त्रीलाभो यथा—इन्दुमतीस्वयंवरे । पुत्रलाभो दिलीपस्य रघुवंश इति । **वनविहारेत्यादिना** सोद्दीपनविभावस्य संभोगशृङ्गारस्योपदेशात् । मन्त्रभूतप्रयाणसंग्रामाभ्युदयादिभिस्तानर्थानधिगम्य तैस्तैर्विलासविशेषैः कामसेवया तदुपयोगः कर्तव्य इति शिक्षयति । तत्र वनविहारो द्विधा—मृगयादिः, पुष्पावचयादिश्च । तत्राद्यो यथा—दशरथस्य रघुवंशे । द्वितीयो यथा—यदूनां शिशुपालवधे, अप्सरसां वा किरातार्जुनीय इति । जलक्रीडा द्विधा—एकस्य वा बह्वीभिः स्वयोषाभिर्बहूनां वा बह्वीभिर्यथास्वमङ्गनाभिः । तत्राद्या यथा—कार्तवीर्यस्य नर्मदा-

उभयवैचित्र्यं यथा—रसानुरूपसंदर्भत्वम्, अर्थानुरूपच्छन्दस्त्वम्, समस्तलोकरञ्जकत्वम्, सदलंकारवाक्यत्वम्, देशकालपात्रचेष्टाकथान्तरानुषञ्जनम्, मार्गद्वयानुवर्तनं च, इति ।

---

याम्, कुशस्य वा सरय्वाम् । द्वितीया यथा—अप्सरसां सिद्धसिन्धौ, यदूनां रैवतकह्रद इति । मधुपानं द्विधा—गोष्ठीगृहे, वासभवने च । तत्राद्यं हरिविजये शिशुपालवधे च । द्वितीयं किरातार्जुनीये कुमारसंभवे च ॥ मानापगमो द्विधा—प्रायत्निकः, नैमित्तिकश्च । प्रायत्निको हरिविजये सत्यभामायाः । नैमित्तिको रामान्तिकान्निशाचरीणां सेतुबन्धे । रतोत्सवोऽपि द्विधा—सामान्यतः, विशेषतश्च । सामान्यतः किरातार्जुनीये शिशुपालवधे च । विशेषतः कुमारसंभवे जानकीहरणे च । **रसानुरूपसंदर्भत्वमिति** । अनेन रतिप्रकर्षे कोमलः, उत्साहप्रकर्षे प्रौढः, क्रोधप्रकर्षे कठोरः, शोकप्रकर्षे मृदुः, विस्मयप्रकर्षे तु स्फुटः शब्दसंदर्भो विरचनीय इति उपदिशन् 'नैकमोजः प्रसादो वा रसभावविदः कवेः' इति ख्यापयति । **अर्थानुरूपच्छन्दस्त्वमिति** । अनेन शृङ्गारे द्रुतविलम्बितादयः, वीरे वसन्ततिलकादयः, करुणे वैतालीयादयः, रौद्रे स्रग्धरादयः, सर्वत्र शार्दूलविक्रीडितादयो निबन्धनीया इत्युपदिशति । **समस्तलोकरञ्जकत्वमिति** । अनेनालौकिकतां परिहरन् प्रीतिनिबन्धनस्य प्रबन्धस्य लोके प्रतिष्ठया प्रयासवैयर्थ्यमपाकरोति । **सदलंकारवाक्यत्वमिति** । अनेन यद्यप्युपात्तलक्षणानां गुणानामलंकाराणां च स्वरूपसांकर्येणैव काव्यशोभाकरत्वम् तथाप्यलंकारवत्त्वैवं भारं भूयसा उद्वोढुमलमित्येतदुपर्युपदेशेनोपपादयति । **देशेत्यादिना** परिपूर्वाङ्गेऽपि संविधानके देशकालाद्यविरोधेन तद्वर्णनादिकं निर्दिशति । तत्र देशान्तरानुषञ्जनं यथा—'मुदे मुरारेरमरैः सुमेरोरानीय यस्योपचितस्य शृङ्गैः । भवन्ति नोद्दामगिरां कवीनामुच्छ्रायसौन्दर्यगुणा मृषोद्याः ॥' कालान्तरानुषञ्जनं यथा—'सपदि हरिसखैर्वधूनिदेशाद्ध्वनितमनोरमवल्लकीमृदङ्गैः । युगपदनुगुणस्य संनिधानं वियति वने च यथायथं वितेने ॥' पात्रान्तरानुषञ्जनं यथा—'करिष्यसे यत्र सुदुष्कराणि प्रसत्तये गोत्रभिदस्तपांसि । शिलोच्चयं चारुशिलोच्चयं तमेष क्षणान्नेष्यति गुह्यकस्त्वाम् ॥' चेष्टान्तरानुषञ्जनं यथा—'मदश्च्युतः श्यामितगण्डलेखाः क्रामन्तविक्रान्तनराधिरूढाः । सहिष्णवो वेह युधामभिज्ञा नागा नगोच्छ्रायमिवाक्षिपन्तः ॥' कथान्तरानुषञ्जनं यथा—'कुसुमायुधपत्नि दुर्लभस्तव भर्ता न चिराद्भविष्यति । शृणु येन स कर्मणागतः सुलभत्वं हरलोचनार्चिषाम् ॥' मार्गद्व-

तत्र संस्कृतभाषानिबद्धसर्गबन्धं हयग्रीववधादि । प्राकृतभाषानिबद्धाश्वासकबन्धं सेतुबन्धादि । अपभ्रंशभाषानिबद्धसंधिबन्धमब्धिमथनादि । ग्राम्यापभ्रंशभाषानिबद्धावस्कन्धकबन्धं भीमकाव्यादि । प्रायोग्रहणात्संस्कृतभाषयाप्याश्वासकबन्धो हरिप्रबन्धादौ न दुष्यति । प्रायोग्रहणादेव रावणविजय हरिविजय-सेतुबन्धेष्वादितः समाप्तिपर्यन्तमेकमेव च्छन्दो भवतीति । गलितकानि तु तत्र कैरपि विदग्धमानिभिः क्षिप्तानीति तद्विदो भाषन्ते ।

**नायकख्यातस्ववृत्ताभाव्यर्थशंसिवक्त्रादिः सोच्छ्वासा संस्कृता गद्ययुक्ताख्यायिका ।**

---

**यानुवर्तनमिति** । अनेन महाकवीनां समयमुपलक्षयति । तत्र 'गुणतः प्रागुपन्यस्य नायकं तेन विद्विषाम् । निराकरणमित्येष मार्गः प्रकृतिसुन्दरः ॥ वंशवीर्यश्रुतादीनि वर्णयित्वा रिपोरपि । तज्जयान्नायकोत्कर्षकथनं च धिनाति नः ॥'[1] इति । (अर्थाः का) एतानि नगरवर्णनादीनि समुच्चयप्रयोज्यानि, उत विकल्पप्रयोज्यानि । समुच्चयप्रयोज्यानीति चेत्, किरातार्जुनीयादौ किरातार्णवार्कोदयविवाहकुमाराभ्युदयादीनामभणनम् । अर्थाविकल्पेन यथेष्टकल्पनाया मत्वप्रसङ्गः । तत्र अङ्ककलज(?)स्योभत्रापीष्टत्वात् । यदा कथाशरीरस्य परिपूर्णाङ्गसंभवस्तदा समुच्चयेन । यदान्यथा तदा विकल्पेनेति । तत्रापि केषांचिदङ्गानां विकल्पोऽपरेषां नियमेन प्रयोगः । यानि पुरुषार्थस्यार्थकामादेरासन्नोपकारीणि तानि नियमतः प्रयुज्यन्ते । यथा मन्त्रदूतप्रयाणादिनायकाभ्युदयादयः । यथा च शैलर्तूद्यानगमनजलक्रीडाचन्द्रोदयमधुपानरतोत्सवादयः । तानि च यदि कथाशरीरे न स्युस्तदा कथान्तरानुषङ्गेनापि कर्तव्यानीति प्रचक्षते ॥ **वृत्तमिति** । वृत्तशब्दः सदाचार एव वर्तते । तदेव मनुराह—'न विद्यया केवलया तपसा वापि पात्रता । यस्य वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तितम् ॥' इति । तदाह—**वक्रेति** । वक्त्रशब्देन वक्त्रप्रकरणं लक्ष्यते । तद्यथा—'अनुष्टुभि नाश्वाश्वातुर्यायो वक्त्रम्' इत्यादि । नजज्ञा अपरवक्त्रम् । द्गोषष्ठो जोन्तो वा पूर्वेऽर्धे परे षष्ठो लार्यागाथेत्येवं छन्दोनुशासनलक्षितानि । वक्त्रं यथा

---

१. 'धिनोति' स्यात्. २. प्रमादपतितं स्यात्.

धीरप्रशान्तस्य गाम्भीर्यगुणोत्कर्षात्स्वयं स्वगुणोपवर्णनं न संभवती- त्यर्थाद्यस्यां धीरोद्धतादिना नायकेन स्वकीयवृत्तं सदाचाररूपं चेष्टितं कन्यापहारसंग्रामसमागमाभ्युदयभूषितं मित्रादि वा व्याख्यायते, अना- गतार्थशंसीनि च वक्त्रापरवक्त्रार्यादीनि यत्र बध्यते, यत्र चावान्तरप्रकर- णसमाप्तावुच्छ्वासा बध्यन्ते, सा संस्कृतभाषानिबद्धा अपादः पदसंतानो गद्यं तेन युक्ता । युक्तग्रहणादन्तरान्तरा प्रविरलपद्यनिबन्धेऽप्यदुष्टा आख्यायिका । यथा—हर्षचरितादि ।

**धीरशान्तनायका गद्येन पद्येन वा सर्वभाषा कथा ।**

आख्यायिकावन्न स्वचरितव्यावर्णकोऽपि तु धीरशान्तो नायकः । तस्य तु वृत्तमन्येन कविना वा यत्र वर्ण्यते, सा च काचिद्गद्यमयी । यथा—कादम्बरी । काचित्पद्यमयी । यथा—लीलावती । यावत्सर्व- भाषा काचित्संस्कृतेन काचित्प्राकृतेन काचिन्मागध्या काचिच्छूरसेन्या काचित्पैशाच्या काचिदपभ्रंशेन बध्यते सा कथा ।

प्रबन्धमध्ये परप्रबोधनार्थं नलाद्युपाख्यानमिवोपाख्यानमभिनयन् पठन् गायन् यदैको ग्रन्थिकः कथयति तद्गोविन्दवदाख्यानम् ।

तिरश्चामतिरश्चां वा चेष्टाभिर्यत्र कार्यमकार्यं वा निश्चीयते तत्पञ्च- तन्त्रादिवत् धूर्तविटकुट्टिनीमतमयूरमार्जारिकादिवच्च **निदर्शनम्** ।

---

हर्षचरिते—'निजवर्षाहितस्नेहा बहुभक्तजनान्विता । सुकाला इव जायन्ते प्रजाः पुण्येन भूभृतः ॥' अपरवक्त्रं यथा—'तरलयसि दृशं किमुत्सुकामकलुष- मानसवासलालिते । अवतर कलहंसि वापिकां पुनरपि यास्यसि पङ्कजालयम् ॥' आर्या यथा—'सकलमहीभृत्कम्पकृदुत्पद्यत एक एव नृपवंशे । विपुलेऽपि पृथुप्र- तिमो दन्त इव गणाधिपस्य मुखे ॥' **उपाख्यानमिति** । यदाह—'नवसावि- त्रीषोडशराजोपख्यानवत्प्रधावन्तः । अन्यप्रबोधनार्थं यदुपख्यानं ह्युपाख्यानम् ॥' **आख्यानमिति** । तथा चाह—'आख्यानकसंज्ञां तल्लभते यद्यभिनयन् पठन् गायन् । ग्रन्थिक एकः कथयति गोविन्दवदवहिते सदसि ॥' **निदर्श-**

१. 'वद स्यात्.

प्रधानमधिकृत्य यत्र द्वयोर्विवादः सोऽर्धप्राकृतरचिता चेटकादिवत्प्रवह्लिका ।

प्रेतमहाराष्ट्रभाषया क्षुद्रकथा गोरोचनानङ्गवत्यादिवन्मतल्लिका । यस्यां पुरोहितामात्यतापसादीनां प्रारब्धानिर्वाहे उपहासः सापि मतल्लिका ।

यस्यां पूर्वं वस्तु न लक्ष्यते पश्चात्तु प्रकाश्यते सा मत्स्यहसितादिवन्मणिकुल्या ।

एकं धर्मादिपुरुषार्थमुद्दिश्य प्रकारवैचित्र्येणानन्तवृत्तान्तवर्णनप्रधाना शूद्रकादिवत्परिकथा ।

मध्यादुपान्ततो वा ग्रन्थान्तरप्रसिद्धमितिवृत्तं यस्यां वर्ण्यते सेन्दुमत्यादिवत्खण्डकथा ।

समस्तफलान्तेतिवृत्तवर्णना समरादित्यवत्सकलकथा ।

एकतरचरिताश्रयेण प्रसिद्धकथान्तरोपनिबन्ध उपकथा ।

---

नमिति । तथा च—'निश्चीयते तिरश्चामतिरश्चां वापि यत्र चेष्टाभिः । कार्यमकार्यं वा तन्निदर्शनं पञ्चतंत्त्वादि ॥ धूर्तविटकुट्टनीमतमयूरमार्जारिकादिकं लोके । कार्याकार्यनिरूपणरूपमिह निदर्शनं तदपि ॥' प्रवह्लिकेति । तथा च—'यत्र द्वयोर्विवादः प्रधानमधिकृत्य ज्ञायते सदसि । सार्धप्राकृतरचिता प्रवह्लिका चेटकप्रभृति ॥' मन्थल्लिकेति[२] । तथा च—'क्षुद्रकथा मन्थल्ली[३] प्रेतमहाराष्ट्रभाषया भवति । गोरोचनेव कार्या सानङ्गवतीव वार्कचेटीभिः ॥' सापीति । तथा च—'यस्यामुपहासः स्यात्पुरोहितामात्यतापसादीनाम् । प्रारब्धानिर्वाहे सापि हि मन्थल्लिका[४] भवति ॥' मणिकुल्येति । तथा च—'मणिकुल्यायां जलमिव च लक्ष्यते यत्र पूर्वतो वस्तु । पश्चात्प्रकाशते सा मणिकुल्यामिवादिः[५] ॥' परिकथेति । तथा च—'पर्यायेण बहूनां यत्र प्रतियोगिनां कथाः कुशलैः । श्रूयन्ते शूद्रकवज्जिगीषुभिः परिकथा सा तु ॥' खण्डकथेति । तथा च—'ग्रन्थान्तरप्रसिद्धं यस्यामितिवृत्तमुच्यते विबुधैः । मध्यादुपान्ततो वा सा खण्डकथा यथेन्दुमती ॥' सकलकथेति । चरितमित्यर्थः॥ उपकथेति । तथा च—'यत्राश्रित्य कथान्तरमतिप्रसिद्धं निबध्यते कविभिः । चरितं विचित्र-

---

१. 'तन्त्रादि' मूले. २-३-४. 'मत' स्यात्. ५. 'मत्स्यहसितादिः' मूलानुरोधात्.

लम्भाङ्किताद्भुतार्था नरवाहनदत्तादिचरितवद्बृहत्कथा ।

एते च कथाप्रभेदा एवेति न पृथग्लक्षिताः ।

**गद्यपद्यमयी साङ्का सोच्छ्वासा चम्पूः ।**

संस्कृताभ्यां गद्यपद्याभ्यां रचिता प्रायेण यान्यङ्कनानि स्वनाम्ना परनाम्ना वा कविः करोति तैर्युक्ता उच्छ्वासनिबद्धा चम्पूः । यथा वासवदत्ता दमयन्ती वा ।

**अनिबद्धं मुक्तकादि ।**

मुक्तक-संदानितक-विशेषक-कलापक-कुलक-पर्याकोश-प्रभृत्यनिबद्धम्

एषां लक्षणमाह—

**एकद्वित्रिचतुश्छन्दोभिर्मुक्तकसंदानितकविशेषककलापकानि ।**

एकेन च्छन्दसा वाक्यार्थसमाप्तौ मुक्तकम् । यथा अमरुकस्य शृङ्गारशते रसस्यन्दिनो मुक्तकाः । द्वाभ्यां संदानितकम् । त्रिभिर्विशेषकम् । चतुर्भिः कलापकम् । एतानि च विशेषानभिधानात्सर्वभाषाभिर्भवन्ति ।

**पञ्चादिभिश्चतुर्दशान्तैः कुलकम् ।**

छन्दोभिरिति वर्तते। मुक्तकानामेव प्रघट्टकोपनिबन्धः । अवान्तरवाक्यसमाप्तावपि वसन्ताद्येकवर्णनीयोद्देशेन मुक्तकानामुपनिबन्धः । पर्यासा कोशेषु प्रचुरं दृश्यते । स्वपरकृतसूक्तिसमुच्चयः कोशः । यथा सप्तशतकादिः। एकप्रघट्टके एककविकृतः सूक्तिसमुदायो वृन्दावनमेघदूतादिः संघातः । विप्रकीर्णवृत्तानामेकत्र संधानं यदुवंशदिलीपवंशादिवत्संहिता । एवमनन्तोऽनिबद्धगणः स आदिग्रहणेन गृह्यते। इह च सत्संधित्वं शब्दार्थवैचित्र्ययोगश्च महाकाव्यवदाख्यायिकाकथाचम्पूष्वपि द्रष्टव्यः ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायामलंकारचूडामणिसंज्ञस्वोपज्ञकाव्यानुशासनवृत्तावष्टमोऽध्यायः समाप्तः ।

---

मन्यत्सोपकथा चित्रलेखादिः ॥' बृहत्कथेति । तथा च—'लम्भाङ्किताद्भुतार्था पिशाचभाषामयी महाविषया । नरवाहनदत्तादेश्चरितमिव बृहत्कथा भवति ॥'

इत्याचार्यश्रीहेमचन्द्रविरचिते विवेकेऽष्टमोऽध्यायः ।

---

**समाप्तोऽयं ग्रन्थः।**

# अकाराद्यनुक्रमेण सटीककाव्यानुशासनोदाहरणानुक्रमणिका[१]।


| | पृष्ठाङ्काः |
|---|---|
| अकलिततपस्ते ... ... | १८२ |
| अकुण्ठोत्कुण्ठ ... ... | २४९ |
| अखण्डमण्डल. (टी.) ... | २७९ |
| अगस्त्यचुलुके (टी.) ... | १५२ |
| अगा गां गाङ्ग ... ... | २५९ |
| अगूढसाहसस्फुट ... ... | ३३६ |
| अग्रादपि मध्या (टी.) ... | २३७ |
| अघौघं नो नृसिंहस्य... ... | १३० |
| अङ्काधिरोपित(टी.)... ... | १७ |
| अङ्गं चन्दन (टी.) ... ... | ८ |
| अङ्गानि चन्दन (टी.) ... | २३७ |
| अङ्गुलीभिरिव केश ... ... | १२२ |
| अचिराभामिव ... ... | २९८ |
| अजित्वा सार्णवां ... ... | ९३ |
| अज्ज विहरी चम ... ... | ७५ |
| अज्ञानाद्यदि वा (टी.) ... | २३६ |
| अट्टहासच्छले (टी.)... ... | १५ |
| अण्णं लडहत्तणयं ... ... | ३१८ |
| अण्णत्थ वच्च ... ... | ६५ |
| अतथ्यान्यपि (टी.)... ... | ९ |
| अतन्द्रचन्द्रा ... ... ... | ५१ |

| | पृष्ठाङ्काः |
|---|---|
| अतिक्रान्तर्तु (टी.) ... ... | १६१ |
| अतिथिं नाम ... ... ... | १८७ |
| अतिनवधूरोष (टी.)... ... | १५८ |
| अत्ता इत्थनु ... ... | ३६ |
| अत्युच्चपदाध्यासः ... ... | ३०४ |
| अत्रान्तरे किमपि ... ... | ३७१ |
| अत्रान्तरे रणित (टी.) ... | ३३८ |
| अत्रावदात (टी.) ... ... | १५७ |
| अत्रोपचारः (टी.) ... ... | १५८ |
| अथ जयाय नु ... ... | ३३६ |
| अथ पथि (टी.) ... ... | १८ |
| अथ स ललित (टी.) ... | ३९६ |
| अदृश्यन्त पुरस्तेन ... ... | ३४० |
| अद्यैवावां रण (टी.) ... ... | ३९७ |
| अधरदलं ते ... ... ... | २८० |
| अधरे बिन्दुः (टी.)... ... | ८ |
| अधिकरतल ... ... ... | १७२ |
| अधिकृतभाषाचारं ... ... | ३८८ |
| अनङ्गः पञ्चभिः ... ... | ११६ |
| अनङ्गमङ्गलगृहा ... ... | २०१ |
| अनङ्गरङ्गप्रतिमं ... ... | २४७ |


१. अस्यामनुक्रमणिकायां यत्र यत्र पङ्क्तौ '(टी.) एतच्चिह्नमुपलभ्यते, तदुदाहरणं टीकाणामन्वेषणीयम्. यत्र च पङ्क्तौ चिह्नं नास्ति, तदुदाहरणं मूले मृग्यम्.

| | पृष्ठाङ्काः |
|---|---|
| अनङ्गलङ्घल (टी.) ... ... | २६० |
| अनणुरणन्म (टी.) ... ... | २२१ |
| अनध्यवसिता (टी.) ... | ३१५ |
| अनवरतनयण (टी.) ... | २३७ |
| अनाधिव्याधि ... ... | २९० |
| अनुत्तमानुभावस्य ... ... | २१९ |
| अनुरागवती ... ... ... | २७८ |
| अनेकनर्तकीयोज्यं ... ... | ३९४ |
| अन्तर्व्याजं (टी.) ... ... | १६२ |
| अन्त्रप्रोतबृहत् ... ... | २०२ |
| अन्त्रैः कल्पित (टी.) ... ... | १४२ |
| अन्यत्र यूयं ... ... ... | ४४ |
| अन्यत्र व्रजतीति ... ... | ३६९ |
| अन्यदा भूषणं ... ... | ३७८ |
| अन्ययान्यव ... ... ... | ३३४ |
| अन्यास्ता गुणरत्न ... ... | १७७ |
| अपङ्किलतटावरः (टी.) ... | १५७ |
| अपाङ्गतरले दृशौ (टी.) ... | ३१८ |
| अपि काञ्चिच्छ्रुता ... ... | २१ |
| अपूर्वमधुरामोद ... ... | २२५ |
| अप्यवस्तुनि ... ... ... | ४८ |
| अप्यसज्जन ... ... ... | ३२४ |
| अभिधाय तदा ... ... | २२० |
| अभिनवकुश ... ... ... | १६२ |
| अमरसदनादि(टी.) ... ... | ४ |
| अमी ये दृश्यन्ते ... ... | ३०९ |
| अमुं कनकवर्णाभं ... ... | ६२ |
| अमृतममृतं ... ... ... | १७७ |

| | पृष्ठाङ्काः |
|---|---|
| अम्भोजगर्भ (टी.) ... ... | ४०० |
| अयमहिमरुचिः (टी.) ... | २४० |
| अयमेकपदे ... ... ... | ६५ |
| अयं पद्मासनासीनः ... ... | २०० |
| अयं प्रसूनो (टी.) ... ... | १५९ |
| अयं मार्तण्डः किं ... ... | ३३७ |
| अयं स भुवन (टी.) ... ... | १९ |
| अयं स रसनोत्कर्षी ... | १२६–१४० |
| अयि जीवितनाथ ... ... | ९१ |
| अयि दीयर ... ... ... | ३१८ |
| अयि पश्यसि सौध ... ... | १७७ |
| अरण्ये निर्जने (टी.) ... | ११ |
| अरातिविक्रमा ... ... | २९३ |
| अरुचिर्निशया विना (टी.) ... | ३५१ |
| अरे रामाहस्ता ... ... | २३१ |
| अर्थः स एव (टी.) ... ... | १० |
| अर्थित्वे प्रकटी ... ... | २२२ |
| अलसल्लुलित ... ... ... | ११२ |
| अलमलप्रतिमात्रं ... ... | ३९९ |
| अलसवलितैः ... ... ... | १६३ |
| अलंकारं शङ्का ... ... | २७१ |
| अलंकृत जरा (टी.) ... ... | २० |
| अलं स्थित्वा श्मशाने ... ... | ६२ |
| अलिकुलकुन्त ... ... | ३०२ |
| अलिनीलाल (टी.) ... ... | २६० |
| अलिभिरञ्जन ... ... ... | १७० |
| अलिवलयैर ... ... ... | २९६ |
| अलोलकमले ... ... ... | २८० |

| | पृष्ठाङ्काः |
|---|---|
| अलौकिकमहा (टी.) ... ... | २७९ |
| अवन्तिनाथो (टी.) ... ... | २११ |
| अवितथमनो (टी.) ... ... | २८९ |
| अविरलकरवाल ... ... | १२६ |
| अविरलकमल ... ... | ३४७ |
| अवीनादौ (टी.) ... ... | १० |
| असूच्यत रणत्कारः (टी.) ... | १६१ |
| असतामहितो (टी.) ... ... | २५६ |
| असंतोषा दिवाकृष्ट ... ... | २९७ |
| असंशयं क्षत्रपरि ... ... | १०५ |
| असावुदयमामूढः ... ... | २७७ |
| असिमात्रसहायोयं ... ... | ३३३ |
| असूच्यत शरत्कालः ... ... | १६१ |
| असोढा तत्काले (टी.) ... | १२७ |
| असौ मरुच्चुम्बति ... ... | २१० |
| अस्त्युत्तरस्यां (टी.) ... ... | १५४ |
| अस्स(ण्ण)त्थ ... ... | ६५ |
| अस्माकमद्य ... ... | ९२-१९२ |
| अस्मान्साधु ... ... ... | १११ |
| अस्सिञ्जहीहि (टी.) ... ... | ३५३ |
| अस्मिन्नेव लता ... ... | ८७ |
| अहयं उज्जुअ ... ... | १२८ |
| अहमेव गुरुः ... ... ... | ३२२ |
| अहं त्वा यदि ... ... | ३२१ |
| अहिणवमण ... ... ... | १६९ |
| अहो विशालं ... ... ... | ३२६ |
| अहो संसारनैर्घृण्य ... ... | ३०८ |
| आकम्पितक्षि (टी.) ... ... | १५२ |

| | पृष्ठाङ्काः |
|---|---|
| आकाशगङ्गा (टी.) ... ... | १८६ |
| आकाशयान (टी.) ... ... | १४७ |
| आक्षिपन्त्यरविन्दानि ... | ३४९ |
| आख्यानकसंज्ञं (टी.) ... | ४०६ |
| आगच्छागच्छ (टी.) ... ... | ११६ |
| आगममणिसुद (टी.) ... | २७६ |
| आच्छिद्य कुसु (टी.) ... | १० |
| आज्ञा शक्रशिखा ... ... | २४ |
| आज्ञासु जगन्मातः (टी.) ... | २६९ |
| आतन्वत्सरसां (टी.) ... ... | ८ |
| आत्तमात्तमधि (टी.) ... ... | ७९ |
| आत्मनश्च परेषां च ... ... | २७५ |
| आत्मानुभूतशंसी ... ... | ३८९ |
| आदाय कर्णं ... ... ... | ३३९ |
| आदाय चापमचलं (टी.) ... | २७९ |
| आदाय वारि परितः ... ... | ३१० |
| आदावञ्जनपुञ्ज ... ... | १६३ |
| आदित्योऽयं स्थितो ... ... | ६२ |
| आनन्दममन्दामिमं ... ... | ३२५ |
| आनन्दसंदोह (टी.) ... ... | १२ |
| आपातमारत (टी.) ... ... | १७ |
| आपृष्टासि व्यथ ... ... | १२१ |
| आमूलयष्टेः (टी.) ... ... | १५२ |
| आयस्ता कलहं ... ... | ३६५ |
| आयाते दयिते ... ... | ११० |
| आयुर्घृतं नदी पुण्यं ... ... | ३४७ |
| आरोग्यमाप्त (टी.) ... ... | ७४ |
| आर्द्राविले व्रज (टी.) ... | १४७ |

| पृष्ठाङ्काः | | | |
|---|---|---|---|
| आर्यस्यास्त्रघनौघ (टी.) ... | ९ | इयं गेहे लक्ष्मीः ... ... | ३६१ |
| आलिख्य पत्र... ... ... | १३ | इयं सा लोलाक्षी (टी.) ... | १४२ |
| आलिङ्गितस्त्वत्र ... ... | १९९ | ईदृशस्य भवतः (टी.) ... | २३५ |
| आलोकमार्गं ... ... ... | १०८ | ईषन्मीलित ... ... ... | ३७५ |
| आलोलामल ... ... ... | ३७७ | ईसाकलुस्स (टी.) ... ... | ५८ |
| आवर्जिता किंचिदिव... ... | २९८ | उच्चिणसु पडियं ... ... | ३८ |
| आवर्तशोभी (टी.) ... ... | ८ | उत्कण्ठा परितापो. ... ... | ३४१ |
| आशुलम्बित ... ... ... | १९६ | उत्कम्पिनी ... ... ... | ६३ |
| आश्लिष्टभूमिं ... ... ... | ११४ | उत्कृत्योत्कृत्य... ... ... | ९५ |
| आश्लेषित्ताः ... ... ... | १५८ | उत्कृत्योत्कृत्य... ... ... | ११० |
| आश्लेषे प्रथमं ... ... | १२० | उत्खातनिर्मल (टी.)... ... | १५ |
| आसाइयं अणा ... ... | ३७ | उत्तमाधममध्येषु ... ... | १०७ |
| आसीदन्ति भ (टी.)... ... | १४ | उत्तानोच्छून ... ... ... | १९४ |
| आसीद्दैत्यो हय (टी.)... ... | १७ | उत्तालताडकोत्पात. ... ... | ३५६ |
| आसीदञ्जनमत्रेति (टी.) ... | ३५२ | उत्तिष्ठन्त्या रतान्ते(टी.) | २१०–३७७ |
| आसीन्नाथपिता (टी.) ... | ३३१ | उत्पक्ष्मणोर्नयन ... ... | १२० |
| आस्तीकोऽस्ति (टी.)... ... | १४८ | उत्पत्तिर्जमदग्नितः ... ... | ३५८ |
| आस्थानकुट्टिम (टी.) ... | १५ | उत्पादकः क (टी.) ... ... | १२ |
| आहतं कुचतटे (टी.) ... | २३५ | उत्फुल्लकमल ... ... ... | १८१ |
| आहूतस्याभिषेकाय ... | ३५८ | उत्सिक्तस्य तपः ... ... | १०३ |
| आहूतेषु विहंगमेषु ... ... | १७१ | उदयति विततोर्ध्व. ... | ३०४–३२० |
| औत्सुक्येन कृतत्वरा... ... | १३३ | उदान्वच्छिन्ना ... ... | १७१ |
| इतः स दैत्यः प्राप्तश्रीः ... | ४८ | उदाररचना (टी.) ... ... | २४९ |
| इतस्ततो भषन् (टी.) ... | ४०१ | उदितो रसादमय ... ... | ३६२ |
| इतो वसति केशवः ... ... | ३१३ | उदीच्यचण्डा (टी.) ... ... | १५८ |
| इदं ते केनोक्तं ... ... | २२६ | उद्दण्डोदरपुण्ड(टी.) ... ... | १३ |
| इदं भासां भर्तुः (टी.) ... | १५५ | उद्दामोत्कलिकां ... ... | २२ |
| इन्द्रस्त्वं तव बाहू ... ... | ३०१ | उद्देशोऽयं ... ... ... | ४३ |

| | पृष्ठाङ्काः |
|---|---|
| उद्धतपुरुषप्रायः ... ... | ३८५ |
| उद्धृतैर्निभृत ... ... | ६-३६३ |
| उद्भिद् ही च सं (टी.) ... | ६ |
| उद्भेदस्तस्य बीजस्य ... ... | ३९७ |
| उद्यता जयिनि ... ... | १७४ |
| उद्ययौ दीर्घिका ... ... | १९७ |
| उद्यानानां मूक (टी.) ... | १५८ |
| उन्नतः प्रोल्लसद्वारः ... ... | ५० |
| उन्मज्जन्मकर ... ... ... | १६४ |
| उपपन्नं ननु शिवं (टी.) ... | २१२ |
| उपरि घनं घन ... ... | ३०३ |
| उपपरिसरं ... ... ... | २२७ |
| उपशमफला (टी.) ... ... | ५ |
| उपानयन्ती (टी.) ... ... | १५७ |
| उपोढरागेण ... ... ... | ३२८ |
| उप्पह जायाए (टी.) ... | ३११ |
| उभौ यदि व्यो ... ... | २९६ |
| उरसि निहितस्तारो ... ... | ३६९ |
| उर्वशी ह्याप्सराः (टी.) ... | ६ |
| उषःसु वधुरा (टी.) ... ... | १५७ |
| ऊरुद्वन्द्वं सरस (टी.) ... | ११ |
| ऊरुद्वयं कदल (टी.)... ... | ११ |
| ऊर्ध्वाक्षिताप (टी.)... ... | २१६ |
| ऋजुतां नयतः ... ... | ३३० |
| एकत्तो रुअइ (टी.) ... ... | १४२ |
| एकत्रासनसंगतिः ... ... | ३६५ |
| एकत्रिधा वससि (टी.) ... | ३५० |
| एकस्मिञ्शयने ... ... ... | ८३ |

| | पृष्ठाङ्काः |
|---|---|
| एकस्यामेव तनौ ... ... | ३२३ |
| एकं ज्योतिर्दृशौ (टी.) ... | १५४ |
| एकं ध्याननिमीलनात् (टी.)... | १४२ |
| एण्यःस्थलीषु (टी.) ... ... | १६० |
| एतत्सुन्दरि (टी.) ... ... | १६ |
| एतास्ता मल (टी.) ... ... | १५ |
| एतां पश्य पुरः ... ... | ३५६ |
| एतेनाक्ष्णा प्रवि (टी.) ... | १४२ |
| एते लक्ष्मण ... ... ... | १०८ |
| एते वयममी दा (टी.) ... | २३९ |
| एते वयममी दाराः (टी.) ... | ३५८ |
| एद्दहमित्तत्थणिया ... ... | ४८ |
| एमे जाणातिस्स (टी.) ... | १८० |
| एवमालि निगृहीत ... ... | १०६ |
| एवंवादिनि देवर्षौ ... ... | १०८ |
| एष ब्रह्मा सरोजे (टी.) ... | ९ |
| एसो वि ण सच्च ... ... | ३१९ |
| एहि गच्छ पतोत्तिष्ठ... ... | १३८ |
| एह्येहि वत्स (टी.) ... ... | ११६ |
| ऐरावणं स्पृशति ... ... | २०८ |
| औत्सुक्यगर्भा (टी.)... ... | ३१२ |
| औत्सुक्येन कृ ... ... ... | १३३ |
| कः कः कुत्र ... ... ... | १७५ |
| कण्ठस्य तस्यास्तनु ... ... | ३०७ |
| कण्ठाश्लेषं समासाद्य (टी.) ... | ४०० |
| कथमवनिप (टी.) ... ... | ३४ |
| कदा नौ संगमो ... ... ... | ४८ |
| कनककलश ... ... ... | ९१ |

पद्याद्यः पृष्ठाङ्काः

कपाटविस्तीर्ण ... ... २२४
कपोले जानक्या (टी). ... १५५
कपोले जानक्या (टी). ... ३५७
कपोलफलकावस्याः ... ... २९७
कमनेकतमादा (टी.)... ... २७४
कमलदलैरधरैरिव ... ... २९६
कमलिनीमिलिनी (टी.) ... २५७
कमले इव लोचने ... ... १६४
करकिसलयं ... ... ... ३७६
करभाः शरभाः (टी.) ... १६०
करिष्यसे यत्र (टी.)... ... ४०४
करिहस्तेन संबाधे ... ... १९३
करुणरसप्रायकृतो ... ... ३८८
करेण ते रणे... ... ... २५४
करोषि तास्त्व (टी.)... ... २६९
कर्कन्धूनां ना (टी.) ... ... १५८
कर्कन्धुफलमुच्चिनोति... ... ३४८
कर्कोटः कोटि (टी.) ... ... १४७
कर्णाभ्यर्ण (टी.) ... ... ८
कर्ता द्यूतच्छलानां (टी). ... ३५०
कर्तुमक्षमया टी. ... ... २१३
कर्पूर इव दग्धोपि ... ... ३२५
कर्पूरचूर्णं सह (टी.) ... ... १६०
कर्पूरधूलिधवल (टी.) ... १४२
कलिकलुष (टी.) ... ... ७
कलुषं च तवाहिते ... ... ३४४
कल्लोलवेल्लित ... ... ... २३०
कश्चित्कराभ्या ... ... १०९

पद्याद्यः पृष्ठाङ्काः

कश्चित्कराभ्या ... ... ३५७
कष्टा वेधव्यथा ... ... १७४
कस्त्वं भोः कथयामि (टी.) ... ३१०
कस्माद्भारतमिष्टं (टी.) ... १४८
कस्मिन्कर्मणि... ... ... १९९
कस्स व न होइ ... ... ४०
काङ्क्षन्पुलोमत (टी.)... ... २६३
काञ्चयाः पूरो (टी.) ... ... १५५
कातर्यं केवला... ... ... २०८
कान्ते तल्पमुपा ... ... ११३
कामं भवन्तु (टी.) ... ... १५
कामे कृतमदा (टी.) ... ... २७५
कायं खाइइ ... ... ... १७८
का विसमा दिव्वगई ... ३३४
काश्मीरीगात्र (टी.) ... ... १५५
काष्ठानिमेषो (टी.) ... ... १५५
काहमस्मि गुहा (टी.) ... २७२
किं करोमि क ... ... ११५
किं किं सिंहस्ततः ... ... ११५
किं गौरि मां ... ... ... २८१
किंचिद्वच्मि न ... ... २४९
किं ददातु किमश्नातु... ... ३२६
किं लोभेन वि (टी.)... ... २१८
किं वृत्तान्तैः परगृह ... ... ३३१
किमञ्जनेनायत (टी.)... ... २१६
किमपि किमिह (टी.)... ... १२
किमपि किमपि ... ... ८८
किमपेक्ष्य फलं ... ... १९७

| | पृष्ठाङ्काः |
|---|---|
| किमीहः किंकायः (टी.) ... | ८ |
| किमुच्यतेऽस्य ... ... | १९८ |
| कियतापि यत्र (टी.)... ... | १० |
| कियन्मात्रं जलं (टी.) ... | १६६ |
| किसलयमिव... ... ... | १११ |
| कीर्तिं स्वर्गफलां(टी.)... ... | ४ |
| कुन्दे मन्दस्तमा (टी.) ... | १६१ |
| कुमुदकमलनील ... ... | ३०७ |
| कुमुदवनमप (टी.) ... ... | १२ |
| कुरङ्गीवाङ्गानि... ... | ४–२९९ |
| कुरु लालस भू ... ... | २७३ |
| कुर्यां हरस्यापि ... ... | १६६ |
| कुवबालिया ए ... ... | ३६२ |
| कुलममलिनं (टी.) ... ... | ३४२ |
| कुललालिलाव (टी.)... ... | २७४ |
| कुविन्दस्त्वं तावत् ... ... | २०१ |
| कुसुमसौरभ ... ... ... | ३४७ |
| कुसुमायुधपत्नि (टी.)... ... | ४०४ |
| कृच्छ्रेणोरुयुगं (टी.) ... ... | १२५ |
| कृतककुपितैः (टी.) ... ... | २१३ |
| कृतवानसि ... ... ... | १८२ |
| कुतो दूरादेव... ... ... | ३७७ |
| कृष्णार्जुनानुरक्तापि ... ... | ३४९ |
| कृष्णेनाम्ब गतेन ... ... | ९६ |
| केदार एव कलमाः (टी.) ... | १५७ |
| केनेमौ दुर्विदग्धेन ... ... | १७१ |
| केलीकन्दलितस्य ... ... | ८० |
| कैलासगौरं (टी.) ... ... | १६ |

| | पृष्ठाङ्काः |
|---|---|
| कोपात्कोमल... ... ... | २५ |
| कोपान्मानिनि (टी.)... ... | ११ |
| कोऽयं द्वारि हरिः ... ... | २८१ |
| कोराविऊण ... ... ... | २२३ |
| कोऽलंकारः सतां ... ... | ३४४ |
| कौटिल्यं कचनिचये ... ... | ३४४ |
| क्रीडन्ति प्रसरन्ति ... ... | २८० |
| क्रोधं प्रभो संहर (टी.) ... | १४९ |
| क्रौञ्चाद्रिरुद्दामदषद्. ... | ३२३ |
| क्वचिदग्रे प्रसरता ... ... | २०० |
| क्व सूर्यप्रभवो वंशः ... ... | ३०३ |
| क्वाकार्यं शशलक्ष्मणः ... | १०४ |
| क्षणं कामज्वर ... ... | २८९ |
| क्षणं स्थिता पक्ष्मसु ... ... | २३५ |
| क्षितिं खनन्तो (टी.)... ... | १५७ |
| क्षितिविजित (टी.) ... ... | २५५ |
| क्षितिस्थिति (टी.) ... ... | २५५ |
| क्षिप्तो हस्तावलग्नः ... ... | १३७ |
| क्षीणः क्षीणोऽपि (टी.) ... | ३३२ |
| क्षुद्रकथा मन्थल्ली (टी.) ... | ४०७ |
| क्षुद्रः कोऽयं तपस्वी (टी.) ... | २३६ |
| क्षेमः स्तोकोऽपि (टी.) ... | १४ |
| खमिव जलं ... ... ... | १८२ |
| खं येऽभ्युज्जलयन्ति ... ... | ५१ |
| खं वस्ते कलवि (टी.) ... | १६१ |
| खरेण खण्डिता ... ... | ३५६ |
| खर्जूरजम्बू (टी.) ... ... | १५९ |
| खाद्यो द्यग्निर्विधु (टी.) ... | २६२ |

